स्वात्मनि न किञ्चिदिति प्रमाणोपारोहेणैव अस्य स्थितिः स्यात् इति—एवकाराशयः, एवंविधा चेयं मेये एवासक्त्या रक्तकालीशब्दव्यपदेश्या, इति अत्रापि तन्नाम्ना आगम उच्यते, इति प्राच्येन संबन्धः, तदुक्तं श्रीपञ्चशतिके—

'न चैषा चक्षुषा ग्राह्या न च सर्वेन्द्रियस्थिता ।
निर्गुणा निरहङ्कारा रञ्जयेद्विश्वमण्डलम् ॥
सा कला तु यदुत्पन्ना सा ज्ञेया रक्तकालिका ।' इति ।

श्रीक्रमस्तोत्रेऽपि—

'महाविनोदार्पितमातृचक्रवीरेन्द्रकासृग्रसपानसक्ताम् ।
रक्तीकृतां च प्रलयात्यये तां नमामि विश्वाकृतिरक्तकालीम् ॥'

इति । ननु सर्वत्रैवान्यत्र श्रीसृष्टिकाल्यनन्तरं श्रीस्थितिकाल्या अभिधानम्, यदुक्तं श्रीसार्धशतिके

'द्वादशारं महाचक्रं रश्मिरूपं प्रकीर्तितम् ।
नाम चैव प्रवक्ष्यामि रश्मीनां तु यदास्थितम् ॥
सृष्टिः स्थितिश्च संहारो रक्तकाली तथैव च ।
स्वकाली यमकाली च मृत्युकाली तथैव च ॥

---

= अवभासनात्मिका अभिव्यक्ति है । प्रमेय अपने आप में कुछ नहीं है इसलिये प्रमाण पर चढ़कर ही इसकी स्थिति होती है. यह एवकार का आशय है । इस प्रकार की यह प्रमेय (पदार्थों) में ही आसक्ति के कारण रक्तकाली शब्द से व्यवहार्य होती है । उस नाम से यहाँ भी आगम में कही जाती है—ऐसा पूर्व से सम्बन्ध है। पञ्चशतिक में कहा गया है—

"यह चक्षु से ग्राह्य नहीं है = और न सब इन्द्रियों में स्थित है । निर्गुण, निरहङ्कार (यह) विश्वमण्डल को रक्त करती है । वह कला जिससे उत्पन्न है वह रक्तकालिका कही जाती है ।"

क्रमस्तोत्र में भी

"महाविनोद के कारण अर्पित मातृचक्र के वीरेन्द्र के द्वारा रक्तपान में आसक्त तथा प्रलय समाप्त होने पर अनुरक्त उस विश्वाकृतिरक्तकाली को मैं प्रमाण करता हूँ ।"

प्रश्न—अन्यत्र सब जगह सृष्टिकाली के बाद स्थितिकाली का कथन है । जैसा कि सार्धशतिक में कहा गया है—

"द्वादशारमहाचक्र रश्मिरूप कहा गया है । रश्मियों का जो निश्चित नाम है (उसे मैं) कह रहा हूँ । सृष्टिकाली स्थितिसंहाररक्तकाली, स्वकाली, यमकाली, मृत्युकाली, रूद्रकाली, परमार्ककाली मार्तण्डकाली, कलाग्निरुद्रकाली और

रुद्रश्च परमार्कश्च मार्तण्डश्च ततः परः ।
कालाग्निरुद्रकाली च महाकाल्यभिधा पुनः ॥
महाभैरवशब्दश्च घोराशब्दस्ततः परः ।
चण्डकालीपदं चान्ते त्रयोदश उदाहृताः ॥'

इति, तत्कथमिह तदनन्तरं श्रीरक्तकाल्यादिनिर्देशः कृतः, एवं हि आगमविरोधः स्यात् ? सत्यं—किं तु आगमे संवित्क्रमगोपनार्थम् आलूनविशीर्णतयैवमभिधानं, यथा श्रीपञ्चशतिके स्थितिक्रमेऽपि, यदेव चानुसृत्य महागुरुभिः पूजाक्रमः प्रक्रान्तः, इह तु पूजाक्रमगोपनाय स्वशय्ययैव स्थापनं, यदधिकृत्य संवित्क्रमः परिनिष्ठितिमियात्, अत एवागमैकशरणतया प्रवृत्तेऽपि श्रीक्रमस्तोत्रे ग्रन्थकृतां संवित्क्रममेव प्रदर्शयितुं तद्विवृतौ श्रीसृष्टिकाल्यादिस्तुतिश्लोकव्याख्यानानन्तरं श्रीरक्तकाल्या भगवत्याः अतः परं स्थितिः संभाव्यते इत्याद्युक्तम्, इह पुनः संवित्क्रमाभिप्रायेणैव मुक्तकण्ठमेवमभिधानम्, इति न कश्चिद्दोषः ॥ १४९ ॥

एवं प्रमेयगतं स्थितिस्वरूपमभिधाय संहारस्वरूपमप्यभिधातुमाह—

**......................तामन्तर्मुखतारसात् ।**
**संजिहीर्षुः स्थितेर्नाशं कलयन्ती निरुच्यते ॥ १५० ॥**

सैव परा संविद्देवी, तां—प्रमाणरूपां रक्त्यपरपर्यायां स्थितिम्, अन्तः

---

महाकाली । महाभैरव शब्द और उसके बाद घोर शब्द और अन्त में तेरहवाँ चण्डकाली पद कहा गया है ।''

तो यहाँ फिर उसके बाद रक्तकाली आदि का निर्देश कैसे किया गया क्योंकि ऐसा करने पर आगम से विरोध होता है ? सत्य है । किन्तु आगम में संवित्क्रम को छिपाने के लिये कटे बिखरे की भाँति कथन कर दिया गया । जैसे कि पञ्चशतिक में स्थिति क्रम में भी जिसका अनुसरण कर महागुरुओं ने पूजा का क्रम चलाया है । यहाँ पूजा के क्रम को छिपाने के लिये अपनी शय्या (= व्यवस्था) से ही स्थापना की गई । जिसके आधार पर संवित्क्रम परिपूर्ण हो जाय । इसीलिये केवल आगम के शरण होने के कारण क्रम स्तोत्र के प्रवृत्त होने पर ग्रन्थकारों को संवित्क्रम को ही दिखलाने के लिये उसकी व्याख्या में सृष्टिकाली आदि की स्तुति वाले श्लोकों की व्याख्या के बाद रक्तकाली भगवती इसके बाद स्थिति सम्भव है—इत्यादि कहा गया है । और यहाँ संवित्क्रम के अभिप्राय से ही स्वतन्त्रतया ऐसा कथन है इसलिये कोई दोष नहीं है ॥ १४९ ॥

प्रमेयगत स्थिति के स्वरूप का कथन कर संहारस्वरूप को बतलाने के लिये कहते हैं—

उस (= स्थिति) की अन्तर्मुखता के आकर्षणवश संहरण की इच्छा वाली वह स्थिति का नाश करने वाली कही जाती है ॥ -१५० ॥

प्रमात्रेकात्मतायामौन्मुख्ये 'ज्ञातो मयार्थः' इति स्वात्मविश्रान्तिचमत्कारात्मनो रसात्, संहर्तुमिच्छुः—आत्मसाच्चिकीर्षुः, अत एव 'स्थितेर्नाशं कलयन्ती निरुच्यते' श्रीक्रमभट्टारकादौ स्थितिनाशकालीशब्दव्यपदेश्येत्यर्थः, यदुक्तं तत्र—

'वाजिद्वयस्वीकृतवातचक्र-
प्रकान्तसङ्घट्टगमागमस्थाम् ।
शुचिर्ययास्तं गमितोऽर्चिषा तां
शान्तां नमामि स्थितिनाशकालीम् ॥' इति ।

श्रीपञ्चशतिकेऽपि—

'हासिनी पौद्गली येयं बालाग्रशतकल्पना ।
कल्पते सर्वदेहस्था स्थितिः सर्गस्य कारिणी ॥
यदुत्पन्ना तु सा देवी पुनस्तत्रैव लीयते ।
तां विद्धि देवदेवेश स्थितिकालीं महेश्वर ॥' इति ॥ १५० ॥

एवं प्रमेयगतं संहारस्वरूपं निरूप्य, अनाख्यस्वरूपमप्याह—

**ततोऽपि संहाररसे पूर्णे विघ्नकरीं स्वयम् ।**
**शङ्का यमात्मिकां भागे सूते संहरतेऽपि च ॥ १५१ ॥**

---

वही परा संवित् देवी उस = प्रमाणरूप रक्ति अपरपर्याय (= नाम) वाली स्थिति को अन्तः = प्रमाता के साथ एकात्मतारूप औन्मुख्य के होने पर 'मैंने अर्थ जान लिया' ऐसे स्वात्मविश्रान्तिचमत्कार रूप रस के कारण, संहार करने की इच्छा वाले = आत्मसात् करने की इच्छावाले, इसलिये स्थिति का नाश करने वाली कही जाती है = क्रमभट्टारक आदि में स्थितिनाशकाली शब्द से व्यवहार्य होती है । जैसा कि वहाँ कहा गया है—

"दो घोड़ों (= हंसः सोऽहं-रूपी प्राण अपान) के द्वारा स्वीकृतवातचक्र के द्वारा प्रारम्भ किये गये सङ्घट्ट के गमनागमन में स्थित, जिसके द्वारा अपनी किरण से शुचि (= प्राणरूपी सूर्य) अस्त को पहुँचाया गया उस शान्त स्थितिनाशकाली को (मैं) प्रणाम करता हूँ ॥"

पञ्चशतिक में भी—

"जो यह हास तथा पुद्गल वाली, बाल के सौवें अग्रभाग के (समान) कल्पना वाली, सब देह में स्थित, स्थिति एवं सृष्टि करने वाली वह देवी जहाँ से उत्पन्न होती है फिर वहीं लीन हो जाती है, हे देवदेवेश महेश्वर ! उसे स्थितिकाली जानो ॥"

प्रमेयगत संहारस्वरूप का निरूपण कर अनाख्यास्वरूप को कहते हैं—

इसके बाद संहाररस के परिपूर्ण होने पर (वह संवित्) स्वयं

ततः—श्रीस्थितिनाशकाल्युदयानन्तरमपि, एवमुक्तरूपस्य संहारस्य प्रमातृ-तात्मनि रसे, पूर्णे—परां धारामधिरूढे, सैव परिगृहीतपरिमितप्रमातृभूमिका संवित्, स्वयं—स्वस्वातन्त्र्यमहिम्ना, बहिरौन्मुख्यात्मन्येकस्मिन् भागे, यमयति 'इदं कार्यमिदं न' इति नियतावव्स्थापयति, इति यमो—विकल्पः, तदनुप्राणिता येयं शङ्का—शास्त्राणामानन्त्यात् कार्याकार्यविभागस्य विपर्ययेणापि दर्शनात् किङ्कर्तव्यतया मूढतात्मा विचिकित्सा, अत एव

'............................शङ्काया विघ्नभाजनम् ।'

इत्याद्युक्त्या स्वस्वरूपानुप्रवेशे विघ्नकरी, तां सूते—प्रमेयकक्ष्यापर्यन्त-मुल्लासयति, अन्तर्—औन्मुख्यात्मनि द्वितीयस्मिन्भागे च, संहरते—विगलित-नियतिसङ्कोचविधिनिषेधाविषयपरसंविदात्मना स्वेनैव विकस्वरेण रूपेण परिस्फुरति

'रासभ्या मूत्रकाले तु योनिः प्रस्पन्दते यथा।'

इत्याद्युक्तवदनवरतमेव सङ्कोचविकासमयतया अनियतेन रूपेणाख्यातुमशक्या, इत्येवं यमं कलयन्ती 'यमकालीति' निरुच्यते, इति पूर्ववदाक्षेपः, तदुक्तं श्रीपञ्चशतिके—

---

नियम-स्वरूप शङ्का को (अपने) एक अंश में उत्पन्न करती है (और फिर उसका) संहार (= समाधान) करती है ॥ १५१ ॥

उसके बाद = स्थिति नाशकाली के उदय के बाद भी, उक्तरूप संहार की प्रमातृता वाले रस के, पूर्ण होने पर = पर धारा में पहुँचने पर, वही = परिमित प्रमाता की भूमि का ग्रहण करने वाली, संवित्, स्वयं = अपने स्वातन्त्र्य की महिमा से, बाह्य उन्मुखता वाले एकभाग में, नियमन करती है = 'यह करना चाहिये यह नहीं, ऐसा नियति में स्थापित करती है । यम = विकल्प, उससे अनुप्राणित जो यह शङ्का = शास्त्रों के अनन्त होने के कारण कार्याकार्य विभाग का विपरीत रूप से भी दर्शन होने के कारण किंकर्त्तव्यता के कारण मूढ़ता रूप विचिकित्सा, इसलिये—

"..................शङ्का के कारण विघ्न का पात्र ।"

इत्यादि उक्ति के अनुसार अपने स्वरूप के अनुप्रवेश के बारे में विघ्न करने वाली उसको, उत्पन्न करती है = प्रमेय कक्ष्या तक उल्लासित करती है । भीतर = औन्मुख्यात्मक द्वितीय भाग में, संहार करती है = नियति के सङ्कोच को हटा कर विधिनिषेध के अविषय पर संविदात्मक अपने विकस्वर रूप से स्फुरित होती है—

"जैसे मूत्रत्याग के समय गधी की योनि हिलती है ।"

इत्यादि कथन के समान निरन्तर सङ्कोचविकासमय होने के कारण अनियत रूप से कहने में अशक्य, इस प्रकार के यम की रचना करने वाली 'यमकाली' कही जाती है—यह पहले से आक्षेप कर लेना चाहिये । वही पञ्चशतिक में कहा गया—

'यमरूपस्वरूपस्था रूपातीतस्वरूपगा ।
सा कला लीयते यस्यां यमकाली तु सा स्मृता ॥' इति ।

श्रीक्रमस्तोत्रेऽपि—

'सर्वार्थसङ्कर्षणसंयमस्य यमस्य यन्तुर्जगतो यमाय ।
वपुर्महाग्रासविलासरागात् सङ्कर्षयन्तीं प्रणमामि कालीम् ॥'

इति । एवं प्रमेयांशग्रासरसिकं सृष्ट्यादिदेवीचतुष्टयं निरूपितम् ॥ १५१ ॥

इदानीं तु प्रमाणांशभक्षणप्रवणं संहारादिदेवीचतुष्कं निरूपयति—

**संहृत्य शङ्कां शङ्क्यार्थवर्जं वा भावमण्डले ।**
**संहृतिं कलयत्येव स्वात्मवह्नौ विलापनात् ॥ १५२ ॥**

एवं यमात्मिकां शङ्कां संहृत्य शङ्कास्थानं वा शङ्क्यान्—कार्याकार्यरूपानर्थान्, परिहृत्य—उपसंहृत्य, तन्नान्तरीयकवृत्त्या सा परैव संविद्देवी स्वात्मवह्निसात्कारलक्षणाद्विलापनाद्धेतोः, निखिले भावमण्डले, संहृतिं कलयत्येव, येन—श्रीपञ्चशतिकादौ संहारकालीशब्दव्यपदेश्या, इति तन्नाम्ना आगम उच्यते, इति दूरेण संबन्धः, तदुक्तं तत्र—

---

"यमरूप स्वरूप में स्थित, रूपातीत स्वरूपगमिनी वह कला जिसमें लीन हो जाती है वह यमकाली कही गयी है ।"

क्रमस्तोत्र में भी—

"गमनशील संसार के नियमन के लिये समस्त अर्थ के सङ्कर्षण के संयम वाले यम के शरीर का, महाग्रास के विलास के राग के कारण सङ्कर्षण करने वाली काली को (मैं) प्रणाम करता हूँ ।"

इस प्रकार प्रमेयांश का ग्रास करने में रसिक सृष्टि आदि चार देवियों का निरूपण हुआ ॥ १५१ ॥

अब प्रमाणांश के भक्षण में कुशल संहार आदि चार देवियों का निरूपण करते हैं—

शङ्का अथवा शङ्कनीय अर्थ का संहार का आत्मवह्नि में विलय करने के कारण समस्त भाव मण्डल में संहार की लीला करती है ॥ १५२ ॥

इस प्रकार यमात्मिका शङ्का अथवा शङ्का के स्थान का संहार कर शङ्कनीय = कार्याकार्यरूप अर्थ, का परिहार कर = उपसंहार कर, उसकी नान्तरीयक वृत्ति से वह परा ही संविद् देवी स्वात्मवह्नि सात्कार लक्षण वाले विलापन के कारण, समस्त भावमण्डल में संहार करती ही है जिससे (वह) श्रीपञ्चशक्ति आदि में संहार काली शब्द से व्यवहार्य होती है = आगम में उसके नाम से कही जाती है—यह दूर से सम्बन्ध है । वही वहाँ कहा गया है—

'चण्डकाली शुद्धवर्णा यामृतग्रसनोद्यता ।
भावाभावविनिर्मुक्ता विश्वसंहाररूपिणी ॥
यत्र सा याति विलयं सा च संहारकालिका ।' इति।

श्रीक्रमस्तोत्रेऽपि—

'उन्मन्यनन्ता निखिलार्थगर्भा या भावसंहारनिमेषमेति ।
सदोदिता सत्युदयाय शून्यां संहारकाली मुदितां नमामि ॥'

इति ॥ १५२ ॥

कीदृक् चात्रोपसंह्रियमाणानां भावानां कलनम् ?—इत्याशङ्क्याह—

**विलापनात्मिकां तां च भावसंहृतिमात्मनि ।**
**आमृशत्येव येनैषा मया ग्रस्तमिति स्फुरेत् ॥ १५३ ॥**

स्वयमेव हि नाम भावानां संविद्विलीनतोत्पादनात्मा संहारो—यद्बहीरूपता-विलापनेन प्रमाणदशामधिशयानायां संवित्तावभेदेन परामर्शनं, यत एवेयं संवित् 'मयैतदर्थजातमात्मनि अभेदेनावभासितम्' इत्येवं स्फुरत्तारूपा भवेत्, इत्युक्तं— 'येनैषा मया ग्रस्तमिति स्फुरेदिति'

इयमेव हि संविदः प्रमाणरूपतायां सृष्टिः—यत् तत्तदर्थारूषिता चकास्या-

---

"चण्डकाली शुद्धवर्ण की है जो अमृत के ग्रसन में उद्यत है । (वह) भाव अभाव से रहित, विश्वसंहाररूपिणी है । वह जिसमें लीन होती है वह संहारकाली है।"

क्रमस्तोत्र में भी—

"उन्मनी, अनन्त, समस्त पदार्थों को गर्भ में रखने वाली, जो भावसंहारनिमेष को प्राप्त करती है । जो सदा उदित होते हुए भी उदय के लिये (उद्यत रहती है उस) शून्य प्रसन्न संहारकाली को (मैं) प्रणाम करता हूँ ॥ १५२ ॥"

उपसंह्रियमाण पदार्थों की कैसी कलना होती है ?—यह शङ्का कर कहते हैं—

और उस विलापनरूपा भावसंहृति का अपने अन्दर परामर्श करती है जिस कारण यह (संविद्) मेरे द्वारा यह (भाव मण्डल) ग्रसित किया गया—इस रूप में स्फुरण करती है ॥ १५३ ॥

स्वयं ही पदार्थों की संविद्विलीनता को उत्पन्न करने वाला संहार = बाह्यरूपता के विलापन के कारण प्रमाण दशा को प्राप्त संविद् में अभेदेन परामर्श, जिस कारण यह संवित् 'मेरे द्वारा यह पदार्थसमूह अपने में अभिन्न रूप से अवभासित हैं' ऐसी स्फुरत्तारूपा होती है । इसलिये कहा गया—'जिस कारण यह 'मेरे द्वारा ग्रसित किया गया, ऐसा स्फुरण करती है ।

दिति ॥ १५३ ॥

एवं प्रमाणगतं सृष्टिस्वरूपमभिधाय, स्थितिस्वरूपमप्यभिधातुमाह—

**संहार्योपाधिरेतस्याः स्वस्वभावो हि संविदः।**
**निरुपाधिनि संशुद्धे संविद्रूपेऽस्तमीयते ॥ १५४ ॥**

एवं संहरणीये संहृतेऽपि, एतस्याः—प्रमाणमय्या निखिलार्थसंहर्तृत्वात् मृत्युरूपायाः संविदः, संहारणीयकार्याकार्याद्यर्थविच्छिन्नो, यः स्वः सर्वत एवासाधारणः स्वभावः, स स्वांशसंविद्विश्रान्तिमन्तरेण स्थितिमेव न यायात्, इति प्रमेयमिव प्रमाणे निरुपाधिनि—तत्तदर्थानारूषिते, अत एवं संशुद्धे—प्रमात्रात्मनि, संविद्रूपे 'अस्तमीयते'—तत्रैव रक्तिरूपां विश्रान्तिं गच्छेत् येनास्याः संहर्तृत्वमेव व्यवतिष्ठते, इत्येवं मृत्युरूपाया अपि संविदः कलनात् 'मृत्युकालिति' सर्वत्रेयमुद्घोष्यते, इत्यर्थत एतल्लब्धम्, तदुक्तं श्रीपञ्चशतिके—

'ओमित्येषा कुलेशानी मृत्युकालान्तपातिनी ।
मृत्युकालकला यस्याः प्रविशेद्विग्रहं शिव ॥
तदा सा मृत्युकालीति ज्ञेया गिरिसुताधव ।' इति ।

---

यही प्रमाणरूपता में संविद् की सृष्टि है कि (वह) भिन्न-भिन्न पदार्थों से आरूषित होकर प्रकाशित हो ॥ १५३ ॥

इस प्रकार प्रमाणगत सृष्टि के स्वरूप का कथन कर स्थिति के स्वरूप को बतलाने के लिये कहते हैं—

संहार्य की उपाधि इस संविद् का अपना स्वभाव है । (यह) उपाधिरहित शुद्ध संविद् रूप में लीन हो जाता है ॥ १५४ ॥

संहरणीय का संहार होने पर भी इसके = प्रमाणमयी के, समस्त पदार्थों की संहर्त्री होने के कारण मृत्युरूप संविद् का, संहरणीय कार्याकार्य आदि अर्थ से अवच्छिन्न जो अपना = सर्वतः असारण, स्वभाव वह अपने अंश संविद् की विश्रान्ति के विना स्थिति को ही प्राप्त नहीं होगा इसलिये प्रमेय के समान प्रमाण के भी उपाधिरहित = भिन्न-भिन्न अर्थ से अनारूषित, इसलिये शुद्ध प्रमातारूप संविद् रूप में अस्त होती है = उसी में रक्तिरूपविश्रान्ति को प्राप्त होती है जिससे इसकी संहर्तृता व्यवस्थित होती है । इस प्रकार मृत्युरूपा भी संविद् की कलना के कारण यह सवर्त्र मृत्युकाली कही में जाती है—यह अर्थात् ज्ञेय है । वही पञ्चशतिक में कहा गया है—

"हे गिरिसुता के पति ! हे शिव ! यह कुलेशानी मृत्युकालान्तपातिनी (जब) जिस (= व्यक्ति) के शरीर में मृत्युकालकला के रूप में प्रवेश करती है तब उसे मृत्युकाली समझना चाहिये ।"

श्रीक्रमस्तोत्रेऽपि—

'ममेत्यहङ्कारकलाकलापविस्फारहर्षोद्धतगर्वमृत्युः ।
ग्रस्तो यया घस्मरसंविदं तां नमाम्यकालोदितमृत्युकालीम् ॥'

इति ॥ १५४ ॥

एवं प्रमाणगतं स्थितिस्वरूपमभिधाय संहारस्वरूपमप्याह—

**विलापितेऽपि भावौघे कञ्चिद्भावं तदैव सा।**
**आश्यानयेद्य एवास्ते शङ्कासंस्काररूपकः ॥ १५५ ॥**
**शुभाशुभतया सोऽयं सोष्यते फलसंपदम् ।**

एवं हि निरुपाधिशुद्धप्रमातृसंविद्विश्रान्त्या संहृतेऽपि कार्यरूपे भावौघे, सा परा संवित् तद्विलापसमनन्तरमेव कञ्चित् प्रतिनियतरूपं भावमाश्यानयेत्— विलापितत्वेऽपि कथञ्चिद्भेदावभासात्मतया घनतामापादयेत्, य एवाश्यानीभूतः संस्काररूपतया वर्तमानः 'शङ्का आस्ते—तन्निमित्ततया अवतिष्ठते इत्यर्थः, यद्वशादेव विचित्राचारप्रदर्शकेष्वनन्तेषु शास्त्रेषु कार्याकार्यविभागनिश्चयमलभमानस्य प्रमातुः

'अधर्मं धर्ममिति या बुद्ध्यते तमसावृता ।'

---

क्रमस्तोत्र में भी

"जिसके द्वारा 'यह मेरा है'—ऐसा अहङ्कार कला के समूह के विस्फार से (उत्पन्न) हर्ष के कारण उद्धत गर्वरूप मृत्यु ग्रस्त कर ली जाती है उस घस्मर संविद् अकालोदित मृत्युकाली को (मैं) प्रणाम करता हूँ" ॥ १५४ ॥

इस प्रकार प्रमाणगत स्थितिस्वरूप का कथन कर संहारस्वरूप का भी कथन करते हैं—

भावसमूह के विलापित होने पर उसी समय वह (= परासंवित्) किसी भाव को घनीभूत कर देती है वही (= घनीभूत भाव) संस्काररूप में शङ्का बन जाता है । वह (= संस्कार) शुभ अशुभ रूप में फल को उत्पन्न करता है ॥ १५५-१५६- ॥

इस प्रकार निरुपाधि शुद्ध प्रमातृ संविद् की विश्रान्ति के द्वारा कार्यरूप भावसमूह के संहृत होने पर भी वह परा संवित् उसके विलापन के बाद ही किसी प्रतिनियतरूप वाले भाव को क्षीण करती है = विलापित होने पर भी किसी प्रकार भेदावभासरूप से घनता को प्राप्त करती है । जो क्षीण हुआ संस्काररूप से वर्त्तमान 'शङ्का' है = उसके कारण के रूप में रहता हुआ जिसके वश विचित्र आचार के प्रदर्शक अनन्त शास्त्रों में कार्याकार्य विभाग के निश्चय को प्राप्त न करने वाले प्रमाता का

इत्यादिदृशा यदेव यथा हृदये प्ररोहति तदेव तस्य तथा फलेत्—इति स एवायं शङ्कानिमित्तं कार्याकार्यलक्षणप्रतिनियतभावाहितः संस्कारः प्रबुद्धः सन् शुभाशुभरूपां फलसंपदं जनयिष्यते, येनायं लोकः स्वर्निरयादिपात्रतया सुखदुःखादिभोक्तृतामियात् ॥ १५५ ॥

नन्वेवं शङ्कमानः प्रमाता कार्याकार्ययोर्निश्चयानुत्पादात् न किञ्चिदप्यनुतिष्ठेत्, इति किमस्य शुभाशुभतया फलेत् ?—इत्याशङ्क्याह—

**पूर्वं हि भोगात्पश्चाद्वा शङ्केयं व्यवतिष्ठते॥ १५६ ॥**

इह सर्वस्य लोकस्य नानात्वेन कार्याकार्ययोः श्रुतेः सुखदुःखाद्यनुभवात् पूर्वमेव तावच्छङ्का जायते 'किमनुष्ठेयं मया' इति, स्वसंस्कारप्रबोधतारतम्यात्तु कुत्रचिदेव कस्यचित्तन्निश्चयः समुत्पद्यते, तदनुष्ठानादस्य शुभाशुभफलभागितया सुखदुःखादौ भोक्तृता स्यात्, तदनन्तरं च दुःखाद्युपघातादेवमस्य शङ्का संप्रजायते 'यदकार्यमेव नूनं मया कार्यतयानुष्ठितं, येनैवमस्मि दुःखपराभूतो जातः' इति, ततश्च पूर्वं कृतमपि ब्राह्मणालम्भनादि तत्कालमेवेयं शङ्का शिथिलयति, येन तदनुशयवशाच्छुभमशुभं वा फलं दातुं न शक्नुयात् ॥ १५६ ॥

---

"तमोगुण (= असान) से आवृत जो अधर्म को धर्म समझती है ।"

इत्यादि दृष्टि से हृदय में जो भी जैसे उत्पन्न होता है उसको वही फल उस प्रकार से मिलता है—इस प्रकार वही यह शङ्का का कारण, कार्यअकार्यरूप निश्चित भाव से दृढ़ किया गया संस्कार प्रबुद्ध होकर शुभ अशुभ रूप फल सम्पदा को उत्पन्न करता है जिससे यह लोक स्वर्गनरक आदि के पात्र के रूप में सुख-दुःख आदि भोग को प्राप्त होता है ॥ १५५ ॥

प्रश्न—इस प्रकार से सन्देह में पड़ा हुआ प्रमाता कार्याकार्य के निश्चय के उत्पन्न न होने से कुछ भी नहीं करेगा तो कौन इसको शुभ अशुभ फल देगा ? यह शङ्का कर कहते हैं—

यह शङ्का भोग के पहले अथवा बाद में होती है ॥ -१५६ ॥

सब लोगों को, कार्य अकार्य के भिन्न-भिन्न रूप में सुनने के कारण सुख -दुःख आदि के अनुभव से पूर्व ही शङ्का उत्पन्न होती है 'मुझे क्या करना चाहिये ?' और अपने संस्कार के प्रबोध के तारतम्य से कहीं किसी को उसका निश्चय होता है, फिर उसके अनुष्ठान से इसको शुभाशुभफल का भागी होने के कारण सुख दुःख आदि का भोग मिलता है । उसके बाद दुःख आदि के उपघात के कारण इसको ऐसी शङ्का होती कि मैंने अकार्य को कार्य की भाँति (= कार्य समझ कर) किया जिससे इस प्रकार से पराभूत हुआ । इसके बाद पहले की गई ब्रह्महत्या आदि को तत्काल यह शङ्का शिथिल कर देती है जिससे उसके पश्चात्तापवश शुभ या अशुभ फल देने में समर्थ नहीं होता ॥ १५६ ॥

तदेवाह—

**अन्यदाश्यानितमपि तदैव द्रावयेदियम् ।**
**प्रायश्चित्तादिकर्मभ्यो ब्रह्महत्यादिकर्मवत्॥ १५७ ॥**

न च मितः प्रमाता तदीयो वा चैतसिकः शङ्काख्यो धर्म एवं विधातुमुत्सहते, इत्याह—

**रोधनाद् द्रावणाद्रूपमित्थं कलयते चितिः ।**

एवं संस्कारात्मनावस्थितस्यापि अर्थस्य, रोधनाद् द्रावणाच्च इयं परा संविदुक्तेन प्रकारेण रूपं कलयन्ती श्रीक्रमसद्भावट्टारके 'रुद्रकालीति' व्यपदिष्टेत्यर्थः' तदुक्तं तत्र—

'इदं सर्वमसर्वं यत्संहारान्तं तु नित्यशः ।
कुटिलेक्षणरेखान्तग्रस्तमस्तमितं च यत् ॥
ततो बोधरसाविष्टा स्पन्दमाना निराकुला ।
दीधितीनां सहस्त्रं यद्वमेच्च पिबते भृशम् ॥
सा कला लीयते यस्यां रुद्रकालीति सा स्मृता ।'

इति, श्रीपञ्चशतिकादौ पुनरियं 'भद्रकाली' इत्युक्ता, इति नाम्नि भेदेऽपि

---

वही कहते है—

जैसे ब्रह्महत्या आदि कर्म को प्रायश्चित आदि के द्वारा (क्षीण किया जाता है उसी प्रकार) यह संवित् दूसरे घनीभूत (संस्कारों) को उसी क्षण क्षीणकर देती है ॥ १५७ ॥

परिमित प्रमाता या उसका मन में उत्पन्न शङ्का नामक धर्म ऐसा नही कर सकता—यह कहते हैं—

इस प्रकार (यह) संवित् रोधन और द्रावण के द्वारा सृष्टि करती रहती है अर्थात् (वह) घनीभूत को द्रावित और द्रावित को घनीभूत करती रहती है ॥ १५८- ॥

इस प्रकार संस्कार के रूप में स्थित भी पदार्थ के रोधन अथवा द्रावण के कारण यह परा संवित् उक्त प्रकार से रूप की रचना करती हुई 'क्रमसद्भावभट्टारक' में रुद्र काली कही गई है । वही वहाँ कहा गया है—

"जो यह सब या कुछ (= अंशमात्र) प्रतिदिन संहारपर्यन्त कुटिल दृष्टि की रेखा के अन्त से ग्रस्त है और जो अस्त होता है उसके बाद बोधरस से आविष्ट स्पन्दमान और निराकुल हजारों किरणें जिसका अत्यधिक वमन करती हैं और पान करती हैं वह कला जिसमें लीन होती है वह रुद्रकाली कही गई है ।"

वस्तुनि न कश्चिद्भेदो, यद्रुद्धं वार्थं द्रावयेद्भिन्नं वा, इत्युभयथापि अर्थानुगम इति, तदुक्तं तत्र—

'गमागमसुगम्यस्था महाबोधावलोकिनी ।
मायामलविनिर्मुक्ता विज्ञानामृतनन्दिनी ॥
सर्वलोकस्य कल्याणी रुद्रा रुद्र सुखप्रदा।
यत्रैव शाम्यति कला ॥
भेदस्य द्रावणाद्भद्रा भद्रसिद्धिकरीति या । इति ।

श्रीक्रमस्तोत्रेऽपि—

'विश्वं महाकल्पविरामकल्पभवान्तभीमभ्रुकुटिभ्रमन्त्या ।
याश्नात्यनन्तप्रभवार्चिषा तां नमामि भद्रां शुभभद्रकालीम् ॥'

इति ॥

न केवलमियमाश्यानीभावेन रुद्धमेवार्थं द्रावयेत्, यावद् द्रावितमपि रोधयेत्, इत्याह—

**तदपि द्रावयेदेव तदप्याश्यानयेदथ ॥ १५८ ॥**

---

श्रीपञ्चशतिक आदि में यह भद्रकाली कही गई है । इस प्रकार नाम का भेद होने पर भी वस्तु में कोई भेद नहीं है जो रुद्ध अथवा भिन्न अर्थ को द्रवित करे—इस तरह दोनों प्रकार से अर्थ का अनुगम होता है । वही वहाँ कहा गया है—

"गमागम (= आवागमन) के द्वारा सुगम्यमेस्था, महाबोध का अवलोक करने वाली, मायामल से रहित, विज्ञान अमृत से आनन्दित होने वाली, समस्त लोक का कल्याण करने वाली, रुद्र को सुख देने वाली रुद्रा कला जहाँ शान्त हो जाती है वह रुद्रकाली कही गई है भेद का द्रावण करने के कारण वह भद्रा है जो कि कल्याण की सिद्धि करने वाली है ॥"

क्रमस्तोत्र में भी—

"जो महाकल्पविराम के समान संसार के संहारार्थ भयङ्कर भ्रुकुटि के भ्रमण वाली, अनन्त प्रभव की अचिस् के द्वारा विश्व का भक्षण करती है उस भद्र शुभ भद्रकाली को (मैं) प्रणाम करता हूँ ॥ १५७ ॥

यह केवल आश्यान होकर रुद्ध अर्थ का द्रावण ही नहीं करती बल्कि द्रावित का रोधन भी करती है—यह कहते हैं—

(वह पराशक्ति) घनीभूत को द्रावित और द्रावित को घनीभूत करती रहती है ॥ -१५८ ॥

एवं चात्र प्रमाणरूपत्वेऽपि तत्तदर्थसंहारकारिणः प्रमातुरेव प्राधान्यं, येन ग्रन्थकृतो रुद्रशब्दे भरः ॥ १५८ ॥

एवं प्रमाणगतं संहारस्वरूपं निरूप्य, अनाख्यस्वरूपमपि निरूपयितुमाह—

**इत्थं भोग्येऽपि संभुक्ते सति तत्करणान्यपि ।**
**संहरन्ती कलयते द्वादशैवाहमात्मनि ॥ १५९ ॥**

एवमुपसंहृतेऽपि अर्थे तत्परिच्छेदकारीणि द्वादशापि करणानि संहरन्ती संवित् अहमात्मन्यहङ्कारे, कलयते—तत्रैव लीनतां नयेदित्यर्थः ॥ १५९ ॥

ननु कान्येतानि द्वादश करणानि, किं चैषां करणत्वम् ?—इत्याशङ्क्याह—

**कर्मबुद्ध्यक्षवर्गो हि बुद्ध्यन्तो द्वादशात्मकः ।**
**प्रकाशकत्वात्सूर्यात्मा भिन्ने वस्तुनि जृम्भते ॥ १६० ॥**

बुद्ध्यन्त इति—मनसा सह, प्रकाशकत्वादिति—अर्थालोचनात्मनः, सूर्यात्मेति—

'सूर्यं प्रमाणमित्याहुः.............।'

---

इस प्रकार यहाँ प्रमाणरूप होने पर भी भिन्न-भिन्न अर्थ के संहारकर्त्ता प्रमाता की ही प्रधानता है जिससे ग्रन्थकार को रुद्र शब्द से व्यामोह है ॥ १५ ॥

प्रमाणगत संहारस्वरूप का निरूपण कर अनाख्यस्वरूप का भी निरूपण करने के लिये कहते हैं—

इस प्रकार भोग्य के संभुक्त होने पर उसके बारह करणों को भी अहङ्कार में संहृत करती है ॥ १५९ ॥

इस प्रकार अर्थ का उपसंहार होने पर भी उसका परिच्छेद करने वाले बारहों करणों का संहार करने वाली संवित् अहमात्मक अहङ्कार में कलना करती है = वहीं पर लीन हो जाती है ॥ १५९ ॥

प्रश्न—ये बारह करण कौन से हैं और इसका करणत्व क्या है ? यह शङ्का कर कहते हैं—

(पाँच) कर्मेन्द्रिय (पाँच) ज्ञानेन्द्रिय मन एवं बुद्धि यह बारह प्रकाशक होने से सूर्यरूप हैं । ये भिन्न वस्तु (= प्रमेय) के विषय में प्रमाणरूपता को प्राप्त करते हैं ॥ १६० ॥

बुद्धिपर्यन्त—मन के साथ । प्रकाशक होने से अर्थालोचनरूप (प्रकाश करने से) । सूर्य रूप—

"सूर्य को प्रमाण कहते हैं...............।"

इत्याद्युक्त्या प्रमाणरूप इत्यर्थः, भिन्नं प्रमेयं परिच्छिन्दच्च प्रमाणमुच्यते इत्युक्तं 'भिन्ने वस्तुनि जृम्भते' इति ॥ १६० ॥

नन्वहङ्कारस्यापि अन्तःकरणान्तःपातः समस्ति, इति कथं 'द्वादशैव करणानि' इत्युक्तम् ?—इत्याशङ्क्याह—

**अहङ्कारस्तु करणमभिमानैकसाधनम् ।**
**अविच्छिन्नपरामर्शी लीयते तेन तत्र सः ॥ १६१ ॥**

अहङ्कारः पुनः 'अहं शृणोम्यहं पश्यामि' इत्याद्यभिमानैकसाधनत्वात् अविच्छिन्नतया प्रमात्रभेदेन विशेषानुपादानात् सर्वस्यार्थस्य परामर्शनशीलः करणम्, इत्यसौ द्वादशविधोऽपि करणवर्गः तत्राहङ्कारे लीयते—तदेकविश्रान्तो भवेदित्यर्थः ॥ १६१ ॥

ननु करणत्वाविशेषेऽपि बुद्ध्यादिरेव करणवर्गः कथङ्कारमहङ्कारे लीयते ? इत्याशङ्कां दृष्टान्तोपदर्शनेनोपशमयति—

**यथाहि खड्गपाशादेः करणस्य विभेदिनः ।**
**अभेदिनि स्वहस्तादौ लयस्तादृदयं विधिः ॥ १६२ ॥**

---

इत्यादि उक्ति से प्रमाणरूप भिन्न = प्रमेय का परिच्छेद करने वाला प्रमाण कहा जाता है । इसलिये कहा गया—भिन्न वस्तु में प्रकट होता है ।

प्रश्न—अहङ्कार का भी अन्तःकरणों के भीतर संग्रह सम्भव है फिर कैसे बारह ही करण है—ऐसा कहा गया ?—यह शङ्का कर कहते हैं—

अभिमान का एकमात्र साधन अहङ्कार अविच्छिन्न परामर्शशील (है तथा इन्द्रियसङ्घात का) करण है । इसलिये वह (= इन्द्रियवर्ग) उस (= अहङ्कार) में लीन हो जाता है ॥ १६१ ॥

'मैं सुनता हूँ; मै देखता हूँ' इत्यादि अभिमानमात्र का साधन होने से अहङ्कार निरन्तर प्रमाता से अभिन्न होने के कारण विशेष का उपादान न होने से सभी अर्थों का परामर्शनस्वभाव वाला करण है—इसलिये यह करणवर्ग बारह प्रकार का होते हुए भी उस अहङ्कार में लीन हो जाता है = उसी में विश्रान्त हो जाता है ॥ १६१ ॥

प्रश्न—करण होने पर भी बुद्धि आदि ही करणवर्ग अहङ्कार में क्यों लीन होता है ? इस आंशका को दृष्टान्त के द्वारा शान्त करते हैं—

जिस प्रकार भेदन करने वाले खड्ग, पाश आदि करण का भेदन न करने वाले, अपने हाथ आदि में लय होता है उसी प्रकार यह विधि है ॥ १६२ ॥

इह करणस्य व्यतिरिक्तत्वे किं प्रेयत्वं सर्वस्यापि तथा प्रसंङ्गः, प्रेर्यत्वे च प्रेरणक्रियायां कर्मत्वं स्यात्, न करणत्वम्, न च अकरणिका क्रिया भवेत्, इति तत्रापि करणान्तरेण भाव्यम्, इत्यनवस्था स्यात्, तद्व्यतिरिक्तस्यापि खड्गादेः करणस्य यथा कर्त्रभिन्नहस्ताद्यभेदभावनया करणत्वं घटते, तथा अहमं-शस्पर्शितया प्रमात्रभेदिन्यहङ्कारेऽपि बुद्ध्यादेर्लयात्, इति युक्तमुक्तम्—अहङ्कारे बुद्धिर्लीयते इति ॥ १६२ ॥

एतदेव प्रकृते विश्रमयति—

**तेनेन्द्रियौघमार्तण्डमण्डलं कलयेत्स्वयम् ।**
**संविद्देवी स्वतन्त्रत्वात्कल्पितेऽहंकृतात्मनि ॥ १६३ ॥**

तेन—उक्तेन क्रमेण, स्वस्वातन्त्र्यात् स्वयं, न तु परिमितप्रमात्रा-दिव्यवधानेन, संविद्देवी द्वादशसंख्यावच्छिन्नं बुद्ध्यादीन्द्रियमार्तण्डमण्डलं देहा-दावभिनिवेशात्कल्पितेऽहंकृतात्मनि कलयेत्—तदेकमयतामापादयेत्, येन श्रीक्रमस्तोत्रादौ इयं 'मार्तण्डकाली' इत्युच्यते, तदुक्तं तत्र—

'मार्तण्डमापीतपतङ्गचक्रं पतङ्गवत्कालकलेन्धनाय ।
करोति या विश्वरसान्तकां तां मार्तण्डकालीं सततं प्रणौमि ॥'

---

करण के भिन्न होने पर (वह) प्रेर्य है या नहीं ? प्रेर्य न होने पर सब वैसे ही (= समान) होने लगेगें । और प्रेर्य होने पर प्रेरणक्रिया में कर्म होगा न कि करण, इस प्रकार क्रिया विना करण के होगी, फिर उसमें भी दूसरा करण चाहिये । इस प्रकार अनवस्था होगी । उससे भिन्न भी खड्ग आदि करण जैसे कर्त्ता से अभिन्न हस्त आदि से अभेद की भावना से करण होता है उसी प्रकार अहमर्श का स्पर्शी होने से प्रमाता से अभिन्न अहङ्कार में भी बुद्धि आदि का लय होने से—इसलिये ठीक कहा—बुद्धि अहङ्कार में लीन होती है ॥ १६२ ॥

इसी को प्रस्तुत में लगाते हैं—

इसलिये संवित् देवी (अपने) स्वातन्त्र्य के कारण अपने द्वारा कल्पित अहङ्कार में इन्द्रियसमूह रूप सूर्यमण्डल की स्वयं रचना करती है ॥ १६३ ॥

इससे = उक्त क्रम से, अपने स्वातन्त्र्य से स्वयं न कि परिमितप्रमाता आदि के व्यवधान के द्वारा संविद् देवी बारह संख्या वाले बुद्धि आदि इन्द्रिय सूर्य मण्डल को देह आदि में अभिनिवेश के कारण कल्पित अहङ्कारात्मा में कलित करती है = उससे अभिन्न कर देती है । जिससे क्रमस्तोत्र आदि में यह 'मार्तण्डकाली' कही जाती है । वही वहाँ कहा गया है—

"जो पूर्णरूप से पतङ्गचक्र (= इन्द्रिय वर्ग) का पान करने वाले मार्तण्ड को

इति । श्रीपञ्चशतिकेऽपि—

'शब्दब्रह्मपदातीता षट्त्रिंशान्तनवान्तगा ।
ब्रह्माण्डखण्डादुत्तीर्णा मार्तण्डी मूर्तिरव्यया ॥
सा कला लीयते यस्यां मार्तण्डी कालिकोच्यते ।' इति ॥१६३॥

एवं प्रमाणांशभक्षणप्रवणं देवीचतुष्टयं निरूपितम्, इदानीं प्रमात्रंशचर्वणाचतुरं देवीचतुष्टयं निरूपयति—

**स एव परमादित्यः पूर्णकल्पस्त्रयोदशः ।**
**करणत्वात्प्रयात्येव कर्तरि प्रलयं स्फुटम् ॥ १६४ ॥**

एवमहङ्कारनाम्नि परमादित्ये संहृतेषु बुद्ध्यादिषु द्वादशसु करणेषु स एवाहङ्कारनामा त्रयोदशः प्रमातृतोन्मुखीभावात् पूर्णकल्पः परमादित्यः करणत्वात् कर्तर्येव स्फुटं प्रलयं प्रयाति—तदेकरूपतामासादयेदित्यर्थः ॥ १६४ ॥

ननु द्विविधः कर्ता—संकुचितश्चसंकुचितश्च, तदयं कुत्र तावत् प्रलयं प्रयाति ?—इत्याशङ्क्याह—

**कर्ता च द्विविधः प्रोक्तः कल्पिताकल्पितात्मकः ।**
**कल्पितो देहबुद्ध्यादिव्यवच्छेदेन चर्चितः ॥ १६५ ॥**

---

पतङ्ग (= कीट) के समान कालकला के इन्धन (= प्रकाशन) के लिये बनाती है उस विश्वरस का अन्त करने वाली मार्तण्डकाली को प्रणाम करता हूँ ।''

पञ्चशतिक में भी—

''शब्द ब्रह्म के पद से परे छत्तीस (तत्त्व) के अन्त एवं नव वर्गों के अन्त को प्राप्त होने वाली ब्रह्माण्डखण्ड से उत्तीर्ण मार्तण्ड की अव्यय मूर्त्ति (है) वह कला जिसमें लीन होती है (उसे) मार्तण्ड काली कहा जाता है ॥ १६३ ॥''

इस प्रकार प्रमाणांश के भक्षण में दक्ष चार देवियों का निरूपण हुआ । अब प्रमाता के अंश की चर्वणा में चतुर चार देवियों का निरूपण करते है—

वही (= अहङ्कार) पूर्णसदृश तेरहवाँ परम आदित्य है । करण होने के नाते वह स्पष्टरूप से कर्त्ता में लीन हो जाता है ॥ १६४ ॥

अहङ्कार नामक परम आदित्य में बुद्धि आदि बारह करणों का संहार होने पर वही अहङ्कार नामक तेरहवाँ (करण) प्रमातृता की ओर उन्मुख होने के कारण पूर्ण जैसा परम सूर्य करण होने के कारण कर्त्ता में ही स्पष्टरूप से प्रलय को प्राप्त होता है अर्थात् उससे एक रूप हो जाता है ॥ १६४ ॥

प्रश्न—कर्त्ता दो प्रकार का है—संकुचित और असंकुचित । तो यह कहाँ प्रलय को प्राप्त होती है ? यह शङ्का कर कहते हैं—

**कालाग्निरुद्रसंज्ञास्य शास्त्रेषु परिभाषिता ।**
**कालो व्यवच्छित्तद्युक्तो वह्निर्भोक्ता यतः स्मृतः ॥ १६६ ॥**
**संसाराक्लृप्तिक्लृप्तिभ्यांरोधनाद् द्रावणात्प्रभुः ।**
**अनिवृत्तपशूभावस्तत्राहंकृत्प्रलीयते ॥ १६७ ॥**

अस्येति—देहबुद्ध्यादिव्यवच्छेदभाजः कल्पितस्य प्रमातुः, किं च अस्याः संज्ञायाः प्रवृत्तावत्र निमित्तम् ?—इत्याशङ्क्याह—'काल' इत्यादि, व्यवच्छित्—व्यवच्छेदः, तेन कालेन तद्व्यवच्छेदेन युक्तोऽग्निर्भोक्ता, स एव च किञ्चिद्भोग्यसंस्कारस्याप्रबोधात् 'ममैतन्मा भूत्' इति रुणद्धि, प्रबोधाच्च किञ्चिद् द्रावयति, भोगेन स्वात्मसात्करोति रुद्रः, अत एव भोग्यौन्मुख्यात् अनिवृत्तपशूभावः—प्रोन्मिषदभिलाषात्मकाणवमलयोग इत्यर्थः, तत्रेति—कालाग्निरुद्रसंज्ञे संकुचिते प्रमातरि, एवमहङ्कारनाम्नः परमार्कस्य परिमिते कालाग्निरुद्रसंज्ञे प्रमातरि, एवं-कलनात् श्रीक्रमस्तोत्रादावियं 'परमार्ककाली' इत्युच्यते, तदुक्तं तत्र—

'अस्तोदितद्वादशभानुभाजि यस्यां गता भर्गशिखा शिखेव ।
प्रशान्तधाम्नि द्युतिनाशमेति तां नौम्यनन्तां परमार्ककालीम् ॥'

---

कर्त्ता दो प्रकार का कहा गया है—कल्पित और अकल्पित । देह बुद्धि आदि से अवच्छिन्न (= सीमित कर्त्ता) कल्पित कहा गया है । शास्त्रों में इसको कालाग्निरुद्र नाम दिया गया है । काल ही व्यवच्छेदक है जिस कारण उससे युक्त अग्नि भोक्ता कहा गया है । संसार की अकल्पना और कल्पना के फलस्वरूप रोधन और द्रावण करने के कारण अनिवृत्त पशुभाव (= आणवमल) वाला वह (= कालाग्निरुद्र) प्रभु है । उसमें अहङ्कार लीन हो जाता है ॥ १६५-१६७ ॥

इसका = देह, बुद्धि आदि व्यवच्छेद के भागी कल्पित प्रमाता का, यहाँ इस संज्ञा का प्रवृत्तिनिमित्त क्या है ? यह शङ्का कर कहते है—'काल' इत्यादि । व्यवच्छित् = व्यवच्छेद । उस काल से = उस व्यवच्छेद से युक्त अग्नि भोक्ता है । और वही भोग्यसंस्कार का प्रबोध न होने से 'मुझे यह न हो'—ऐसा किसी का निरोध करता है । और प्रबोध होंने से कुछ का द्रावण करता है = भोग के द्वारा आत्मसात् करता है, इसलिये रुद्र है । इसीलिये भोग्य के प्रति उन्मुखता के कारण (वह) अनिवृत्त पशु भाव वाला = उन्मिषित होते हुए आणवमल से युक्त है । वहाँ = कालाग्निरुद्र संज्ञा वाले संकुचित प्रमाता में । अहङ्कार नामक परमार्क के परिमित कालाग्निरुद्र नामक प्रमाता में, ऐसा होने से क्रमस्तोत्र आदि में यह परमार्ककाली कही जाती है । वही वहाँ कहा गया है—

"जिस प्रशान्त धाम में बारह सूर्य अस्त और उदित होते है तथा भर्गशिखा (अग्नि की) शिखा के समान च्युतिनाश को प्राप्त करती है उस अनन्तपरमार्क काली को प्रणाम करता हूँ ।"

इति । श्रीपञ्चशतिकेऽपि—

'एकाकिनी चैकवीरा सुसूक्ष्मा सूक्ष्मवर्जिता।
परमात्मपदावस्था परापरस्वरूपिणी॥
सा कला पररूपेण यत्र संलीयते शिव ।
सा कला परमार्केति ज्ञेया भस्माङ्गभूषण ॥'

इति ॥ १६५-१६७ ॥

एवं प्रमातृगतं सृष्टिस्वरूपमभिधाय स्थितिस्वरूपमप्याह—

**सोऽपि कल्पितवृत्तित्वाद्विश्वाभेदैकशालिनि।**
**विकासिनि महाकाले लीयतेऽहमिदंमये ॥ १६८ ॥**

एवमहङ्कारे ग्रस्ते, तद्ग्रसितुः—कालाग्निरुद्रशब्दव्यपदेश्यस्य कल्पितस्यापि प्रमातुर्ग्रासेन भाव्यम्, इति सोऽपि कल्पितः प्रमाता, कल्पितत्वादेव अहमिदंमये, अत एवाहन्तायामिदन्ताया विश्रान्तेः विश्वाभेदैकशालिनि, अत एव विकासिनि

'भैरवरूपी कालः सृजति जगत्कारणादि कीटान्तम् ॥'

इत्याद्युक्तस्वरूपे महाकाले लीयते—परस्मिन्नकल्पिते पूर्णाहंविमर्शमये प्रमातरि विश्रान्तो भवेदित्येवं परिमितप्रमात्रात्मनः कालाग्निरुद्रस्य कलनात् 'कालाग्निरुद्र-

---

पञ्चशतिक में भी—

"एक, एकवीरवाली, सूक्ष्म, सूक्ष्मरहित, परमात्मपद में स्थित, परापरस्वरूपिणी वह कला पररूप में जहाँ लीन हो जाती है, हे शिव ! हे भस्माङ्गभूषण उस कला को परमार्क काली समझना चाहिये" ॥ १६५-१६७ ॥

प्रमातृगत सृष्टि के स्वरूप का कथन कर स्थिति स्वरूप को भी कहते हैं—

वह (कालाग्नि रुद्र) भी कल्पितवृत्ति वाला होने के कारण विश्व में अभिन्न, अहं, इदं, से पूर्ण, विकास वाले महाकाल में लीन हो जाता है ॥ १६८ ॥

अहङ्कार के ग्रस्त होने पर उसका ग्रास करने वाले कालाग्निरुद्र शब्द से व्यवहार्य कल्पितप्रमाता का भी ग्रास होना चाहिये । इसलिये वह कल्पितप्रमाता भी कल्पित होने के कारण अहं इदं इसलिये अहन्ता में इदन्ता की विश्रान्ति के कारण विश्वभेद वाले इसलिये विकासयुक्त

"भैरवरूपी काल जगत्कारण (= ब्रह्मा) से लेकर कीटपर्यन्त की सृष्टि करता है ।"

इत्यादि उक्त स्वरूपवाले महाकाल में लीन हो जाता है = पर अकल्पित पूर्ण अहंविमर्शमय प्रमाता में विश्रान्त हो जाता है । इस प्रकार परिमित प्रमाता रूप

कालीति' श्रीपञ्चशतिकादावियम् उच्यते, यदुक्तं—

> 'वरदा विश्वरूपा च गुणातीता परा कला।
> अघोषा सास्वरारावा कालाग्निग्रसनोद्यता ॥
> निरामया निराकारा यस्यां सा शाम्यति स्फुटम् ।
> कालाग्निरुद्रकालीति सा ज्ञेयामरवन्दित ॥' इति ।

श्रीक्रमस्तोत्रेऽपि—

> 'कालक्रमाक्रान्तदिनेशचक्रक्रोडीकृतान्ताग्निकलाप उग्रः ।
> कालाग्निरुद्रो लयमेति यस्यां तां नौमि कालानलरुद्रकालीम् ॥'

इति ॥ १६८ ॥

एवं प्रमातृगतं स्थितिस्वरूपमभिधाय संहारस्वरूपमप्याह—

> **एतस्यां स्वात्मसंवित्ताविदं सर्वमहं विभुः ।**
> **इति प्रविकसद्रूपा संवित्तिरवभासते ॥ १६९ ॥**
> **ततोऽन्तः स्थितसर्वात्मभावभोगोपरागिणी ।**
> **परिपूर्णापि संवित्तिरकुले धाम्नि लीयते ॥ १७० ॥**

एवं कालाग्निरुद्र रूपे परिमिते प्रमातरि ग्रस्ते परिपूर्णाहंभावमयस्य परप्रमातुर्महाकालस्यापि स्वविमर्शविश्रान्त्यात्मना ग्रासेन भवितव्यम्, इत्येतस्यामुक्त-

---

कालाग्निरुद्र का ग्रसन करने से पञ्चशतिक आदि में यह कालाग्निरुद्रकाली कही जाती है जैसा कि वहाँ कहा गया है—

"वरदा, विश्वरूपा, गुणतीता, पराकला, अघोषा, स्वररहित स्वरवाली, कालाग्नि के ग्रसन में उद्यत, निरामया, निराकारा वह जिसमें शान्त होती है हे देववन्दित ! उसे स्पष्टरूप से कालाग्निरुद्रकाली समझना चाहिये ।"

क्रमस्तोत्र में भी—

"कालक्रम को आक्रान्त करने वाले सूर्यमण्डल को गोद में रखने वाला अग्निसमूह उग्र कालाग्निरुद्र जिसमें लीन हो जाता है (मैं उस) कालाग्निरुद्रकाली को प्रणाम करता हूँ" ॥ १६८ ॥

प्रमातृगत स्थिति के स्वरूप का कथन कर संहार स्वरूप को भी कहते हैं—

इस स्वात्मसंवित्ति में 'इदं सर्वम्' अहंविभुः (= यह सब व्यापक मैं ही हूँ) ऐसी विकासशील संवित् भासित होती है । इसके बाद अन्तःस्थित सर्वात्मभाव के भोग को भोगने वाली परिपूर्ण संवित् अकुल धाम में लीन हो जाती है ॥ १६९-१७० ॥

इस प्रकार कालाग्निरुद्ररूप परिमित प्रमाता के ग्रस्त होने पर परिपूर्ण

स्वरूपायां स्वात्मनो महाकालस्य संबन्धिन्यां संवित्तौ

'सर्वो ममायं विभवः ........................।'

इत्याद्युक्तवत् सर्वमिदमहमेवेति विभुः—विश्वाभेदैकशालिनी, अत एव प्रविकसद्रूपा या परिमितप्रमातृचर्वणाचतुरा संवित्तिः—अनुभवविशेषोऽवभासते, सापि ततः एवमवभासानन्तरम्, अन्तः—प्रमात्रैकात्म्येन वर्तमानानाम्, अत एव सर्वसर्वात्मकत्वेन सर्वात्मरूपाणां भावानां यो भोगो—हठपाकक्रमेणालंग्रासयुक्त्या स्वात्मसात्कारः, तेनोपरागिणी—संहर्त्रेकस्वभावा, अत एव परिपूर्णा, अत एव कञ्चिदपि प्रति भोग्यत्वागमनाद्विदिक्रियाकर्तृतारूपा वित्तिः,

'अव्ययमकुलममेयं विगलितसदसद्विवेककल्लोलम् ।
जयति प्रकाशविभवस्फीतं काल्याः परं धाम ॥'

इत्याद्युक्तस्वरूपशालिन्यकुले धाम्नि लीयते—स्वात्मविश्रान्तिचमत्काररूपाहंपरामर्शदशाधिशायितामियादिति, एवं महाकालस्य कलनात् 'महाकालकालीति' श्रीक्रमस्तोत्रादावुच्यते, तदुक्तं तत्र—

'नक्तं महाभूतलये श्मशाने दिक्खेचरीचक्रग्रणेन साकम् ।
कालीं महाकालमलंग्रसन्तीं वन्दे ह्यचिन्त्यामनिलानलाभाम् ॥'

---

अंहभावमय परप्रमाता महाकाल का भी स्वविमर्शविश्रान्ति रूप ग्रास होना चाहिये । इसलिये इस = उक्त स्वरूपवाली, स्वात्म महाकाल सम्बन्धिनी संवित् में

"यह सब मेरा विभव है......."

इत्यादि कथन की भाँति 'यह सब मै ही हूँ' ऐसा व्यापक = विश्वाभेद वाली, इसलिये प्रविकसद्रूपा जो परिमित प्रमाता की चर्वणा में चतुर संवित्ति = अनुभवविशेष, (वह) अवभावसित होता है । वह भी तब = इस प्रकार के अवभास के बाद, अन्तः = प्रमाता से अभिन्न रूप से, वर्तमान इसलिये सर्वसर्वात्मक होने के कारण सर्वात्मरूप भावों का जो भोग = हठपाक के क्रम से अलंग्रास युक्ति के द्वारा स्वात्मसात्कार, उससे उपरागिणी = संहर्त्री एकस्वभाववाली इसलिये परिपूर्ण इसलिये किसी के भी प्रति भोग्यत्व का गमन न होने से विदिक्रिया की कर्तृतारूपा वित्ति,

"अव्यय, अकुल, अमेय, जहाँ सदसद् विवेक का कल्लोल विगलित हो गया है ऐसा प्रकाश विभव से स्फीत, काली का परम धाम सर्वोत्कृष्ट है ।"

इत्यादि उक्त स्वरूप वाले अकुल धाम में लीन हो जाता है = स्वात्मविश्रान्तिचमत्कार रूप अंहपरामर्शदशा में अधिशयन करता है । इस प्रकार महाकाल का ग्रसन करने से क्रमस्तोत्र आदि में (वह) महाकाली कही जाती है । वही वहाँ कहा गया है—

"रात्रि के समय यह भूतों के लय वाले श्मशान में दिक्चरी एवं खेचरी

इति । श्रीपञ्चशतिकेऽपि

> 'ऋतोज्ज्वला महादीप्ता सूर्यकोटिसमप्रभा ।
> कलाकलङ्करहिता कालस्य कलनोद्यता ॥
> यत्र सा लयमाप्नोति कालकालीति सा स्मृता।'

इति ॥ १६९-१७० ॥

एवं प्रमातृगतं संहारस्वरूपं निरूप्यानाख्यास्वरूपमपि निरूपयति—

> **प्रमातृवर्गो मानौघः प्रमाश्च बहुधा स्थिताः ।**
> **मेयौघ इति यत्सर्वमत्र चिन्मात्रमेव तत् ॥ १७१ ॥**
> **इयतीं रूपवैचित्रीमाश्रयन्त्याः स्वसंविदः ।**
> **स्वाच्छन्द्यमनपेक्षं यत्सा परा परमेश्वरी ॥ १७२ ॥**

तदेवमत्र—अहंपरामर्शात्मन्यकुले धाम्नि, प्रमेयं प्रमाणं प्रमाता प्रमा च इत्येतत्सर्वं नानारूपतयोज्जृम्भमाणं चिन्मात्रमेव—तदेकरसतयावभासते इत्यर्थः, तत्—तस्मादियतीं प्रामात्राद्यवच्छिन्नां रूपवैचित्रीमाश्रयन्त्याः स्वप्रकाशायाः परस्याः संविदो यदनपेक्षं

> 'तस्य देवातिदेवस्य परबोधस्वरूपिणः ।

---

चक्रसमूह के साथ महाकाल का अलंग्रास करने वाली अचिन्त्य, वायु और अग्नि के समान (कान्ति वाली) काली को प्रणाम करता हूँ ।''

पञ्चशतिक में भी—

''ऋतोज्ज्वला, महादीप्ता, करोड़ों सूर्य के समान कान्ति वाली, कला के कलङ्क से रहित, कला के ग्रसन में उद्यत वह (= महाशक्ति) जहाँ लय को प्राप्त होती है वह कालकाली कही गई है'' ॥ १६९-१७० ॥

इस प्रकार प्रमातृगत संहारस्वरूप का निरूपण कर अनाख्या के स्वरूप का निरूपण करते हैं—

यहाँ प्रमातृवर्ग, प्रमाणसमूह, अनेकरूपों में स्थित **प्रमावर्ग** और प्रमेयवर्ग यह जो कुछ है वह सब चिन्मात्र है । इतने **रूपवैचित्र्य** की आधारभूत अपनी संविद् का जो निरपेक्ष स्वातन्त्र्य है, **वही परापरमेश्वरी** है ॥ १७१-१७२ ॥

तो इस प्रकार यहाँ = अहंपरामर्शात्मक अकुल धाम में, प्रमेय प्रमाण, प्रमाता और प्रमा नामक नानारूप से प्रकाशमान यह सब चिन्मात्र ही है अर्थात् उस एकरस के रूप से भासित होता है तो = इस कारण इतनी प्रमाता आदि से अवच्छिन्न, रूपवैचित्र्य का आश्रयण करने वाली स्वप्रकाश परासंविद् का जो अनपेक्ष

विमर्शः परमा शक्तिः सर्वज्ञज्ञानशालिनी ॥'

इत्याद्युक्तस्वरूपमहंपरामर्शमये स्वाच्छन्द्यं, सा प्रमेयप्रक्रियया—प्रमातृपदेन महाभैरवशब्दस्य, मेयपदेन चण्डशब्दस्य, प्रमापदेनोग्रशब्दस्य, मानपदेन घोर-शब्दस्य, चाक्षेपात् ' महाभैरवचण्डोग्रघोरकाली' या अस्मद्दर्शने पूर्णतया परा इति परमेश्वर्युक्ता, यदुक्तं श्रीपञ्चशतिके—

'दशसप्तविसर्गस्था महाभैरवभीषणा ।
संहरेद्भैरवान्सर्वान्विश्वं च सुरपूजित ॥
सान्तः शाम्यति यस्यां च सा स्याद्भरितभैरवी ।
महाभैरवचण्डोग्रघोरकाली परा च सा ॥' इति ।

श्रीक्रमस्तोत्रेऽपि—

'क्रमत्रयत्वाष्ट्रमरीचिचक्रसञ्चारचातुर्यतुरीयसत्ताम्
वन्दे महाभैरवघोरचण्डकालीं कलाकाशशशाङ्ककान्तिम् ॥'

इति ॥ १७१-१७२ ॥

ननु किं नामास्याः परत्वम् ?—इत्याशङ्क्याह—

**इमाः प्रागुक्तकलनास्तद्विजृम्भोच्यते यतः ।**

---

"परबोधस्वरूप उस देवाधिदेव का विमर्श (ही) सर्वज्ञज्ञानशालिनी परमाशक्ति है।"

इत्यादि उक्तस्वरूप वाला अहंपरामर्शमय स्वातन्त्र्य, वह प्रमेयप्रक्रिया के अनुसार—प्रमातृपद से महाभैरव शब्द का, मेयपद से चण्ड शब्द का, प्रमापद से उग्र शब्द का और मानपद से घोर शब्द का आक्षेप होने से 'महाभैरवचण्डोग्रकाली है, जो हमारे दर्शन में पूर्णता के कारण परा परमेश्वरी कही गई है । जैसा कि पञ्चशतिक में कहा गया है—

"हे सुरपूजित ! सत्रह विसर्गों में स्थित, महाभैरवभीषण (जो कि) सभी भैरवों और विश्व का संहार करती है वह जिसके भीतर शान्त होती है वह भरितभैरवी है । और वही परा महाभैरवचण्डोग्रघोर काली भी है । (अथवा वह महाभैरवचण्डग्रघोर काली परा है) ।'

क्रमस्तोत्र में भी कहा गया—

"क्रमत्रय अर्थात् क्रम कुल और त्रिक रूपी त्वष्टा अर्थात् अग्नि या सूर्य की किरणचक्र के सञ्चारकुशलता वाली चतुर्थ सत्तारूपा, कलारूपी आकाश के चन्द्रमा के समान कान्ति वाली महाभैरव घोरचण्डकाली को मैं प्रणाम करता हूँ" ॥ १७१-१७२ ॥

प्रश्न—इसका परत्व क्या है ? यह शङ्का कर कहते हैं—

अतस्तद्विजृम्भात्मकत्वादेवासां सर्वसर्वात्मकतया एकैकस्यामपि संविदि सर्वा एव संविदोऽनन्तरत्वेन वर्तन्ते, येनैकैकस्यामपि द्वादशात्मकत्वात् सञ्चारक्रमपूजायां चतुश्चत्वारिंशदधिकं शतं पूज्यत्वेनोक्तम्, यदागमः—

'द्वादशारावियोगेन देवीं द्वादशधा यजेत्।' इति,

अत एव च त्रयोदशं रूपमभिधातुमवकाशलेशोऽपि नास्ति इति युक्तमुक्तं 'परमार्थतः संविद्द्वादशात्मैव' इति ॥

ननु क्रमदर्शने सर्वत्रैव श्रीसृष्ट्यादिदेवीनां मध्ये श्रीसुकाल्या भगवत्या अभिधानं, येनानाख्यचक्रे त्रयोदश देव्यः, अत एव श्रीमहाभैरवचण्डोग्रघोर-कालीभट्टारिकायाश्च त्रयोदशत्वम्, तदुक्तं श्रीपञ्चशतिके—

'डकला भीषणा रौद्रा कुलकालिनिराकुला ।
अलक्ष्या लक्ष्यनिर्लक्ष्या सुकाली नाम सिद्धिदा ॥' इति ।

श्रीतन्त्रराजभट्टारकेऽपि—

'सृष्टिकाली च संहारे सृष्टौ सा परमेश्वरी ।
स्थितिकाली तथा घोरा ततः संहारकालिका॥
रक्तकाली चर्वयन्ती रक्तौघमविभेदतः ।
सुकाली यमकाली च मृत्युकाली भयावहा ॥

---

ये पूर्वोक्त कलनाएँ उस (= परादेवी) का उल्लास हैं ॥ १७३- ॥

अतः उसके विजृम्भात्मक होने के कारण इनके सर्वसर्वात्मक होने से एक-एक संविद् में सभी संविद् अन्तर्भूत होकर रहती है । जिससे एक-एक में भी बारह होने के कारण सञ्चारक्रमपूजा में (१२ x १२) एक सौ चौवालिस (संविदायें) पूज्य कही गई हैं । जैसा कि आगम है—

"बारह अरों से युक्त देवी की बारह प्रकार से पूजा करनी चाहिये ।"

इसलिये तेरहवें रूप का कथन करने के लिये लेशमात्र भी अवकाश नहीं है । इसलिये ठीक कहा गया—परमार्थतः संविद् बारह ही है ॥ १७२-१७३ ॥

प्रश्न—क्रमदर्शन में सर्वत्र ही सृष्टिकाली आदि देवियों के मध्य सुकाली भगवती का कथन है जिससे अनाख्याचक्र में तेरह देवियाँ हैं और इसलिये महाभैरव चण्डोग्रघोरकालीभट्टारिका तेरहवीं है । वही पञ्चशतिक में कहा गया है—

"डकला, भीषणा, रौद्रा, कुलकालिनिराकुला, अलक्ष्या, लक्ष्य से अलक्ष्य तक व्याप्त सुकाली सिद्धि देने वाली है ।"

तन्त्रराजभट्टारक में भी—

"संहार होने पर सृष्टिकाली और सृष्टि होने पर परमेश्वरी स्थितिकाली फिर

भद्रकाली तथा चान्यापरमादित्यकालिका।
मार्तण्डकाली कालाग्निरुद्रकालमहोल्बणा ॥
महाकालकुले काली महाभैरवकालिका ।
त्रयोदशविधा काली विज्ञेया नामभेदतः ॥'

इति, श्रीसार्धशतिकं तु समनन्तरमेव संवादितं. तदत्र क्रमनयसमानकक्ष्यत्व-विवक्षायामपि कथमेतद्विरुद्धमभिहितं 'द्वादशैव देव्यः' इति ? अत्रोच्यते, इह—क्रमदर्शने सर्वसर्विकया अनाख्यचक्रे त्रयोदशैव देव्यः पूज्यत्वेनाभिमताः, इति तावन्नास्ति नियमः, यतः श्रीक्रमसद्भावभट्टारके अनाख्यचक्रे सप्तदश देव्यः पूज्यत्वेनोक्ताः, यदुक्तं तत्र—

'कालोत्थिता महादेव सानन्दा नन्दिनी शिवा ।
चिद्घना युग्ममध्यस्था अक्षरा क्षरगोचरा ॥
अकुला कलयेन्नित्या कालकाली निराकुला ।
सा कला लीयते यस्यां सृष्टिकाली तु सा स्मृता ॥'

इत्याद्युपक्रम्य

'क्रमत्रयाणां यच्चक्रं घोरघोरतरं महत् ।
कालरूपं मरीच्याद्यं त्वाष्ट्रं कल्पान्तकान्तगम् ॥
आचरेत्तु महाचारचातुर्येणैव तत्र च ।
या कला घोरघोरोग्रा तस्याः सा तुर्यगा शिवा ॥

---

(स्थिति होने के बाद) संहारकाली, अभेदरूप से रक्तसमूह की चर्वणा करती हुई रक्तकाली, सुकाली, यमकाली, भयदायिनी मृत्युकाली, भद्रकाली, परमादित्यकाली, मार्तण्डकाली, कलाग्निरुद्रकाल से महोल्बणा, महाकालकुल में काली, महाभैरव काली इस प्रकार नामके भेद से तेरह प्रकार की काली को जानना चाहिये ।''

सार्धशतिक को तो अभी पीछे ही उद्धृत कर दिया है । तो यहाँ क्रमसिद्धान्त की समानकक्ष्यता की विवक्षा में भी कैसे यह विरुद्ध कथन किया गया कि 'बारह ही देवियाँ हैं । इस विषय में कहते हैं—यहाँ = क्रमदर्शन में, कुल मिलाकर अनाख्यचक्र में तेरह ही देवियाँ पूज्य मानी गयी हैं इस प्रकार कोई नियम नहीं है क्योंकि क्रमसद्भावभट्टारक में अनाख्यचक्र में सत्रह देवियाँ पूज्य मानी गयी है । जैसा कि वहाँ कहा गया है—

''हे महादेव ! कालोत्थिता, सानन्दा, नन्दिनी, शिवा, चिद्घना, युग्ममध्यस्था, अक्षरा, क्षरगोचरा, अकुला, नित्य ग्रसन करने वाली कालकाली, निराकुला, यह कला जिसमें लीन होती है वह सृष्टिकाली कही गई है ।''

इस प्रकार उपक्रम कर

तीन क्रमों का जो घोर घोरतर कालरूप, मरीचि आदि, त्वाष्ट्र, कल्पान्त-

महाभैरवघोरस्य चण्डरूपस्य सर्वतः ।
ग्रसते या महाकाली द्व्यष्टका कालनाशिनी ॥
सप्तदशी तु सा काली विद्धि सर्वार्थकारिणी ।'

इति, अत एव च 'एतदाशयेन श्रीस्तोत्रकारस्य पूजाक्रमः, इति न ग्राह्यम्, यदाहुः—

'श्रीक्रमसद्भावादिकशास्त्राशयतश्च पत्रिका अत्र ।
श्रीस्तोत्रकारभास्करकुलधरपूर्वासु संततिषु ॥' इति,

अस्य हि अनाख्यचक्रे त्रयोदश देव्यः पूज्यतया अभिमता द्वादश वा, यदधिकारेण अयं विचारः प्रक्रान्तः, एवमिह श्रीसुकाली विना द्वादशैव देव्यः पूज्यतया यद्युक्ताः, तत्को दोषः, यदागमः—

'यत्सृष्टिस्थितिसंहाररक्तैश्च यममृत्युभिः ।
रुद्रमार्तण्डपरमादित्यकालाग्निरुद्रकैः ॥
पदैश्च समहाकालैः कालीशब्दान्तयोजितैः ।
महाभैरवचण्डोग्रघोरकालीपदं नयेत् ॥' इति ।

एवं क्रमकेलावप्येतद्गर्भीकारेण यदनेन ग्रन्थकृता व्याख्यातं तत्रापि अन्यथा न किञ्चित्संभाव्यं, यतोऽत्रास्य 'श्रीगोविन्दराज-श्रीभानुकादिक्रमेण' बहुशाखमेवं गुरूपदेशः समस्तीति, योऽद्यापि महात्मनां महागुरूणां हृदयपथे शतशः

---

कान्तगामी, महाचक्र है महाचारचातुर्य के साथ उसका आचरण करना चाहिये । वहाँ जो घोर घोरतर उग्रकला है उसकी जो चतुर्थगामिनी शिवा है महाभैरवघोर चण्डरूप का जो सोलहवीं कालनाशिनी महाकाली सर्वतः ग्रसन करती है उसे सर्वार्थकारिणी सत्रहवीं काली समझो ।''

इसलिये 'इस आशय से' स्तोत्रकार का पूजाक्रम है,—ऐसा नहीं समझना चाहिये । जैसा कि कहते हैं—

यहाँ श्रीस्तोत्रकार, श्रीभास्कर और श्रीकुलधर के पूर्व वाली परम्पराओं में क्रमसद्भाव आदि शास्त्र के आशय से पत्रिका अर्थात् लेख (मिलता) है ।''

इसके अनाख्यचक्र में तेरह या बारह देवियाँ पूज्य मानी गयी हैं । जिसके आधार पर यह विचार आया है । इस प्रकार यदि यहाँ सुकाली के विना बारह देवियाँ पूज्य कही गयी हैं तो क्या दोष है ?—जैसा कि आगम है—'सृष्टि, स्थिति, संहार, रक्त, यम, मृत्यु, रुद्र, मार्तण्ड, परमादित्य, कालाग्निरुद्र एवं महाकाल पदों के साथ काली शब्द को अन्त में जोड़कर महाभैरवचण्डोग्रघोरकाली पद को जोड़ना चाहिये ।''

क्रमकेलि में भी इसको ध्यान में रखकर इस ग्रन्थकार के द्वारा जो व्याख्यान किया गया वहाँ भी कोई अन्यथा सम्भावना नहीं करनी चाहिये । क्योंकि इस विषय

परिपोस्फुरीति, यदुक्तं तत्रैवानेन—यथैकः श्रीमान् वीरवरः सुगृहीतनामधेयो 'गोविन्दराजाभिधानः' 'श्रीभानुकाभिधानो' द्वितीयः श्रीमान् 'एरकसमाख्यः' तृतीयः सममेवोपदेशं पीठेश्वरीभ्य उत्तरपीठलब्धोपदेशात् श्रीशिवानन्दनाथाल्लब्धनुग्रहाभ्यः 'श्रीकेयूरवती-श्रीमदनिका-श्रीकल्याणिकाभ्यः प्राप्नुवन्तः । तत्राद्यः प्राप्तोपदेश एवैवं मनस्यकार्षीत्—एतावत्यधिगते किमिदानीं कृत्यमस्तीति, इत्थं च निष्ठितमना यावज्जीवमुपनतभोगातिवाहनमात्रव्यापार एतद्विज्ञानोपदेशपात्रशिष्टोपदेशप्रवणः शरीरान्तं प्रत्यैक्षिष्ट, स चेदं रहस्यं 'श्रीसोमानन्दाभिधानाय' गुरवे सञ्चारयांबभूव। द्वितीयोऽपि एवमेवास्त, तस्यैव चैषा 'श्रीमदुज्जटोद्भट्टादिनानागुरुपरिपाटीसंततिः, यत्प्रसादासादितमहिमभिरस्माभिरेतत् प्रदर्शितम् । 'श्रीमानेरकस्तु' सिद्ध्ये प्रायतत, यावत्सिद्धः सन् एव मनसा समर्थयते स्म—किं भोगैः, यत—अयं महान् क्लेशो मयानुभूतः, कथमहं सब्रह्मचारिवद्यावज्जीवं प्रपन्नलोकोद्धरणमात्रपर एव नाभवम्, यतः

'श्रीमत्सदाशिवपदेऽपि महोग्रकाली
भीमोत्कटभ्रकुटिरेष्यति भङ्गभूमिः ।
इत्याकलय्य परमां स्थितिमेत्यकाल-
सङ्कर्षिणीं भगवतीं हठतोऽधितिष्ठत् ॥'

---

में गोविन्दराज, भानुक आदि के क्रम से अनेक प्रकार का गुरूपदेश सम्भव है जो आज भी महात्मा महागुरुओं के हृदयपथ पर सैकड़ों बार स्फुरित होता है । जैसा कि वहीं पर इन्होंने कहा है—

जैसे प्रथम श्रीमान् वीरवर सुगृहीत नामवाले गोविन्दराज, दूसरे भानुक, तीसरे एरक ने एक साथ उत्तरपीठ से उपदेश प्राप्त करने वाले शिवानन्द नाम वाले से अनुग्रह प्राप्त करने वाली केयूरवती मदनिका और कल्याणिका पीठेश्वरियों से उपदेश प्राप्त किये । उनमें से प्रथम गोविन्दराज ने उपदेश प्राप्त करने के बाद तुरन्त मन में सोचा—इतना जान लेने के बाद अब क्या कार्य है—इस प्रकार मन में निश्चय कर जीवनपर्यन्त प्राप्त भोगों में जीवन विताने वाले, इस ज्ञान के उपदेश के योग्य शिष्य को उपदेश देने में संलग्न होते हुए वे दिवङ्गत हो गये । उन्होंने इस रहस्य को सोमानन्द नामक गुरु के अन्दर सञ्चारित किया । दूसरे (भानुक) भी ऐसे ही थे। उद्भट्ट उद्भूट आदि अनेक गुरुओं की परम्परा उन्हीं की (भानुक की) है । जिसकी कृपा से महिमा प्राप्त करने वाले हमने यह प्रदर्शित किया । एरक ने सिद्धि के लिये प्रयास किया । सिद्ध होकर मन में ऐसा सोचने लगे—भोगों से क्या लाभ ? जो मैंने यह महान् क्लेश का अनुभव किया । मैं ब्रह्मचारी के समान जीवनपर्यन्त विपन्न लोगों के उद्धार में तत्पर क्यों नहीं हुआ ? क्योंकि—

"भयङ्कर उत्कट भ्रुकुटिवाली भङ्गभूमि (= विनाश की हेतुभूता) महोग्रकाली श्रीसदाशिव के पद पर भी आयेगी ऐसा समझकर परम स्थिति को प्राप्त कर हठात् भगवती सङ्कर्षिणी का अधिष्ठान करना चाहिये ।"

तदिदानीमपि निजभावगतरहस्योपदेशं स्तोत्रमुखेनापि तावत्प्रसारयंल्लोकाननुगृह्णीयाम् इति, अतश्चास्य एवं गुरुक्रममजानानैरद्यतनैः

'श्रीभूतिराजनामाप्याचार्यश्चक्रभानुशिष्योऽन्यः ।
अभिनवगुप्तस्य गुरोर्यस्य हि कालीनये गुरुता॥'

इत्यादि यदुक्तं तत् स्वोत्प्रक्षितमेव—इत्युपेक्ष्यम् । नहि श्रीचक्रभानुना प्रायः कस्यचिदपि एवमुपदिष्टं—तन्मूलतयैव इदानीमस्योपदेशस्य शतशो दर्शनात्, तत्रापि चात्र श्रीभूतिराजस्यान्यथा पूजाक्रम इति

'देवीपञ्चशताशयमाश्रित्य च भूतिराजपूर्वाणाम् ।'

इत्यभिदधद्भिर्भवद्भिरेवोक्तम्, अथात्र 'द्वादशैव देव्यः पूज्यतया स्थिताः' इत्यभिप्रेतं भवतस्तर्हि श्रीपञ्चशतिकार्थमपि न जानीषे—तद्गच्छ, स्वगुरुं पृच्छ, किमस्मदाविष्कृतेन, श्रीदेवीपञ्चशतिकेऽपि अस्य श्रीसोमानन्दभट्टपादेभ्यः प्रभृति त्रिकदर्शनवदेव गुरवः, इति न तत्राप्यस्य श्रीभूतिराजो गुरुत्वेन स्थितः, न च 'असावस्य न गुरुः' यद्वक्ष्यति—

'अथोच्यते ब्रह्मविद्या सद्यः प्रत्ययदायिनी ।
शिवः श्रीभूतिराजो यामस्मभ्यं प्रत्यपादयत् ॥' इति,

---

तो अब भी अपने भागवत रहस्य के उपदेश का स्तोत्र के द्वारा प्रसार करता हुआ लोक को अनुगृहीत करूँ । इसलिये इसके इस प्रकार के गुरुक्रम को न जानने वाले आज के लोग—

"चक्रभानु के एक दूसरे शिष्य भूतिराज नामक आचार्य भी हैं अभिनवगुप्त के जिस गुरु की कालीशास्त्र में गुरुता है ।"

इत्यादि जो कहे हैं वह अपनी बात है, इसलिये उपेक्षणीय है । क्योंकि चक्रभानु ने प्रायः ऐसा किसी को उपदेश नहीं दिया है । क्योंकि उन्हीं से अब इस उपदेश का शतशः दर्शन होता है । उसमें भी श्रीभूतिराज का पूजाक्रम दूसरा है ऐसा—

पाँच सौ देवियों के आशय का आश्रयण कर भूतिराज के पूर्ववर्त्ती लोगों का..

ऐसा कहने वाले आपके द्वारा ही कहा गया । यदि यहाँ बारह ही देवियाँ पूज्य हैं—आपको ऐसा मान्य है तो पञ्चशतिक का अर्थ भी नहीं जानते । तो जाओ अपने गुरु से पूछो । हमारे बतलाने से क्या ? देवीपञ्चशतिक में भी सोमानन्द से लेकर त्रिकदर्शन के समान ही इनके गुरु है । इसलिये वहाँ भी भूतिराज इनके गुरु नहीं है । यह (= भूतिराज) इनके (अभिवनगुप्त के) गुरु नहीं हैं—ऐसा नही है । जैसा कि कहेंगें—

"अब तत्काल प्रत्ययदायिनी ब्रह्मविद्या का कथन किया जाता है जिसको शिवस्वरूप भूतिराज ने हमें दिया ।"

'एतद्विद्यात्रयं श्रीमद्भूतिराजो न्यरूपयत् ।
यः साक्षादभजच्छ्रीमाञ्छ्रीकण्ठो मानुषीं तनुम् ॥'

इति च, किं त्वत्र नेति निश्चयः, किं च श्रीमदवतारकनाथेन श्रीककारदेवीवत् श्रीमदनिकाश्रीकल्याणिके चानुगृहीते, इत्यपि अतोऽवसितम्, तदेष

'क्रमकुलचतुष्टयाश्रयभेदाभेदोपदेशतो नाथः ।
सप्तदशैव शिष्यानित्थं चक्रे सवंशनिर्वंशान् ॥'

इति नियमो न न्याय्यः—शिष्यद्वयस्यास्यापरिगणनात् अन्यस्यापि कस्यचिच्छिष्यस्य संभाव्यमानत्वात्, एवं

'श्रीकेयूरवतीतः प्रभृति श्रीचक्रभानुशिष्यान्तम् ।
संततयोऽतिनयस्य प्रथिता इह षोडशैवेत्थम् ॥'

इत्यादावपि ज्ञेयम्, तथाहि—अत्र श्रीककारदेव्यास्तस्याः

प्रकृतमहानयशिष्याः प्रथितास्त्रयः सवंशास्तु ।'

इति त्रय एव शिष्याः इति न वाच्यं—श्रीगोविन्दराजश्रीभानुकयोरपि एतच्छिश्यत्वात् नवेरकनाथश्चास्या अपि शिष्यः, यदाहुः—

---

"इन तीनों विद्याओं का भूतिराज ने निरूपण किया जो साक्षात् श्रीकण्ठनाथ मनुष्य शरीर को धारण किये थे ।"

किन्तु यहाँ नहीं—यह निश्चय है । इसके अतिरिक्त अवतारकनाथ ने ककारदेवी (= केयूरवती) की भँति मदनिका और कल्याणिका को अनुगृहीत किया । यह भी इसी से निश्चित हुआ । तो

"क्रमकुल चतुष्टय के आश्रय के भेदाभेद के उपदेश से श्रीकण्ठनाथ ने इस प्रकार सत्रह सवंश शिष्यों को निर्वंश किया अर्थात् पितृपरम्परा से हटा कर गुरुपरम्परा से जोड़ दिया ।"

यह नियम न्याय्य नही हैं । क्योंकि इन दोनो शिष्यों की परिगणना नही है और अन्य भी कोई शिष्यसम्भावित हो सकता है । ऐसा ही—

"केयूरवती से लेकर चक्रभानु के शिष्य तक इस प्रकार अतिनय की सोलह ही सन्ततियाँ विस्तृत हुई ।"

इत्यादि के विषय में जानना चाहिये । वह इस प्रकार—उस ककार देवी केयूरवती के—

"तीन सवंश प्रस्तुत महाशास्त्र के शिष्य विख्यात हुए ।"

इस वचन के आधार पर तीन ही शिष्य है ऐसा नहीं कहना चाहिये क्योंकि गोविन्दराज और भानुक भी इसके शिष्य हैं और एरकनाथ इसके शिष्य नहीं हैं जैसा कि कहते हैं—

यदुक्तम्—

'सप्तेन्द्रियशिखाजालजटिले जातवेदसि ।
बोधाख्ये भाववर्गस्य भस्मीभावोऽग्नितर्पणम् ॥' इति ।

यदभिप्रायेणैव अस्मद्गुरुभिरपि—

'शश्वद्विश्वमनश्वरप्रकृतयो विश्वस्तचित्ता भृशं
ये विज्ञानतनूनपाति विततोन्मेषा वषट् कुर्वते ।
तेषां संततसर्वमेययजनक्रीडामहायज्वनां
नो मन्येऽवभृथक्षणः क्षणमपि क्षीणस्थितिर्लक्ष्यते ॥'

इत्याद्युक्तम् ॥ २०२ ॥

न केवलमेतत् परस्वरूपावेशकारित्वादात्मन्येवोपयोगि, यावत्परत्रापि, इत्याह—

**यं कञ्चित्परमेशानशक्तिपातपवित्रितम् ।
पुरोभाव्य स्वयं तिष्ठेदुक्तवद्दीक्षितस्तु सः ॥ २०३ ॥**

यं कञ्चित्—

---

सारे भाव उस (= बोधअग्नि) के सत् तेज को और उद्दीप्त करते हुए होमकर्म के कारण बनते हैं ॥ २०१-२०२ ॥

जैसा कि कहा गया है—

'सात इन्द्रियों की शिखा के जाल से जटिल बोध नामक अग्नि में भावसमूह का भस्म हो जाना ही अग्नि का तर्पण (= होम) है ।'

इसी अभिप्राय से हमारे गुरु ने भी—

अनश्वरप्रकृति विश्वस्तचित्त एवं प्रशस्तउन्मेष वाले जो (योगी) विज्ञानरूपी अग्नि में निरन्तर अत्यधिक वषट् करते रहते हैं, निरन्तर समस्त प्रमेय की यागक्रीड़ा को करने वाले महायोगी उन लोगों का अवभृथस्नानमहोत्सव एक क्षण के लिये भी विराम नहीं लेता ।'

इत्यादि कहा है ॥ २०१-२०२ ॥

परस्वरूपावेशकारी होने के कारण यह अपने बारे में ही उपयोगी नहीं है बल्कि दूसरे के बारे में भी है—यह कहते हैं—

**परमेश्वर के शक्तिपात से पवित्र हुए जिस किसी व्यक्ति का सामने ध्यान कर जो स्वयं, उक्तवत् (= परमेश्वर के शक्तिपात से दीक्षित जैसा) रहता है वह दीक्षित हो जाता है ॥ २०३ ॥**

जिस किसी को—

'न मे प्रियश्चतुर्वेदो मद्भक्तः श्वपचोऽपि वा ।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥'

इत्याद्युक्तेरनियतं पारमेश्वरेणैव शक्तिपातेन पवित्रीकृतम्, अनुग्राह्यतया अग्रे भावयित्वा, उक्तवत् यथोक्तवास्तवजप्यादिनिष्ठतया, स्वयं—स्वस्वरूप एव तिष्ठेत्, येनासौ दीक्ष्यः—

'......................भुजङ्गवद्गरलसंक्रामः ।'

इत्याद्युक्तया तत्स्वरूपसंक्रमात्

'........................दीपाद्दीपमिवोदितम् ।'

इतिन्यायेन दीक्षितः,—पशुवासनाक्षैण्येन लब्धपरतत्त्वाधिगमो भवेदित्यर्थः ॥ २०३ ॥

नन्वकैकस्मादेव वास्तवाज्जप्यादेः स्वरूपविश्रान्तिः सिद्ध्येत् इति किं जप्यादिभिर्बहुभिरेवमुपदिष्टैः ?—इत्याशङ्क्याह—

**जप्यादौ होमपर्यन्ते यद्यप्येकैककर्मणि ।**
**उदेति रूढिः परमा तथापीत्थं निरूपितम् ॥ २०४ ॥**

---

'मुझे चारों वेदों का पण्डित प्रिय नहीं है । चाण्डाल भी मेरा भक्त है । उसे (ज्ञान) देना चाहिए और उससे (ज्ञान) लेना चाहिये । वह (उसी प्रकार) पूज्य हैं जैसे कि मैं ।'

इत्यादि उक्ति से अनिश्चित, परमेश्वरशक्तिपात से विचित्र किये गये को अनुग्राह्य होने के कारण आगे करके उक्त के समान = यथोक्त जप्य आदि में संलग्न होकर स्वयं अपने स्वरूप में ही स्थित होता है जिससे यह दीक्ष्य—

'सर्प के समान विष का संक्रमण'

इत्यादि उक्त युक्ति से उस स्वरूप का संक्रमण होने से

'दीप से जलाये गये दीप के समान'

इस न्याय से दीक्षित, पशुवासना के क्षीण होने से परतत्त्व की प्राप्तिवाला हो जाता है ॥ २०३ ॥

प्रश्न—किसी एक वास्तविक जप आदि से स्वरूपविश्रान्ति की प्राप्ति हो जाती है फिर इस प्रकार के उपदिष्ट अनेक जपादि से क्या लाभ ?—यह शङ्का कर कहते हैं—

यद्यपि जप से लेकर होमपर्यन्त एक-एक कर्म में रूढ़ि (= स्वरूपविश्रान्ति) उत्पन्न होती है तो भी ( रुचि और पात्रता को ध्यान में रखकर) ऐसा कहा गया ॥ २०४ ॥

इत्थमिति—जप्यादीनां बहुधात्वेन ॥ २०४ ॥

ननु जप्यादीनां बहूनां कस्मान्निरूपणं कृतम्, इति प्रश्निते तदेवोत्तरीकृतम्, इति किमेतत् ?—इत्याशङ्क्याह—

**यथाहि तत्र तत्राश्वः समनिम्नोन्नतादिषु ।**
**चित्रे देशे वाह्यमानो यातीच्छामात्रकल्पिताम् ॥ २०५ ॥**
**तथा संविद्विचित्राभिः शान्तघोरतरादिभिः ।**
**भङ्गीभिरभितो द्वैतं त्याजिता भैरवायते ॥ २०६ ॥**

यथाहि तत्र तत्र समनिम्नोन्नतादिषु भूभागेषु वाहकेल्यात्मनि कर्कशपांसुलादौ चित्रे देशे कटकमण्डलादिना वाह्यमानोऽश्वो वाहकस्येच्छामात्रकल्पिताम्—इच्छामात्रविधेयतां याति, तथा संविदपि शान्तघोरतरात्मभिः—अघोर-घोर-घोरतरात्मकपरादिशक्तित्रयैकात्म्येन निरूप्यमाणाभिः अत एव विचित्राभिर्जप्यादिभिर्भङ्गीभिरभितः समन्ततः, तत्—द्वैतं त्याजिता, भैरवायते—भेदापहस्तनपूर्वमनुत्तरपरसंविद्रूपतया परिस्फुरतीत्यर्थः ॥ २०५-२०६ ॥

एतदेव हृदयङ्गमीकर्तुं दृष्टान्तान्तरप्रदर्शनेनाप्युपपादयितुमाह—

**यथा पुरःस्थे मुकुरे निजं वक्त्रं विभावयन् ।**

---

इस प्रकार = जप आदि के अनेक होने से ॥ २०४ ॥

प्रश्न—जप आदि अनेक का निरूपण क्यों किया—ऐसा प्रश्न होने पर वही उत्तर दिया—ऐसा क्यों ? यह शङ्का कर कहते हैं—

**जिस प्रकार (सवार के द्वारा) समतल नीचे ऊँचे आदि तथा (घास, कङ्कड़, पत्थर आदि से भरे) विचित्र देश में दौड़ाया जाने वाला घोड़ा इच्छा मात्र से कल्पित (स्थिति) को प्राप्त करता है उसी प्रकार संवित् भी शान्त घोर घोरतर आदि विचित्र भंगियों के द्वारा सब प्रकार से द्वैतभाव को छोड़कर भैरवरूपता को प्राप्त करती हैं ॥ २०५-२०६ ॥**

जिस प्रकार सम नीची ऊँची भूमि पर वाहक के खेलवाले कड़ी धूलवाले देश में सैन्यमण्डल आदि के द्वारा दौड़ाया जाने वाला घोड़ा सवार की इच्छा के अनुसार चलता है उसी प्रकार संविद् भी शान्त घोरतर = अघोर घोर घोरतररूप परा आदि तीन शक्तियों से अभिन्न रूप से निरूप्यमाण इसलिये विचित्र जप्य आदि भंगियों से चारो ओर से द्वैत का त्याग कर भैरवस्वरूप हो जाती है = भेद हटाकर अनुत्तर पर संविद् के रूप में स्फुरण करती है ॥ २०५-२०६ ॥

इसी को हृदयङ्गम करने के लिय दूसरा दृष्टान्त दिखाकर उपपादन करने के लिये कहते है—

**भूयो भूयस्तदेकात्म वक्त्रं वेत्ति निजात्मनः ॥ २०७ ॥**
**तथा विकल्पमुकुरे ध्यानपूजार्चनात्मनि ।**
**आत्मानं भैरवं पश्यन्नचिरात्तन्मयीभवेत् ॥ २०८ ॥**

यथाहि कश्चिन्निजं वक्त्रं पुरोवर्तिनि मुकुरे, भूयो भूयो विभावयन्—यत्नेन निरीक्षमाणो, निजात्मनः संबन्धि बिम्बभूतं तद्वक्त्रं तदेकात्म वेति—मामकमेवेदं वक्त्रमिति निश्चयोत्पादात् प्रतिबिम्बाभेदेनैव मन्यते, तथैव पूजाद्यात्मन्यनेकस्मिन् विकल्पमुकुरे बहुशः स्वात्मानं भैरवतया पश्यन्, अचिरेणैव कालेन तन्मयी-भवेत्—तदैवैकात्म्यं प्राप्नुयादित्यर्थः ॥ २०७-२०८ ॥

तन्मयीभावो नाम किंस्वरूपः ? इत्याह—

**तन्मयीभवनं नाम प्राप्तिः सानुत्तरात्मनि ।**

अनुत्तरात्मनि प्राप्त्यापि किं भवेत् ?—इत्याशङ्क्याह—

**पूर्णत्वस्य परा काष्ठा सेत्यत्र न फलान्तरम् ॥ २०९ ॥**

सा—अनुत्तरात्मनि प्राप्तिः, सर्वतो नैराकाङ्क्ष्यात् 'पूर्णत्वस्य परा काष्ठा'

---

जिस प्रकार सामने वर्त्तमान दर्पण में अपने मुख को बार-बार देखता हुआ व्यक्ति दर्पण में वर्त्तमान प्रतिबिम्ब मुख को अपने मुख से अभिन्न समझता है उसी प्रकार ध्यान पूजा अर्चन आदि विकल्परूपी दर्पण में अपने को भैरव समझने वाला व्यक्ति शीघ्र ही भैरवमय हो जाता है ॥ २०७-२०८ ॥

जैसे कोई व्यक्ति अपने मुख के सामने स्थित दर्पण में बार-बार यत्नपूर्वक देखता हुआ अपने बिम्बभूत मुख को उस (प्रतिबिम्ब मुख) से अभिन्न समझता है = मेरा ही यह मुख है ऐसा निश्चय उत्पन्न होने से प्रतिबिम्ब से अभिन्न समझता है उसी प्रकार पूजा आदि रूप अनेक विकल्प दर्पण में अपने को भैरव के रूप में अनेक बार देखने वाला शीघ्र ही तन्मय हो जाता है = उससे अभिन्न हो जाता है।

प्रश्न—तन्मयीभाव का क्या स्वरूप है ? = यह कहते हैं—

तन्मयीभाव का अर्थ है—प्राप्ति और वह (भी) अनुत्तर रूप (शिवभाव की) ॥ २०९- ॥

प्रश्न—अनुत्तरात्मा में प्राप्ति से भी क्या होता है ?—यह शङ्का कर कहते हैं—

यह पूर्णत्व की अन्तिम सीमा है । इसके अतिरिक्त और कोई फल (की प्राप्ति शेष) नहीं रहता है ॥ -२०९ ॥

वह = अनुत्तरात्मा में प्राप्ति । सब ओर से निराकाङ्क्ष होने के कारण पूर्णता

इति, नात्र अन्यत् किञ्चित् फलं संभवेत्, नहि अत्र साकाङ्क्षत्वस्य नामाप्यवशिष्यते येन फलान्तरमपि मृग्यं भवेदिति भावः, साकाङ्क्षो हि प्रमाता तत्फलमर्थयमानः प्रथमं तावत्साधनमन्विष्यति, यथोदकाहरणार्थी घटं तत्साधनं च प्राप्य तत्तत्फलमासादयेत्, इति नैराकाङ्क्ष्यस्योत्पादात् औदासीन्यमवलम्बमानः स्वात्मन्येव तिष्ठेत्, किं तु न तत् पूर्णं नैराकाङ्क्ष्यं—क्षणान्तरेणाकाङ्क्षान्तरस्यापि उल्लासात्, अत एव न तत् पारमार्थिकं—साकाङ्क्षत्वेऽपि तस्य तथाकल्पनात्, अतश्च तत्रोत्पन्नेऽपि फले फलान्तरं संभाव्यम्—आकाङ्क्षान्तरस्यापि भावात्, यत्पुनः पारमार्थिकं पूर्णत्वं, तत्र न फलान्तरं संभवेत्—सर्वत एव साकाङ्क्षत्वस्य संक्षयात् ॥ २०९ ॥

तदाह—

**फलं सर्वमपूर्णत्वे तत्र तत्र प्रकल्पितम् ।**
**अकल्पिते हि पूर्णत्वे फलमन्यत्किमुच्यताम् ॥ २१० ॥**

पूर्णत्व इति—पूर्णत्वनिमित्तम्, तत्रेति—सर्वस्मिन् फले ॥ २१० ॥

एतदेव सप्रशंसमुपसंहरति—

**एष यागविधिः कोऽपि कस्यापि हृदि वर्तते ।**

---

की पराकाष्ठा यहाँ दूसरा कोई फल सम्भव नहीं है । यहाँ साकाङ्क्षता का नाम भी नहीं बचता जिससे कोई दूसरा फल खोजा जाय । साकाङ्क्ष ही प्रमाता उस फल को चाहता हुआ पहले साधन को खोजता है जैसे कि जलानयन चाहने वाला घट और उसके साधन को प्राप्त कर तत्तत् फल को प्राप्त करता है इस प्रकार निराकाङ्क्षा की उत्पत्ति के कारण उदासीन होता हुआ अपने में स्थित होता है किन्तु वह पूर्ण निराकाङ्क्ष नहीं है क्योंकि एक क्षण के बाद दूसरी आकाङ्क्षा भी उठती है । इसलिए वह पारमार्थिक नहीं है क्योंकि साकाङ्क्ष होने पर भी दूसरा उसकी वैसी कल्पना होती है । इसलिए वहाँ फल के उत्पन्न होने पर भी दूसरा फल संभावित है क्योंकि दूसरी आकाङ्क्षा भी है । किन्तु जो पारमार्थिक पूर्णता होती है वहाँ = फलान्तर सम्भव नहीं होता क्योंकि आकांङ्क्षा सब ओर से नष्ट हो गयी होती है ॥ २०९ ॥

वह कहते हैं—

समस्त फल अपूर्णता की अवस्था में होता है । अकल्पित के विषय में स्थान-स्थान पर (फल की) कल्पना की जाती है । पूर्णता होने पर और कौन सा फल (प्राप्त होने को) कहा जाय ॥ २१० ॥

पूर्णता = पूर्णता का कारण । वहाँ = सब फल में ॥ २१० ॥

इसी का प्रशंसा के साथ उपसंहार करते हैं—

**यस्य प्रसीदेच्चिच्चक्रं द्रागपश्चिमजन्मनः ॥ २११ ॥**

नन्वेवंविधस्य यागविधेरधिगममात्रादेव किं नामानन्यसामान्यत्वमस्य भवेत् यदेवमुक्तम् ?—इत्याशङ्क्याह—

**अत्र यागे गतो रूढिं कैवल्यमधिगच्छति ।**
**लोकैरालोक्यमानो हि देहबन्धविधौ स्थितः ॥ २१२ ॥**

अत्र—एवंविधे यागे, लब्धप्ररोहः कश्चिदपश्चिजन्मा देहबन्धविधौ स्थितोऽपि—जीवन्नपि, लोकैः—बद्धात्मभिरन्यैः

'ग्राह्यग्राहकभावो हि सामान्यः सर्वदेहिनाम् ।'

इत्याद्युक्त्या समानकक्ष्यतयैव व्यवहरन्नालोक्यमानः, कैवल्यमधिगच्छति—ग्राह्यग्राहकभावाद्यात्मकभेदापहस्तनेन प्रत्यभिज्ञातशिवस्वभावस्वात्ममात्ररूपतया प्रस्फुरतीत्यर्थः, अयमेव हि समानेऽपि व्यवहारे बद्धमुक्तयोर्विशेषो—यन्मुक्तस्य स्वाङ्गरूपतया भावा अवभासन्ते, बद्धस्य तु स्वरूपतः परस्परतश्चात्यन्तं भेदेनेति, यदुक्तम्—

'मेयं साधारणं मुक्तः स्वात्माभेदेन मन्यते ।

---

यह अद्‌भुत यागविधि अन्तिम जन्म वाले जिस व्यक्ति के ऊपर चित्-चक्र झट से प्रसन्न होता है ऐसे किसी (पुण्यवान्) के हृदय में सम्पन्न होती है ॥ २११ ॥

प्रश्न—इस प्रकार की यागविधि के जान लेने से ही इसका (= ज्ञाता का) क्या असाधारण हो जाता है जो ऐसा कहा गया?—यह शङ्का कर कहते हैं—

इस याग के विषय में रूढ़ भावना को प्राप्त (पुरुष) यद्यपि सामान्य लोगों के द्वारा देहबन्धन में पड़ा हुआ दीखता है तो भी (वह) कैवल्य को प्राप्त हुआ रहता है ॥ २१२ ॥

यहाँ = इस प्रकार के याग में, उत्थान को प्राप्त होने वाला कोई अन्तिम जीवन वाला देहबन्ध की विधि में स्थित भी = जीवित रहते हुए भी, लोगों के द्वारा = अन्य बद्ध आत्माओं के द्वारा

'ग्राह्यग्राहक भाव सब शरीरधारियों के लिये सामान्य है ।'

इत्यादि उक्ति के अनुसार समान रूप से व्यवहार करता हुआ दिखलाई पड़ने वाला कैवल्य को प्राप्त करता है = ग्राह्यग्राहक भाव रूप भेद को हटाकर प्रत्यभिज्ञात शिवस्वभाव स्वात्ममात्ररूप से स्फुरण करता है । समान व्यवहार होने पर भी बद्ध मुक्त में यही अन्तर है कि सांसारिक भाव समूह मुक्त आत्मा को अपने अङ्ग के रूप में भासित होते हैं और बद्ध को स्वरूपतः और परस्पर अत्यन्त भिन्न । जैसा कि कहा गया है—

महेश्वरो यथा बद्धः पुनरत्यन्तभेदवत् ॥ इति ॥ २१२ ॥

अत एव जीवन्मुक्तविषयतया भगवानपि एवमभ्यधात्, इत्याह—

**अत्र नाथः समाचारं पटलेऽष्टादशेऽभ्यधात् ।**

अष्टादशे पटले—प्रकृतत्वात् श्रीमालिनीविजयसत्के ॥

अत्रत्यमेव ग्रन्थं पठति—

**नात्र शुद्धिर्न चाशुद्धिर्न भक्ष्यादिविचारणम् ॥ २१३ ॥**
**न द्वैतं नापि चाद्वैतं लिङ्गपूजादिकं न च ।**
**न चापि तत्परित्यागो निष्परिग्रहतापि वा ॥ २१४ ॥**
**सपरिग्रहता वापि जटाभस्मादिसंग्रहः ।**
**तत्त्यागो न व्रतादीनां चरणाचरणं च यत् ॥ २१५ ॥**
**क्षेत्रादिसंप्रवेशश्च समयादिप्रपालनम् ।**
**परस्वरूपलिङ्गादि नामगोत्रादिकं च यत् ॥ २१६ ॥**
**नास्मिन्विधीयते किञ्चिन्न चापि प्रतिषिध्यते।**
**विहितं सर्वमेवात्र प्रतिषिद्धमथापि च ॥ २१७ ॥**
**किं त्वेतदत्र देवेशि नियमेन विधीयते ।**
**तत्त्वे चेतः स्थिरीकार्यं सुप्रसन्नेन योगिना ॥ २१८ ॥**

---

'मुक्तपुरुष मेय को साधारण अर्थात् अपने से अभिन्न मानता है जैसे कि बद्ध महेश्वर (मेय को) अत्यन्त भेदयुक्त' समझता है ॥ २१२ ॥

इसीलिये जीवन्मुक्त विषय की दृष्टि से भगवान् ने भी ऐसा कहा—यह कहते हैं—

परमेश्वर ने इस विषय में (मालिनीविजयतन्त्र के) अठारहवें पटले में विचार प्रकट किया है ॥ २१३- ॥

अठारहवें अध्याय में = प्रस्तुत होने से मालिनीविजय में ॥ २१२-२१३ ॥

वहीं के ग्रन्थ को पढ़ते हैं—

इस (= शैवभाव की अवस्था) में न शुद्धि न अशुद्धि, न भक्ष्याभक्ष्य का विचार, न द्वैत न अद्वैत, न लिङ्ग आदि की पूजा, न उसका परित्याग, न अपरिग्रह न परिग्रह, न जटा भस्म आदि का संग्रह, न उनका त्याग, न व्रत आदि का अनुष्ठान, क्षेत्र आदि में प्रवेश, समय (= नियम) आदि का परिपालन, दूसरा वेष लिङ्ग आदि नाम गोत्र आदि (कुछ करणीय) नहीं रहता । इसमें न तो किसी का विधान किया जाता है न निषेध । इस अवस्था में सब विहित है अथवा सब प्रतिषिद्ध है । हे

**तच्च यस्य यथैव स्यात्स तथैव समाचरेत् ।**
**तत्त्वे निश्चलचित्तस्तु भुञ्जानो विषयानपि ॥ २१९ ॥**
**न संस्पृश्येत दोषः स पद्मपत्रमिवाम्भसा ।**
**विषापहारिमन्त्रादिसंनद्धो भक्षयन्नपि ॥ २२० ॥**
**विषं न मुह्यते तेन तद्वद्योगी महामतिः ।**

अनेन च वास्तवजप्यादिसामनन्तर्येण अनुजोद्देशोद्दिष्टस्य विधिनिषेधतुल्यत्वस्याप्युपक्षेपः कृत् ॥ २१३-२२० ॥

एतच्च बहुक्षोदक्षमत्वेन वैषम्यात् स्वयमेव व्याचष्टे—

**अशुद्धं हि कथं नाम देहाद्यं पाञ्चभौतिकम् ॥ २२१ ॥**
**प्रकाशतातिरिक्ते किं शुद्ध्यशुद्धी हि वस्तुनः ।**

यन्नाम हि पाञ्चभौतिकं देहाद्यं

'रूपादिपञ्चवर्गोऽयं विश्वमेतावदेव हि ।'

इत्याद्युक्तयुक्त्या निखिलमेव जगदुदरवर्ति पदार्थजातं, तत् कथमिवाशुद्धम्

---

देवेशि ! किन्तु इतना विधान अवश्य है कि योगी सुप्रसन्न होकर तत्त्व में चित्त को स्थिर करे । वह (= चित्तस्थिरीकरण) जिसका जिस प्रकार हो उसे वैसे ही करना चाहिये । तत्त्व में चित्त को स्थिर करने वाला विषयों का भोग करता हुआ भी दोषों से उसी प्रकार अस्पृष्ट रहता है जैसे पानी से कमल का पत्ता । जैसे विषहरण करने वाले मन्त्र को सिद्ध करने वाला व्यक्ति विष का भक्षण करने पर भी उससे मूर्च्छित नहीं होता उसी प्रकार महा बुद्धिमान् योगी भी (विषयों का भोग करने पर भी दोष से लिप्त नहीं होता) ॥ -२१३-२२१- ॥

इससे वास्तविक जप्य आदि के समनन्तर अनुजोद्देशोद्दिष्ट विधिनिषेध की तुल्यता का भी उपक्षेप किया गया ॥ २१३-२२० ॥

बहुत विचारसह होने से विषम होने के कारण स्वयं इसकी व्याख्या करते हैं—

पाञ्चभौतिक देह आदि पदार्थ कैसे अशुद्ध हो सकते हैं । प्रकाशता के अतिरिक्त वस्तु की शुद्धि अशुद्धि (नाम की कोई विशेषता) नहीं होती है ॥ -२२१-२२२- ॥

जो यह पाञ्चभौतिक शरीर आदि

'जो रूप आदि यह पाँच वर्ग है, इतना ही यह विश्व है ।'

इत्यादि उक्ति के अनुसार संसार के उदर में वर्त्तमान जो समस्त पदार्थसमूह है

अर्थात् शुद्धं वा, यतः—किं शुद्ध्यशुद्धी प्रकाशतातिरिक्ते बहिः सत्यपि वस्तुनि नीलानीलादिन्यायेन प्रतिभासविकारकारित्वाभावात् वस्तुधर्मतया न भवत इत्यर्थः, अतश्च यस्य यो न धर्मः स तथा न भवेदिति 'इदं शुद्धमिदमशुद्धम्' इति विभागो दुष्येत्, ननु अनुभवापह्नवोऽयं—लोके निर्बाधस्य शुद्ध्यशुद्धिव्यवहारस्य दर्शनात् ? नैतत्—नहि वयं शुद्ध्यशुद्धिव्यवहारमपह्नुमहे, किं तु 'ते वस्तुधर्मतया न भवतः' इत्युच्यते, प्रमाता हि व्यवस्यति—इदं शुद्धमिदमशुद्धमिति, वस्तुधर्मत्वे हि अनयोरशुद्धं न कदाचिदपि शुद्ध्येत् शुद्धमपि वा नाशुद्धं स्यात्, नहि नीलमनीलमपि कदाचिद्भवेत्—स्वभावस्यान्यथाकर्तुमशक्यत्वात्, तथात्वे च

'तैजसानां मणीनां च सर्वस्याश्ममयस्य च ।
भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥'

इत्यादिश्रुतीनां युक्तिबाधितत्त्वं स्यात् ॥ २२१ ॥

एवं प्रमातृधर्मत्वेऽशुद्धं चेद्वस्त्वन्तरेण शोध्यते, तत् किं शुद्धेनाशुद्धेन वा? इत्याह—

**अशुद्धस्य च भावस्य शुद्धिः स्यात्तादृशैव किम् ॥ २२२ ॥**

---

वह अशुद्ध अथवा शुद्ध कैसे ? क्योंकि क्या शुद्धि और अशुद्धि प्रकाश से भिन्न है? वस्तु के बाह्य होने पर भी वे नीलानील आदि न्याय (= नील कभी भी अनील नहीं हो सकता इस न्याय) से प्रतिभासविकारकारी न होने के कारण वस्तु के धर्म नहीं हैं । इसलिये जो जिसका धर्म नहीं होता वह वैसा नहीं होता । इस प्रकार 'यह शुद्ध है यह अशुद्ध' ऐसा विभाग दूषित हो जायगा ।

प्रश्न—यह तो अनुभव का अपलाप है क्योंकि लोक में शुद्धि अशुद्धि का व्यवहार निर्बाध दिखलायी देता है ? (उत्तर में कहते हैं—) ऐसा नहीं है । हम शुद्धि अशुद्धि के व्यवहार का अपलाप नहीं करते किन्तु 'वे वस्तु के धर्म नहीं हैं—यह कहते हैं । प्रमाता निश्चित करता है कि यह शुद्ध है यह अशुद्ध । वस्तु का धर्म होने पर इन दोनों में से अशुद्ध न तो कभी शुद्ध होगा और न शुद्ध अशुद्ध । नील कभी अनील नहीं होता क्योंकि स्वभाव को बदला नहीं जा सकता। वैसा होने पर—

'तैजस (= सोने आदि से बने आभूषण आदि) मणियों और पत्थर के बने समस्त पदार्थ की शुद्धि मनीषियों ने भस्म जल और मिट्टी से कही है ।'

इत्यादि श्रुतियाँ युक्तिबाधित हो जायेंगी ॥ २२१ ॥

इस प्रकार प्रमाता का धर्म होने पर यदि अशुद्ध वस्तु दूसरी (वस्तु) से शुद्ध की जाती है तो वह शोधन शुद्ध (वस्तु के द्वारा होता है) या अशुद्ध के द्वारा ? यह कहते हैं—

**अन्योन्याश्रयवैयर्थ्यानवस्था इत्थमत्र हि ।**

तत्राशुद्धस्य पृथिव्यादेर्भावस्य तादृशेनैवाशुद्धेन जलादिना भावान्तरेण शुद्धिः स्यात्—नैष पक्षो युज्यते इत्यर्थः, अत्र हि इत्थं—वक्ष्यमाणेन प्रकारेण अन्योन्याश्रयतादिदूषणजालमापतेत् ॥ २२२ ॥

तदाह—

**पृथिवी जलतः शुद्ध्येज्जलं धरणितस्तथा ॥ २२३ ॥**
**अन्योन्याश्रयता सेयमशुद्धत्वेऽप्ययं क्रमः ।**
**अशुद्धाज्जलतः शुद्ध्येद्धरेति व्यर्थता भवेत् ॥ २२४ ॥**
**वायुतो वारिणो वायोस्तेजसस्तस्य वान्यतः ।**

अशुद्धादेव हि जलादेरशुद्धस्य पृथिव्यादेः शुद्धावुभयोरविशेषात् परस्परमपि स्यात्—इतीदमन्योन्याश्रयत्वम्, एवमशुद्धस्यापि अशुद्धेनैवाशुद्धिश्चेत् क्रियते तदुभयोरप्यविशेषात् अन्योन्याश्रयत्वम् इत्युक्तम् 'अशुद्धत्वेऽप्ययं क्रम' इति, एवं वैयर्थ्याद्यपि योज्यम्, अथाशुद्धस्य पृथिव्यादेरशुद्धादेव जलादेः शुद्धिः तत्तस्याशुद्धत्वाविशेषात् स्वयमेवास्तु, किमन्येनापि अशुद्धेन जलादिना—इति वैयर्थ्यम्,

---

अशुद्ध पदार्थ की वैसे (= अशुद्ध पदार्थ) से शुद्धि क्या है ? इस प्रकार तो अन्योऽन्याश्रय, वैय्यर्थ्य और अनवस्था दोष आ जाता है ॥ -२२२-२२३- ॥

अशुद्ध पृथिव्यादि पदार्थ की उसी प्रकार के अशुद्ध जल आदि पदार्थान्तर से शुद्धि होती है—यह पक्ष ठीक नही है । यहाँ ऐसा = वक्ष्यमाण प्रकार से, अन्योऽन्याश्रय दोष आने लगेगा ॥ २२२ ॥

वह कहते हैं—

पृथिवी जल से शुद्ध होती है उसी प्रकार जल पृथ्वी से शुद्ध होता है। यह तो अन्योऽन्याश्रयता दोष हुआ । अशुद्धता में भी यही क्रम है । अशुद्ध जल से धरा शुद्ध होती है—यह व्यर्थ है । उसी प्रकार वायु से जल की तेज से वायु की अथवा उस (= तेज) की अन्य से शुद्धि व्यर्थ है ॥ -२२३-२२५- ॥

अशुद्ध जल से अशुद्ध पृथिवी आदि की शुद्धि होने पर दोनों के समान होने से (शुद्धत्वं) भी परस्पर होगा—यह अन्योऽन्याश्रय है । इसी प्रकार अशुद्ध की अशुद्ध से ही अशुद्धि की जाती है तो दोनों के समान होने से अन्योऽन्याश्रय होता है - कहा गया—अशुद्धि में भी यह क्रम है । इसी प्रकार व्यर्थता आदि समझनी चाहिये । यदि अशुद्ध पृथिवी आदि की अशुद्ध ही जल आदि से शुद्धि होती है तो उसकी अशुद्धि समान होने से (अशुद्धि) स्वयं ही रहे अन्य अशुद्ध जल आदि से

अथ पृथिवी जलाच्छुद्धयेत्, जलमपि वायोः, सोऽपि तेजसः, तदप्यन्यस्मादाकाशादेः, तदप्यन्यतः—इत्यनवस्थानम्, एवमशुद्धस्य पृथिव्यादेर्भावस्य अशुद्धादन्यतो जलादेः शुद्धिर्वा न घटते, इत्युक्तं स्यात् ॥ २२३-२२४ ॥

एवं तर्हि अन्यस्माच्छुद्धादेव शुद्धिः स्यात्, इत्याह—

**बहुरूपादिका मन्त्राः पावनात्तेषु शुद्धता ॥ २२५ ॥**

पावनादिति—अर्थात् स्वभावतः ॥ २२५ ॥

नन्वाकाशादिभूतपञ्चकगुणभूतशब्दात्मका मन्त्रा यदि स्वभावत एव शुद्धाः, तत् किमिति स्वयमेव पृथिव्यादयोऽपि स्वभावत एव शुद्धा न स्युः ? इत्याह—

**मन्त्राः स्वभावतः शुद्धा यदि तेऽपि न किं तथा ।**

ननु मन्त्राणां पावनत्वे शिवात्मतालक्षणं निमित्तान्तरमस्ति ? इत्याशङ्क्याह—

**शिवात्मता तेषु शुद्धिर्यदि तत्रापि सा न किम् ॥ २२६ ॥**

ननु यदि नाम मन्त्राणां शिवात्मता पावनत्वे निमित्तं तत् तत्रापि भूतपञ्चके

---

क्या—यही व्यर्थता है । यदि पृथ्वी जल से शुद्ध होती है, जल वायु से, वह तेज से और वह भी अन्य आकाश आदि से, वह भी दूसरे से—तो इस प्रकार अनवस्था होती है । इस प्रकार अशुद्ध पृथिवी आदि भाव की अशुद्ध अन्य जल आदि से शुद्धि घटित नहीं होती—यह कहना चाहिये था ॥ २२३-२२४ ॥

तो अन्य शुद्ध से ही शुद्धि हो—यह कहते हैं—

मन्त्र अनेक प्रकार के होते हैं स्वभावतः पवित्र होने के कारण उनमें शुद्धता रहती है ॥ -२२५ ॥

पवित्र होने से—अर्थात् स्वभावतः पवित्र होने से ॥ २२५ ॥

प्रश्न—यदि आकाश आदि पाँच भूतों के गुणभूत शब्द वाले मन्त्र स्वभावतः ही शुद्ध हैं तो पृथिवी आदि भी स्वभावतः ही क्यों नहीं शुद्ध हैं ?—यह कहते हैं—

प्रश्न है कि यदि मन्त्र स्वभावतः शुद्ध हैं तो वे (पृथिवी आदिभूत) भी स्वभावतः क्यों नहीं शुद्ध होते ? ॥ २२६- ॥

प्रश्न—मन्त्रों की पवित्रता में शिवात्मता लक्षण वाला कारणान्तर है ?—यह शङ्का कर कहते हैं—

यदि उन (मन्त्रों) में शिवात्मता शुद्धि है तो क्या वहाँ (= पृथिव्यादि में) वह (= शिवात्मता) नहीं हैं ॥ -२२६ ॥

यदि पवित्रता के विषय में मन्त्रों की शिवात्मता कारण है तो उन पाँच भूतां मे

सा न किं भवेत्, शिवात्मता हि प्रकाशरूपत्वमुच्यते, तेन विना च न किंचिदपि स्फुरति, इति प्रकाशमानत्वान्यथानुपपत्त्या अस्त्येवैषां तदात्मत्वम् ॥ २२६ ॥

अथ समानेऽपि शिवात्मत्वे मन्त्राणां मननत्राणधर्मकतया तथात्वेन परिज्ञानमस्ति, न धरादीनाम्, इति तद्वैलक्षण्येन मन्त्राणामेव शुद्धत्वमिति मतम्, इत्याह—

**शिवात्मत्वापरिज्ञानं न मन्त्रेषु धरादिवत् ।**
**ते तेन शुद्धा इति चेत्तज्ज्ञप्तिस्तर्हि शुद्धता ॥ २२७ ॥**

एवं तर्हि शिवात्मत्वेन ज्ञप्तिर्नाम शुद्धतोच्यते, इत्याह—'तज्ज्ञप्तिः' इति ॥ २२७ ॥

सा च धरादिष्वपि समाना—इत्याह—

**योगिनं प्रति सा चास्ति भावेष्विति विशुद्धता।**

पशुप्रायाणां हि मन्त्रेष्वपि शिवात्मत्वेन परिज्ञानं नास्ति,—इति तान् प्रति तेषां स्वकार्यकारित्वाभावात् संभावनीयमपि अशुद्धत्वम् । धरादीनां च योगिनं प्रति तत्परिज्ञानमस्ति,—इति तेषामपि विशुद्धत्वम् । एतदेव हि नाम योगिनो योगित्वं

---

भी वह क्यों नहीं होती । शिवात्मता प्रकाशरूपता को कहते हैं । उसके विना किसी का स्फुरण नहीं होता । इसलिये प्रकाशमानता की अन्यथा अनुपपत्ति से इनकी तदात्मता है ही ॥ २२६ ॥

प्रश्न—शिवात्मता समान रहने पर भी मन्त्रों के मनन त्राणधर्म वाला होने के कारण उस रूप में परिज्ञान है किन्तु पृथिवी आदि का नहीं है । इस विलक्षणता के कारण मन्त्रों की ही शुद्धता है—यह कहते हैं—

जिस प्रकार पृथिवी आदि में शिवात्मत्व का परिज्ञान है उस प्रकार मन्त्रों में नहीं है । वे (= मन्त्र) यदि उस (शिवात्मता) के ज्ञान, के कारण शुद्ध हैं तो ज्ञप्ति ही शुद्धता है ॥ २२७ ॥

तो शिवात्म रूप में ज्ञान ही शुद्धता कही जाती है इसलिए कहते हैं—वह ज्ञान ॥ २२७ ॥

और वह पृथिवी आदि में भी समान है—यह कहते हैं—

और योगी के लिये भावों (= पृथिव्यादि) में भी वह (= शिवात्मक ज्ञान) है इसलिये (उनके लिये) भावों में शुद्धता है ॥ २२८- ॥

पशुप्राय: लोगों का मन्त्रों के विषय में भी शिवात्मरूप से ज्ञान नहीं है इसलिये उनके प्रति उनके स्वकार्यकारी न होने से अशुद्धि की सम्भावना हो सकती है लेकिन पृथिवी आदि का योगियों को ज्ञान है इसलिये वे शुद्ध हैं । योगी का

यत् निखिलमिदं विश्वं शिवात्मतया परिजानाति इति । यथोक्तम्—

'यः पुनः सर्वतत्त्वानि वेत्त्येतानि यथार्थतः।
स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः ॥' इति ।

अतश्च यथोक्तयुक्तिबलाद्भावानां स्वात्मनि शुद्ध्यशुद्धिविभागो न सिद्ध्येत्—इत्युक्तं स्यात् ॥

ननु केनोक्तं यद्भावानां युक्तिबलेन शुद्ध्यशुद्धिविभाग—इति, स हि शास्त्रेण व्यवस्थाप्यते, इत्याह—

**ननु चोदनया शुद्ध्यशुद्ध्यादिकविनिश्चयः ॥ २२८ ॥**

चोदना विधायकं वाक्यम्, यदाहुः—

'चोदनेति क्रियायाः प्रवर्तकं वचनम् ।' इति ।

तया यच्छुद्धतया विहितं तच्छुद्धम्, अन्यथा त्वन्यत् । यत् स्मृतिः—

'ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः।
यान्यधःस्थान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥' इति ।

आदि ग्रहणेन भक्ष्याभक्ष्यादि ॥ २२८ ॥

---

योग यही है कि वह समस्त विश्व को शिवरूप में जानता है । जैसा कि कहा गया है—

'जो इन समस्त तत्त्वों को यथार्थ रूप से जानता है वह गुरु मेरे समान मन्त्रवीर्य का प्रकाशक कहा गया है ।'

इसलिये उक्तयुक्ति के बल से पदार्थों का अपने में शुद्धि-अशुद्धि का विभाग सिद्ध नहीं होता—यह कहना चाहिये ॥ २२८ ॥

प्रश्न—कौन कहता है कि पदार्थो की शुद्धि-अशुद्धि का विभाग युक्ति के बल से है । वह तो शास्त्र से व्यवस्थापित होता है—यह कहते हैं—

प्रश्न है कि शुद्धि अशुद्धि आदि का निश्चय तो विधिवाक्य से होता है (न कि तन्त्र अर्थात् युक्ति या तर्क से) ? ॥ -२२८ ॥

चोदना = विधायक वाक्य । जैसा कि कहते है—

'चोदना क्रिया में प्रवृत्ति कराने वाला वचन है ।'

उस (चोदना) के द्वारा जो शुद्ध कहा गया वह शुद्ध और नहीं तो दूसरा (अर्थात् अशुद्ध)। जैसा कि स्मृति कहती है—

'नाभि के ऊपर जितने छिद्र हैं वे सम्पूर्णतया शुद्ध हैं । जो नीचे हैं वे अशुद्ध। क्योंकि मल शरीर से गिरते है ।'

ननु यदि नाम शुद्ध्यशुद्धिविभागे चोदनैव निमित्तं, तदस्तु को दोषः, किंतु तदविभागेऽपि एषा शिवोदिता चोदनैव निमित्तं 'नात्र शुद्धिर्न चाशुद्धिः' इति, तदाह—

**इत्थमस्तु तथाप्येषा चोदनैव शिवोदिता ।**

नन्वेवमुभयोरपि चोदनात्वाविशेषे का नाम तावत् प्रमाणभूता भवेत्, यदाश्रयणेन शुद्ध्यशुद्ध्यादिविनिश्चयं विधास्यामः ? इत्याशङ्क्याह—

**का स्यात्सतीति चेदेतदन्यत्र प्रवितानितम् ॥ २२९ ॥**

अन्यत्रेति, इह पुनर्ग्रन्थविस्तरभयात्र प्रवितानितमिति भावः । इह खलु समयोपस्कृतस्य शब्दस्यार्थावबोधमात्रे स्वातन्त्र्यम्, अर्थतथात्वेतरपरिनिश्चये पुरुषमुखप्रेक्षित्वात् पारतन्त्र्यमपरिहार्यम्; तेनाप्तोक्तत्वादेव असौ प्रमाणीभवति, अन्यथा पुनरप्रमाणमेव,—इति निश्चयः । ततश्च वैदिक्यामस्यां वा चोदनायां साक्षात्कृतनिखिलधर्मा सकलजगदुद्दिधीर्षापर एक एव परमेश्वरः प्रामाण्यनिबन्धनं, तदुपदिष्टत्वात् सर्वशास्त्रणाम् । न च वैदिक्यां चोदनायामकर्तृत्वं वक्तुं (शक्यं), रचनावत्त्वात्, सर्वरचनानां कर्तृपूर्वकत्वात्; अतश्चोभयोरपि चोदनयोः सत्त्वम-

---

आदि ग्रहण से भक्ष्याभक्ष्य आदि को समझना चाहिए ॥ २२८ ॥

प्रश्न—यदि शुद्धि अशुद्धि के विभाग में चोदना ही कारण है तो रहे क्या हर्ज है । किन्तु उनके अविभाग में भी चोदना ही कारण है—'यहाँ न कोई शुद्धि है न अशुद्धि ।' यह कहते हैं—

उत्तर—यह ठीक है फिर भी यह विधिवाक्य भी शिवोक्त ही हैं ॥ २२९- ॥

प्रश्न—दोनों (विधिवाक्यों) में चोदना के समान होने से कौन प्रमाण है जिसके आधार पर शुद्धि अशुद्धि-आदि का निश्चय करे?—यह शङ्का कर कहते हैं—

(वैदिक एवं तान्त्रिक दोनों प्रकार के विधिवाक्यों में) कौन समीचीन है, यदि यह प्रश्न पूछा जाय तो इसका उत्तर अन्यत्र दिया गया है ॥-२२९ ॥

अन्यत्र = यहाँ ग्रन्थविस्तार के भय से नहीं कहा गया । समय से प्राप्त शब्द अर्थबोध में स्वतन्त्र है किन्तु अर्थान्तर के निश्चय में पुरुषमुखप्रेक्षी होने के कारण पारतन्त्र्य अनिवार्य है । इसलिये आप्तपुरुष से कथित होने के कारण ही यह प्रमाण होता है अन्यथा अप्रमाण ही है—यह निश्चय है । इस कारण वेदवाली अथवा इस (= तान्त्रिकी) चोदना में समस्त धर्म का साक्षात्कार करने वाले समस्त संसार का उद्धार करने में तत्पर एक परमेश्वर ही प्रमाण का कारण है । क्योंकि समस्त शास्त्र उनके द्वारा उपदिष्ट हैं । वैदिकी चोदना कर्तृत्वविहीन है—ऐसा नहीं कह सकते क्योंकि (वह भी) रचना है और सभी रचनायें कर्तृपूर्वक होती हैं । इसलिये दोनों

विशिष्टम्,—इति किमाश्रयणेन तावच्छुद्ध्यादिविवेकं कुर्मः,—इति न जानीमः ।

न च अनयोः परस्परं बाध्यबाधकभावो युक्तः तुल्यबलत्वात्, एकतरत्र च दौर्बल्यनिमित्तानुलम्भात् । ननु अस्त्येव एकतरत्र दौर्बल्यनिमित्तं यद्वेदबाह्यत्वं नाम श्रुत्यन्तराणाम्, यदाहुः—

'वेदवर्त्मानुवर्ती च प्रायेण सकलो जनः ।
वेदबाह्यस्तु यः कश्चिदागमो वञ्चनैव सा ।' इति ।

अतश्च वेदकर्तृक एवागमान्तराणां बोधः—इति तदाश्रयेणैव युक्तः शुद्ध्यादिविभागः ॥ २२९ ॥

ननु यद्येवं तदितो बाह्यत्वाद्वैदिकीनां चोदनानामनयापि बाधः किं न भवेत् समानन्यायत्वात्, नहि एकतरत्र बलवत् किञ्चित्कारणमुत्पश्यामो, येन अन्यत्र नियमेन बाधः स्यात् ? तदाह—

**वैदिक्या बाधितेयं चेद्विपरीतं न किं भवेत् ।**

ननु यद्येवं तत्परस्परव्याहतत्वादुभयमपीदमप्रमाणम्,—इति न किञ्चित्

---

चोदनाओं का सत्त्व समान है । तो फिर किस के आधार पर शुद्धि आदि का भेद करें—यह (हम) नहीं जानते ।

इन दोनों (= वैदिकी एवं तान्त्रिकी चोदनाओं) में बाध्यबाधक भाव भी ठीक नहीं है क्योंकि दोनों समान बलवाली हैं और एकत्र कहीं दुर्बलता का कारण उपलब्ध नहीं होता । प्रश्न—एक ओर दुर्बलता का कारण है कि दूसरी श्रुतियाँ वेदबाह्य हैं । जैसा कि कहते हैं—

'प्रायः सभी लोग वैदिक मार्ग का अनुसरण करने वाले है । जो कोई आगम वेद से बाहर है वह धोखा है ।'

इसलिये दूसरे आगमों का बाध वेदकर्तृक ही है इसलिये शुद्धि अशुद्धि आदि का विभाग उसके आधार पर ही समीचीन है ॥ २२९ ॥

प्रश्न—यदि ऐसा है तो इससे बाह्य होने के कारण वैदिकी चोदनाओं का इसके द्वारा भी बाध क्यों नहीं होता क्योंकि तुल्यन्याय है । एक पक्ष में कोई बलवान् कारण (हम) नहीं देखते जिससे अन्यत्र नियमपूर्वक बाध हो—यह कहते हैं—

यदि कहें कि वैदिकी चोदना से यह (= तान्त्रिकी चोदना) बाधित हो जायगी ? तो (हम कहते हैं कि) विपरीत क्यों नहीं होता ? (= तान्त्रिकी चोदना वैदिकी चोदना का बाध क्यों नहीं करती ?) ॥ २३०- ॥

प्रश्न—यदि ऐसा है तो परस्पर व्याहत होने से यह दोनों अप्रमाण है—फिर

सिद्ध्येत् ? नैतत् ईश्वरप्रणीतत्वाख्यस्य बलवतः प्रामाण्यकारणस्योभयत्रापि सद्भावात् । तर्हि सुतरामिदमप्रामाण्यकारणं—यदेकस्मिन्नपि उपदेष्टरि परस्परव्याहतत्वं नामेति ? नैतत्—अधिकारिभेदेन तथोपदेशात् । भगवता हि शुद्ध्यादि सामान्येन सर्वपुरुषविषयतया चोदितं, विशिष्टविषयतया त्विदम्, इति न कश्चिदनयोरप्रामाण्यपर्यवसायी दोषः, तत् उभयोरपि चोदनयोर्भिन्नविषयत्वेनावस्थितेः सत्त्वमविशिष्टमेव—इति सिद्धम् ॥

ननु कथमनयोरविशिष्टं सत्त्वं शुद्ध्यादिविधेः सर्वपुरुषविषयतया प्रवृत्तावपि क्वचिद्विषये बाधात् ? इत्याशङ्क्याह—

**सम्यक्चेन्मन्यसे बाधो विशिष्टविषयत्वतः ॥ २३० ॥**
**अपवादेन कर्तव्यः सामान्यविहिते विधौ ।**

यदि नाम बाधावृत्तं सम्यगवबुद्ध्यसे, तत्र कस्या अपि चोदनायाः सत्त्वहानिः । तथा हि निरवकाशत्वाद्विशेषात्मा अपवादविधिः सर्वत्र लब्धावकाशं सामान्यात्मकमुत्सर्गविधिं बाधते, इति वाक्यविदः । सर्वविषयावष्टम्भेन लब्धप्रतिष्ठोऽपि हि उत्सर्गविधिरपवादविधेर्विशिष्टं विषयं परिकल्प्य विषयान्तरे

---

कुछ भी सिद्ध नहीं होगा ?—ऐसा नहीं हैं क्योंकि ईश्वरप्रणीतत्व नामक बलवान् प्रामाण्यकारण दोनों ओर हैं । प्रश्न—तो यह आसानी से अप्रामाण्य का भी कारण है कि एक भी उपदेष्टा के विषय में परस्पर व्याघात हो? ऐसा नहीं है क्योंकि अधिकारी के भेद से वैसा उपदेश हैं । भगवान् ने शुद्धि आदि को सामान्य रूप से सबलोगों के लिये बनाया और इसे विशिष्ट विषय के रूप में, इस प्रकार इन दोनों में अप्रमाण्यपर्यवसायी कोई दोष नहीं है । इसलिये दोनों चोदनाओं का सत्त्व, भिन्न विषय के रूप में स्थित होने से, समान है—यह सिद्ध हुआ ॥ २३० ॥

प्रश्न—इन दोनों का सत्त्व अविशिष्ट क्यों है ? क्योंकि शुद्धि आदि विधि के सबलोगों के लिये प्रवृत्त होने पर भी किसी विषय में बाध होता है ?—यह शङ्का कर कहते हैं—

यदि आप विशिष्टविषयक होने से बाध को सम्यक् मानते हैं तो सामान्य रूप से विहित विधि में अपवाद के द्वारा बाध करना चाहिये ॥ -२३०-२३१- ॥

यदि आप बाध के आवृत्त को अच्छी तरह जानते हैं तो किसी भी चोदना के सत्त्व की हानि नहीं है । वह इस प्रकार—निरवकाश होने के कारण विशेष अपवाद विधि सर्वत्र अवसर को प्राप्त करने वाली सामान्यात्मक उत्सर्गविधि का बाध करती है ऐसा वाक्यवेत्ता (= मीमांसक) कहते हैं । समस्त विषय को अधिकृत करने के कारण प्रतिष्ठा को प्राप्त भी उत्सर्ग विधि अपवाद विधि के विशिष्ट विषय को

निर्वाधमभिनिविष्टो भवेत् । यदाह चूर्णिकाकारः—

'प्रकल्प्यापवादविषयं तत उत्सर्गोऽभिनिविशते ।' इति ।

अत एवास्य क्वचिद्बाध्यत्वेऽपि अप्रामाण्यं नाशङ्कनीयं विषयान्तरे प्रमाणरूपत्वेन प्रतिष्ठानात् । स च द्विधा बाधः समानकार्यकारित्वाद्विरोधाद्वा तत्र।

'चमसेनापः प्रणयेत् ।'

इति चमसेनापां प्रणयनं सामान्येन विहितम् ।

'गोदोहनेन पशुकामस्य प्रणयेत् ।'

इति पशुकामात्मविशिष्टविषयत्वेन अपवादात्मा गोदोहनविधिः अप्प्रणयन-लक्षणसमानकार्यकारित्वाद्बाधते ।

'अष्टाश्रिर्यूपो भवति।'

इति सामान्येन सर्वक्रतुकविषयतया विहितोऽपि अष्टाश्रिर्यूपः

'वाजपेयस्य चतुरश्रः ।'

इत्यनेन अपवादविधिना विरोधाद्बाध्यते ॥ २३० ॥

---

छोड़कर विषयान्तर में निर्बाध अभिनिविष्ट होती है । जैसा कि चूर्णिकाकार कहते हैं—

'अपवाद विषय को छोड़कर उत्सर्ग कार्यान्वित होता है ।'

इसलिये कहीं इसके बाध्य होने पर भी (इसके) अप्रामाण्य की शङ्का नहीं करनी चाहिये । क्योंकि विषयान्तर में (इसकी) प्रमाण रूप से प्रतिष्ठा है । यह बाध दो प्रकार का होता है—समान कार्यकारी होने से अथवा विरोध से । उनमें—

'चमस से जल को ले जाना चाहिये ।'

इस वाक्य से चमस के द्वारा जल का ले जाना सामान्य रूप से विहित है ।

'पशु की इच्छा वाला गोदोहन पात्र से ले जाय ।'

इस वाक्य से पशुकामरूप विशिष्ट विषय होने से अपवादरूप गोदोहन विधि, जलनयनलक्षण वाला समान कार्यकारी होने से बाध करती है ।

यूप आठ अश्रि (पहल, कोण) वाला होना चाहिये ।'

इस प्रकार सामान्य रूप से सब याग के विषय के रूप में विहित भी अष्टाश्रि यूप

'वाजपेय याग का चतुरश्र होना चाहिये ।'

इस अपवाद विधि के द्वारा विरोध के कारण बाधित होता है ॥ २३० ॥

ननु एवमपि प्रकृते किम् ?—इत्याशङ्क्याह—

**शुद्ध्यशुद्धी च सामान्यविहिते तत्त्वबोधिनि ॥ २३१ ॥**
**पुंसि ते बाधिते एव तथा चात्रेति वर्णितम् ।**

वैदिक्या चोदनया सामान्येन सर्वपुरुषविषयतया विहिते अपि ते शुद्ध्यशुद्धी तत्त्वज्ञविषये अर्थाद्विरोधेन बाधिते एव, न न बाधिते भवत इत्यर्थः । अत्र हेतुः 'तथा चात्रेति वर्णितम्' इति,

'नात्र शुद्धिर्न चाशुद्धिः.............. ।'

इत्यपवादात्म तत्त्वज्ञविषयं विधिवाक्यमुक्तमित्यर्थः ॥ २३१ ॥

ननु नात्र विधिवाक्यत्वं वक्तुं युक्तं निर्बाधस्य शुद्ध्यशुद्धिविभागस्य लोक दर्शनात्, प्रत्यक्षादिप्रमाणान्तरविरुद्धत्वात्, तेनावश्यमनेन अर्थवादेन भाव्यं, तद्धि भूम्ना विध्येकवाक्यतयोच्यते; अतश्च तदर्थेनैव अस्यार्थवत्त्वं न स्वतः; अत एवास्य स्वरूपपरत्वाभावान्न प्रमाणान्तरविरोधः । अर्थवादवाक्याद्धि विधौ श्रद्धातिशयो जायते, येन तत्र सादरं प्रवर्तते लोकः । यदाहुः—

'विधिशक्तिरवसीदति तां प्राशस्त्यज्ञानं समुत्तभ्नाति ।' इति ।

---

प्रश्न—इससे भी प्रस्तुत में क्या हुआ ? यह शङ्का कर कहते हैं—

**शुद्धि और अशुद्धि का विधान सामान्य जनों के लिये है । तत्त्ववेत्ता पुरुष के विषय में वे बाधित हैं यह तथ्य, 'तथा चात्र' (श्लो० २१३) में वर्णित है ॥ -२३१-२३२- ॥**

वैदिकी चोदना के द्वारा सामान्यतया सब पुरुषों के लिये विहित भी वे शुद्धि और अशुद्धि तत्त्वज्ञानी के विषय में अर्थात् विरोध के कारण बाधित ही हैं, नहीं बाधित हैं ऐसा नहीं है । इसमें कारण—'तथा चात्रेति वर्णितम्' यह है ।

'यहाँ न शुद्धि न अशुद्धि ...'

यह अपवादरूप तत्त्वज्ञविषयक विधिवाक्य कहा गया ॥ २३१ ॥

प्रश्न—इसे विधिवाक्य कहना ठीक नहीं क्योंकि लोक में निर्बाध शुद्ध्यशुद्धि विभाग देखा जाता है, और (वह) प्रत्यक्ष आदि दूसरे प्रमाणों से विरुद्ध है । इसलिये अवश्य यह अर्थवाद है । वह अत्यधिक, विधि के साथ एक वाक्य रूप में कहा जाता है । इसलिये उसके ही अर्थ से इसकी अर्थवत्ता है स्वतः नहीं । इसीलिये स्वरूपपरक न होने से इसका प्रमाणान्तर से विरोध नहीं है । अर्थवादवाक्य के कारण विधि के विषय में अत्यन्त श्रद्धा उत्पन्न होती है जिससे लोग उसमें आदर के साथ प्रवृत्त होते हैं । जैसा कि कहते हैं—

'विधि शक्ति रुकती है उसको प्राशस्त्य ज्ञान उत्प्रेरित करता है ।'

तेन

'मृच्छैलधातुरत्नादिभवं लिङ्गं न पूजयेत् ।
यजेदाध्यात्मिकं लिङ्गं यत्र लीनं चराचरम् ॥'

इत्यादेः श्रूयमाणस्य सर्वनिर्विकल्पेन योगिना भाव्यम्,—इत्यादेः परिकल्प्यमानस्य वा विधेः प्ररोचनाकारितया शेषभूतोऽयमर्थवाद एव ?—इत्याशङ्क्याह—

**नार्थवादादिशङ्का च वाक्ये माहेश्वरे भवेत् ॥ २३२ ॥**

यदुक्तम्—

'विधिवाक्यमिदं तन्त्रं नार्थवादः कदाचन ।
झटिति प्रत्यवायेषु सत्क्रियाणां फलेष्वपि ॥' इति ।

तथा

'......................नार्थवादः शिवागमः ।' इति ।

माहेश्वर इति विशेषणद्वारेण महेश्वरप्रणीतत्वं हेतुरुक्तः; यन्नाम हि बुद्धिमान् प्रयुङ्क्ते तत्र कदाचिद्व्यर्थं भवेदिति भावः ॥ २३२ ॥

यत् पुनर्बद्धिमता न प्रयुक्तं तत्रैवं संभावना भवेत्,—इत्याह—

---

उससे—

'मिट्टी, पत्थर, धातु, रत्न आदि से निर्मित लिङ्ग की पूजा नहीं करनी चाहिए। बल्कि आध्यात्मिक लिङ्ग का यजन करना चाहिये जिसमें चर अचर लीन है ।'

इत्यादि श्रूयमाण के (आधार पर) योगी को सर्वनिर्विकल्पक होना चाहिये । अथवा—इत्यादि परिकल्प्यमान विधि का, प्ररोचनाकारी होने के कारण शेषभूत यह अर्थवाद है ? यह शङ्का कर कहते हैं—

महेश्वरोक्त वाक्य में अर्थवाद आदि की भी शङ्का नहीं है ॥ -२३२ ॥

जैसा कि कहते हैं—

झट से (उत्पन्न) प्रत्यवाय या सत्क्रियाओं के फलों के विषय में यह तन्त्र विधिवाक्य है कभी भी अर्थवाद नहीं है । तथा

'................शिवागम अर्थवाद नहीं है ।'

'माहेश्वर' इस विशेषण के द्वारा महेश्वर से रचित होना कारण कहा गया । बुद्धिमान् जिसका प्रयोग करता है वह कभी भी व्यर्थ नहीं होता ॥ २३२ ॥

जो (वाक्य) बुद्धिमान् के द्वारा प्रयुक्त नहीं हैं वहीं ऐसी सम्भावना होती है—यह कहते हैं—

**अबुद्धिपूर्वं हि तथा संस्थिते सततं भवेत् ।**
**व्योमादिरूपे निगमे शङ्का मिथ्यार्थतां प्रति ॥ २३३ ॥**

इह खलु निगमे वेदशास्त्रे, सततं विधिवाक्यानामर्थवादवाक्यानां वा श्रुतिकाले, मिथ्यार्थतां प्रति असदर्थत्वविषये प्रेक्षापूर्वकारिणां शङ्का भवति—इति संभाव्यं; यतः स परमते घनगर्जितवदबुद्धिपूर्वम् अबुद्धिमत्कर्तृकत्वेन तथा विध्यर्थवादरूपतया संस्थितः; अत एवानर्थक्येन शून्यप्रायत्वात् 'व्योमादिरूपे' इत्युक्तम् । यदभिप्रायेणैव—

'आप्तं तमेव भगवन्तमनादिमी-
शमाश्रित्य विश्वसिति वेदवचस्तु लोकः ।
तेषामकर्तृकतया तु न कश्चिदेव
विस्रम्भमेति मतिमानिति वर्णितं प्राक् ॥'

इत्याद्यन्यत्रोक्तम् ॥ २३३ ॥

यत्र पुनरवच्छिन्नविज्ञानात्मा परमेश्वर एव शास्त्ररूपेणावस्थितः, तत्र का नाम मिथ्यार्थत्वं प्रति शङ्का भवेत् ?—इत्याह—

**अनवच्छिन्नविज्ञानवैश्वरूप्यसुनिर्भरः ।**

---

उस प्रकार (= विधि अर्थवाद आदि रूप में) स्थित, आकाश के समान निगम के विषय में (उनकी) मिथ्यार्थता के प्रति शङ्का अज्ञानपूर्वक होती है ॥ २३३ ॥

निगम = वेदशास्त्र के विषय में निरन्तर विधिवाक्यों अथवा अर्थवादवाक्यों के श्रवणकाल में, मिथ्यार्थता के प्रति = असदर्थता के विषय में, विचारकों को शङ्का होती है—ऐसा समझना चाहिये । क्योंकि वह परमत में घनगर्जन के समान अबुद्धिपूर्वक = अर्बुद्धिमत्कर्त्तृक के रूप में, उस प्रकार = विधि अर्थवाद आदि के रूप में, स्थित है । इसलिये अनर्थक होने से शून्यप्राय होने के कारण 'व्योमादिरूप में' ऐसा कहा गया । जिस अभिप्राय से ही—

'उस आप्त अनादि भगवान् ईश्वर के आधार पर पर लोक अर्थात् सांसारिक जन वेद की वाणी में विश्वास करता है । यदि वे (वेदवाक्य) कर्त्तृशून्य हो तो कोई भी बुद्धिमान् उसमें विश्वास नहीं करेगा—यह पहले कहा गया ।'

इत्यादि अन्यत्र कहा गया ॥ २३३ ॥

जहाँ अनवच्छिन्न विज्ञानस्वरूप परमेश्वर ही शास्त्ररूप में स्थित है वहाँ मिथ्यार्थता के प्रति क्या शङ्का हो सकती है—यह कहते हैं—

किन्तु असीम अखण्ड विज्ञान की विश्वरूपता से परिपूर्ण देव

**शास्त्रात्मना स्थितो देवो मिथ्यात्वं क्वापि नार्हति॥ २३४ ॥**

'मिथ्यात्वं क्वापि नार्हति' इत्यत्र पूवार्धं हेतुः ॥ २३४ ॥

नन्वीश्वरः सर्वशास्त्राणां प्रणेता—इत्यधिगतमस्माभिः, न तु स एव तदात्मनावस्थितः,—इत्यपूर्वमिदं किमुच्यते ?—इत्याशङ्क्याह—

**इच्छावान्भावरूपेण यथा तिष्ठासुरीश्वरः ।**
**तत्स्वरूपाभिधानेन तिष्ठासुः स तथा स्थितः॥ २३५ ॥**

यथा खलु परमेश्वरः स्वेच्छामाहात्म्याद्वाच्यात्मप्रमातृप्रमेयादिभावरूपेण स्थातुमिच्छुः सन्, तथा वाच्यात्मविश्वरूपतया स्थितः; तथाशब्दस्यावृत्त्या तथा तद्वदेव तस्य प्रमातृप्रमेयात्मनो वाच्यस्य विश्वस्य यत् स्वम् अन्यापोढं रूपं तस्याभिधानेन वाचकतया स्थातुमिच्छुः सन् तथा वाचकात्मशास्त्ररूपतया स्थितः इत्यर्थः ॥ २३५ ॥

एवमपि यद्यस्य क्वचिन्मिथ्यार्थत्वं स्यात् तदापि न कश्चिद्दोषः, इत्याह—

**अर्थवादोऽपि यत्रान्यविध्यादिमुखमीक्षते ।**

---

तन्त्रशास्त्र के रूप में स्थित है । इसलिये वहाँ कहीं भी मिथ्यात्व नहीं है ॥ २३४ ॥

मिथ्यात्व कहीं नहीं हो सकता इसमें पूर्वार्द्ध कारण है ॥ २३४ ॥

प्रश्न—ईश्वर सब शास्त्रों का प्रणेता है—यह हमने जान लिया । किन्तु वह उस रूप में स्थित नहीं है । फिर यह अपूर्व क्यों कहते हैं ? यह शङ्का कर कहते हैं—

जिस प्रकार परमेश्वर इच्छावान् होने पर भावरूप में स्थित होना चाहता है उसी प्रकार (उस भाव के) स्वरूप के वाचक के रूप में स्थित होने की इच्छा वाला वह उस प्रकार स्थित है ॥ २३५ ॥

जिस प्रकार परमेश्वर अपनी इच्छा की महिमा से वाच्यरूप प्रमातृप्रमेय आदि पदार्थों के रूप में स्थित होने का इच्छुक होता हुआ उस प्रकार वाच्यात्मक विश्वरूप में स्थित है तथा शब्द की आवृत्ति से, तथा = उसी प्रकार, उस प्रमातृप्रमेयात्मक वाच्य विश्व का जो स्व = अपना = अन्यापोढरूप है उसके कथन से = वाचक के रूप में स्थित होने का इच्छुक (वह) उस प्रकार = वाचक शास्त्र के रूप में, स्थित है ॥ २३५ ॥

ऐसा होने पर भी यदि कहीं मिथ्या हो तो भी कोई दोष नहीं है—यह कहते हैं—

**तत्रास्त्वसत्यः स्वातन्त्र्ये स एव तु विधायकः ॥ २३६ ॥**

यत्र खलु स्तुतिनिन्दादिरूपोऽर्थवादोऽन्यस्य विधिनिषेधात्मनो विधिवाक्यस्याङ्गभावमियात् तत्र स्वरूपपरत्वाभावादसावसत्योऽस्तु न कश्चिद्दोषः; नहि अस्य यथाश्रुतोऽर्थः प्रतिपाद्यः, किंतु विधेयो निषेध्यो वा, यदस्याङ्गभावेन प्रतिष्ठानम्; अत एव विधिवाक्यैकवाक्यतयैव अस्य प्रामाण्यम्—इति वाक्यविदः । यदाहुः—

'इत्यर्थवादा विधिनैकवाक्यभावात्प्रमाणत्वममी भजन्ते॥' इति ।

तथाहि—

'बर्हिषि रजतं न देयम् ।'

इत्यस्य विधेः शेषभूतस्य

'सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वम्,

इत्यादेरर्थवादस्य न रुद्ररोदनादि प्रतिपाद्यं, किन्तु

'बर्हिषि यो रजतं ददाति पुरास्य संवत्सराद् गृहे रोदनं भवति।'

इति 'बर्हिषि रजतं न देयम्' इति । स एव पुनरर्थवादो यद्यन्याङ्गभावं

---

**अर्थवाद भी जहाँ अन्य विधि आदि की अपेक्षा रखता है वहाँ भले ही असत्य हो जाय किन्तु स्वतन्त्र रूप से तो वह विधायक ही है ॥ २३६ ॥**

स्तुतिनिन्दारूप अर्थवाद जहाँ किसी दूसरे विधिनिषेधात्मक विधिवाक्य का अङ्ग होता है वहाँ स्वरूपपरक न होने से यह (= अर्थवाद वाक्य) असत्य हो जाय कोई दोष नहीं है । क्योंकि इसका यथाश्रुत अर्थ प्रतिपाद्य या निषेध्य नहीं है किन्तु विधेय अथवा निषेध्य अर्थ प्रतिपाद्य है । वही इसकी अङ्गरूप से प्रतिष्ठा है । इसलिये विधिवाक्य के साथ एकवाक्यता होने से ही इसकी प्रामाणिकता है—ऐसा वाक्यवेत्ता (= मीमांसक) कहते हैं । जैसा कि कहते हैं—'इसलिये ये अर्थवाद विधिवाक्य के साथ एकवाक्यता के कारण प्रामाणिक होते हैं ।'

वह इस प्रकार—

'यज्ञ में चाँदी दान नहीं करना चाहिये ।'

इस विधि के अङ्गभूत—

'वह अग्नि रोया; जो रोया वही रुद्र का रुद्रत्व है ।'

इत्यादि अर्थवाद का रुद्र रोदन आदि प्रतिपाद्य नहीं है किन्तु

'जो यज्ञ में रजत का दान करता है एक वर्ष के भीतर उसके घर में रोदन होता है ।'

यह है । इसलिये 'यज्ञ में रजतदान नहीं करना चाहिये ।' वही अर्थवाद यदि

यायात् तदा विधायको यथाश्रुतार्थप्रतिपादको भवेदित्यर्थः ।

'सोऽरोदीत्' इत्यादावर्थवादवाक्ये हि
'रुद्रो रुरोद तस्य यदश्रु अशीर्यत तद्रजतमभवत् ।'

इति-वृत्तप्रतिपादनं सत्यार्थमेवेदम्, एवं प्रायाणां बहूनामितिवृत्तानां सत्यत्वेनेष्टेः । तदुक्तम्—

'यद्वा स्वरूपपरतामपि संस्पृशन्तः
प्रमाण्यवर्त्मन इमे न परिच्यवन्ते ।
नैयायिका हि पुरुषातिशयं वदन्तो
वृत्तान्तवर्णनमपीह यथार्थमाहुः ॥' इति ॥ २३६ ॥

न केवलमस्य स्वातन्त्र्य एव सत्यार्थत्वं यावत्पारतन्त्र्येऽपि—इत्याह—

**विधिवाक्यान्तरे गच्छन्नङ्गभावमथापि वा ।**
**न निरर्थक एवायं संनिधेर्गजडादिवत् ॥ २३७ ॥**

यद्वा विधिनिषेधात्मनो विधिवाक्यस्याङ्गभावं गच्छन्नपि अयमर्थवादः संनिहितत्वान्ननिर्थक एव भवेत् अत्र दृष्टान्तः 'गजडादिवत्' इति । यथाहि पदाद्यङ्गत्वेन संनिहिता वर्णा न निरर्थकाः तथायमपीति वर्णानामानर्थक्ये हि वर्णव्यत्यये-

---

अङ्ग न बनता तो विधायक (होकर) यथाश्रुत अर्थ का प्रतिपादक होता ।

'वह रोया' इत्यादि अर्थवादवाक्य में 'रुद्र रोया उसके जो आँसू (भूमि पर) गिरे वे रजत हो गये ।'

इस इतिहास के प्रतिपादन की सत्यता के लिये ही यह (कहा गया) । क्योंकि इस प्रकार के बहुत से इतिवृत्त सत्य माने जाते हैं । वही कहा गया है—

'अथवा स्वरूपरता का स्पर्श करने वाले भी ये (अर्थवाद) प्रामाण्य के रास्ते से च्युत नहीं होते । नैयायिक लोग पुरुष के आतिशय को कहते हुए वृतान्तवर्णन को यथार्थ मानते है ॥ २३६ ॥'

केवल स्वातन्त्र्य में ही इसकी सत्यार्थता नहीं है बल्कि पारतन्त्र्य में भी है—यह कहते हैं—

यह (= अर्थवाद) विधिवाक्य के अन्दर अङ्गभाव को प्राप्त होता हुआ भी सन्निधि के कारण निरर्थक नहीं है जैसे कि 'गजड' आदि शब्द ॥ २३७ ॥

**अथवा विधिनिषेधात्मक विधिवाक्य का अङ्ग होते हुए भी यह अर्थवाद सन्निहित होने के कारण निरर्थक नहीं हैं । इसमें दृष्टान्त है—गजडादिवत् । जैसे पद आदि के अङ्ग के रूप में सन्निहित वर्ण निरर्थक नहीं होते उसी प्रकार यह भी है । वर्णों**

ऽर्थान्तरगमनं न स्यात्, यथा गजः जडः षोडः (?) इति । सङ्घातस्यापि अर्थवत्त्वं न स्यात्—अवयवानामानर्थक्ये हि समुदायोऽप्यनर्थक एव भवेत्, यथा एकस्या अपि सिकतायास्तैलदानासामर्थ्ये तत्समुदायो राशिरप्यसमर्थः—इति । एवमर्थवादस्यापि आनर्थक्ये तत्संनिधानेन विधीयमाने निषिध्यमाने वार्थे सादरं प्रवृत्तिर्निवृत्तिर्वा न स्यात् । 'सोऽरोदीत्' इत्यादौ हि रोदनप्रभवं रजतं निन्दितुमेवमुक्तं येन बर्हिषि तद्दानात् सादरं निवृत्तिर्भवेत् । लोकेऽपि खलु 'इयं गौः क्रेतव्या' इत्यतो न तथा क्रेतारः प्रवर्तन्ते, यथा 'एषा बहुस्निग्धक्षीरा सुशीला स्त्र्यपत्यानघप्रजा च' इत्येवमादिभ्यः स्तुतिपदेभ्यः,—इति स्वानुभवसाक्षिकोऽयमर्थः ॥ २३७ ॥

अत आह—

**स्वार्थप्रत्यायनं चास्य स्वसंवित्त्यैव भासते ।**
**तदपह्नवनं कर्तुं शक्यं विधिनिषेधयोः ॥ २३८ ॥**

अथ यद्येतत् बलात्कारेणापह्नूयते तत् विधिनिषेधात्मनो विधिवाक्यस्यापि अर्थापह्नवः कर्तुं शक्यः,—इत्याह 'तदपह्नवनम्' इत्यादि ॥ २३८ ॥

---

के निरर्थक होने पर वर्ण के उलटफेर होने पर अर्थान्तर का ज्ञान नहीं होगा जैसे—गज, जड, षोड (श) । समूह की भी अर्थवत्ता नहीं होगी क्योंकि अवयवों के निरर्थक होने पर समुदाय भी निरर्थक हो जाता है । जैसे एक बालू के कण के तेलदान में असमर्थ होने पर उसका समुदाय अर्थात् राशि भी असमर्थ होता है । इस प्रकार अर्थवाद के भी अनर्थक होने पर उसके सन्निधान से विधीयमान या निषेध्यमान अर्थ में सादर प्रवृत्ति या निवृत्ति नहीं होगी । 'वह रोया' इत्यादि में रोदन से उत्पन्न रजत की निन्दा करने के लिये ऐसा कहा गया जिससे यज्ञ में उसके दान से (लोगों की) सादर निवृत्ति हो । लोक में भी 'यह गाय क्रेतव्य है' ऐसा कहने ये खरीददार उस तरह प्रवृत्त नहीं होते जिस तरह कि 'यह बहुत अच्छा दूध देती है' सीधी सादी है, नीचे बछिया है और इसकी सन्तान में कोई दोष नहीं है, इत्यादि प्रशंसावाक्यों से—यह तथ्य अपने अनुभव का है ॥ २३७ ॥

इसलिये कहते हैं—

**इसका (= विधिवाक्य का) स्वार्थबोधन भी अपनी संवित्ति के द्वारा ही होता है । 'ऐसा न होने पर' विधि और निषेध का भी अपह्नव किया जा सकता है ॥ २३८ ॥**

**यदि इसे जबर्दस्ती छिपाते हैं तो विधिनिषेध में से विधिवाक्य के भी अर्थ का** अपह्नव किया जा सकता है—यह कहते हैं—'उसका अपह्नवन' इत्यादि ॥ २३८ ॥

न केवलमत्र स्वसंवित्तिरेव साधकं प्रमाणमस्ति, यावद्युक्तिरपि—इत्याह—

**युक्तश्चात्रास्ति वाक्येषु स्वसंविच्चाप्यबाधिता।**
**या समग्रार्थमाणिक्यतत्त्वनिश्चयकारिणी ॥ २३९ ॥**

युक्तिरिति समनन्तरोक्ता ॥ २३९ ॥

ननु भवतु नामेदमर्थवादवाक्यं विधिवाक्यं वा किमनया नश्चिन्तया, तत्रापि वेदशास्त्रोक्तः शुद्ध्यादिविभागस्तावत् यथोक्तयुक्त्या बाधितः, अनेन च न किञ्चिच्छुद्धं विहितं नाप्यशुद्धं तृतीयश्च राशिर्नास्ति,—इति शुद्ध्यशुद्धिविधानमेव न सिद्ध्येत् ?—इत्याशङ्क्याह—

**मृतदेहेऽथ देहोत्थे या चाशुद्धिः प्रकीर्तिता।**
**अन्यत्र नेति बुद्ध्यन्तामशुद्धं संविदश्च्युतम् ॥ २४० ॥**
**संवित्तदात्म्यमापन्नं सर्वं शुद्धमतः स्थितम् ।**

वेदशास्त्रे हि मृतदेहे देहाच्च्युते मलादौ च यदशुद्धिरुक्ता अन्यत्र जीवद्देहे देहस्थ एव मलादौ च न,—इत्यतः संवित्सहभावासहभावनिबन्धनाद्धेतोः संविदः

---

इस विषय में केवल अपना अनुभव ही साधक प्रमाण नहीं है वरन् युक्ति भी है—ऐसा कहते हैं—

वाक्यों के विषय में युक्ति भी है और अपनी अबाधित संवित् भी । जो (= संवित्) समग्र अर्थरूपी माणिक्य के तत्त्व (= यथार्थता) का निश्चय कराती है ॥ २३९ ॥

'युक्ति' समनन्तरोक्त है ॥ २३९ ॥

प्रश्न—यह विधिवाक्य हो या अर्थवाद वाक्य, हम इसकी चिन्ता क्यों करें । वहाँ भी वेद शास्त्र में कहा गया शुद्धि आदि का विभाग उक्त युक्ति से बाधित हैं । इसने न तो किसी को शुद्ध बनाया न अशुद्ध । और तीसरा पक्ष है ही नहीं । इस प्रकार शुद्धि और अशुद्धि का विधान ही सिद्ध नहीं होगा—यह शङ्का कर कहते हैं—

मृत शरीर अथवा देह से निकले मल आदि के विषय में जो अशुद्धि (शास्त्रों में) कही गयी वह अन्यत्र (= जीवित शरीर आदि) में नहीं है । इसलिये जो संविद् से च्युत है उसे अशुद्ध समझना चाहिये । इस प्रकार यह निश्चित हो गया कि जो संवित् से तादात्म्य को प्राप्त है वह सब शुद्ध है ॥ २४०-२४१- ॥

वेदशास्त्र में मृतशरीर और शरीर से निकले मल आदि के विषय में जो अशुद्धि कही गयी है, और दूसरी ओर जीवित शरीर और शरीररस्थ मल आदि के

सकाशात् यत् च्युतं भिन्नं तदाशुद्धं बुद्ध्यन्तां विशेषानुपादानात् सर्व एवावगच्छन्त्वित्यर्थः । अत एव च यत्किंचित् संविदैक्यमापन्नं तत् सर्वं शुद्धमिति; तेन संविदैकात्म्यानैकात्म्याभ्यां सर्वत्र शुद्ध्यशुद्धिविभागः,—इति स्थितं सिद्धम् ॥ २४० ॥

न च एतद्युक्तिमात्रेणैव सिद्धं यावदागमेनापि,—इत्याह—

**श्रीमद्वीरावलौ चोक्तं शुद्ध्यशुद्धिनिरूपणे ॥ २४१ ॥**

तदेव शब्दद्वारेण पठति—

**सर्वेषां वाहको जीवो नास्ति किञ्चिदजीवकम् ।**
**यत्किंचिज्जीवरहितमशुद्धं तद्विजानत ॥ २४२ ॥**

जीवयति निखिलमिदं भूतजातं ज्ञानक्रियोत्तेजनेन प्राणयति—इति जीवः परप्रकाशः, स सर्वेषां प्रमातृप्रमेयात्मनो विश्वस्य वाहयति संधारयति—इति वाहकः स्वात्मसंलग्नतयावभासक इत्यर्थः । अत्र हेतुः 'नास्ति किञ्चिदजीवकम्' इति, नहि प्रकाशातिरिक्तं किञ्चिदपि भायादिति भावः । यत् पुनः किञ्चिज्जीव-रहितं तदैकात्म्येनासंवेद्यमानं, तदशुद्धं विजानत अनुपपत्त्यवस्करदूषितत्त्वात्

---

विषय में नहीं—अतः संवित् के सहभाव और असहभावरूपी कारण से जो संविद् से गिरा हुआ = भिन्न है, उसे अशुद्ध समझा जाय = विशेष का ग्रहण न होने से सभी लोग समझें यह अर्थ है । इसलिये जो कुछ संविद् के साथ एकता को प्राप्त है वह सब शुद्ध है । इससे संविद् के ऐकात्म्य और अनैकात्म्य से सर्वत्र शुद्धि और अशुद्धि का विभाग है—यह स्थित = सिद्ध है ॥ २४०-२४१॥

यह बात केवल युक्ति से ही नही बल्कि आगम से भी सिद्ध है—यह कहते हैं—

श्रीमद्वीरावलि में भी शुद्धि अशुद्धि के निरूपण में वह कहा गया है ॥ -२४१ ॥

उसी को शब्द के द्वारा कहते हैं—

जीव ही सबका धारक है । जीव के विना कुछ नहीं है । और जो कुछ जीवरहित है उसे अशुद्ध जानो ॥ २४२ ॥

जो जीवित करता है = इस समस्त भूतसमूह को ज्ञान और क्रिया की उत्तेजना से प्राणित करता है वह जीव = पर प्रकाश है । वह सबका प्रमातृ प्रमेयात्मक विश्व का, जो वाहन करता है = धारण करता है वह वाहक = स्वात्मसंलग्न के रूप में अवभासक है । इसमें कारण है—'कुछ भी विना जीव के नही है ।' प्रकाश के अतिरिक्त कुछ भी आभासित नहीं होता । और जो कुछ जीवरहित = उससे अभिन्न

परिहरणीयतयावगच्छतेत्यर्थः । एवं संविदतिरिक्तस्याशुद्धत्वेनाभिधानात् इतरत् पुनः शुद्धमेव—इत्यर्थसिद्धम् ॥ २४२ ॥

तदाह—

**तस्माद्यत्संविदो नातिदूरे तच्छुद्धिमावहेत् ।**

तदुक्तं तत्रैव—

'अशुद्धं नास्ति तत्किञ्चित्सर्वं तत्र व्यवस्थितम् ।
यत्तेन रहितं किञ्चिदशुद्धं तेन जायते ॥' इति ॥

नन्वेवं शुद्ध्यशुद्धिविभागो न कैश्चिन्महात्मभिः परिगृहीतः—इति कथमत्र सतां समाश्वासः स्यात् ?—इत्याशङ्क्याह—

**अविकल्पेन भावेन मुनयोऽपि तथाभवन् ॥ २४३ ॥**

तथेति संविदैकात्म्यानैकात्म्याभ्यां शुद्ध्यशुद्धिविभागभाज इत्यर्थः । तदुक्तं तत्र

'ऋषिभिर्भक्षितं पूर्वं गोमांसं च नरोद्भवम् ।' इति ।

---

रूप में असंवेद्यमान है । उसे अशुद्ध समझो = अनुपपत्ति रूपी गन्दगी (= विष्ठा) से दूषित होने के कारण परिहरणीय समझो । इस प्रकार संविद् से अतिरिक्त को अशुद्ध कह देने से दूसरा शुद्ध ही है = यह अर्थात् सिद्ध है ॥ २४२ ॥

वह कहते हैं—

इस कारण जो संविद् से दूर नहीं है वह शुद्ध है ॥ २४३- ॥

वही वहाँ कहा गया—

'सब कुछ उसमें स्थित है इसलिये कुछ अशुद्ध नहीं है जो कुछ उससे रहित है इसलिये अशुद्ध हो जाता है ॥ २४३ ॥

प्रश्न—इस प्रकार का शुद्धि अशुद्धि का विभाग किन्हीं महात्माओं नें नहीं माना है—फिर इस विषय में सज्जनों का विश्वास कैसे हो ?—यह शङ्का कर कहते हैं—

मुनि लोग भी निर्विकल्पक भाव के कारण उसी प्रकार के हो गये ॥ -२४३ ॥

तथा = संविद् की एकात्मता और अनेकात्मता के द्वारा शुद्धि अशुद्धि विभागवाले । वही वहाँ कहा गया'—

'प्राचीन काल में मनुष्य के द्वार लाये गये गोमांस और नरमांस को ऋषियों ने खाया ।'

यदि नाम हि ते—द्रव्याणां संविदैकात्म्यमेव शुद्धिः—इति न जानीयुः, तत् कथं शास्त्रबहिष्कृतं लोकविरुद्धं गोमांसादि भक्षयेयुः; अत एव हि बाह्यचर्यायाम्

'यद्द्रव्यं लोकविद्विष्टं यच्च शास्त्रबहिष्कृतम्।
यज्जुगुप्स्यं च निन्द्यं च वीरैराहार्यमेव तत् ॥'

इत्याद्युक्त्या विकल्पप्रहाणाय लोकशास्त्रविरुद्धं द्रव्यजातमभिहितम् । यन्नाम सर्वद्रव्याणां लोकविरुद्धत्वादि न वास्तवं रूपं, किंतु परा संविदेव,—इति किं नाम जुगुप्स्यं निन्द्यं वा, सर्वत्रैव संविद्रूपत्वाविशेषात्; अत एव तत्र चित्त-प्रत्यवेक्षामात्रमेव प्रयोजनं—किं संविदेकाग्रीभूतं चित्तं न वा—इति । यदुक्तम्—

'न चर्या भोगतः प्रोक्ता या ख्याता भीमरूपिणी ।
स्वचित्तप्रत्यवेक्षातः स्थिरं किं वा चलं मनः ॥' इति ॥ २४३ ॥

ननु यद्येवं तन्मुनिभिर्गोमांसादि कथमभक्ष्यतयोपदिष्टम् ?—इत्याशङ्क्याह—

**लोकसंरक्षणार्थं तु तत्तत्त्वं तैः प्रगोपितम् ।**

एवमुपदिष्टे हि अलब्धसंविदैकात्म्योऽपि लोको लोभलौल्याभ्यां यत्तत् कुर्वाणो

---

यदि वे ऋषिगण—द्रव्यों की संविद् के साथ एकात्मता ही शुद्धि है—यह नहीं जानते तो शास्त्रबहिष्कृत लोकविरुद्ध गोमांस आदि का भक्षण कैसे करते । इसलिये बाह्यचर्या में—

'जो द्रव्य लोक में घृणित है ओर जो शास्त्र में बहिष्कृत है, जो जुगुप्स्य और निन्द्य है वीर साधकों को उसी का आहार करना चाहिये ।'

इत्यादि उक्ति के अनुसार विकल्प के त्याग के लिये लोक एवं शास्त्र से विरुद्ध द्रव्यसमूह कहा गया है । जो सब द्रव्यों का, लोकविरुद्धत्व आदि वास्तविक रूप नहीं है किन्तु पर संविद् ही है—फिर उस स्थिति में क्या जुगुप्स्य अथवा निन्द्य होगा क्योंकि सर्वत्र ही संविद्रूपता समान ही है । इसलिये वहाँ केवल चित्त की प्रत्यवेक्षा ही प्रयोजन है—क्या चित्त संविद् के साथ एकाग्र हुआ है अथवा नहीं । जैसा कि कहा गया—

'जो चर्या भीमरूपिणी (= कठिन) कही गई है वह भोग से (सिद्ध होने वाली) नहीं कही गई है । (प्रत्युत) अपने चित्त की प्रत्यवेक्षा से होती है । मन स्थिर है या चञ्चल' (ऐसी अविक्षा करनी चाहिए) ॥ २४३ ॥

प्रश्न—यदि ऐसा है तो मुनियों ने गोमांस आदि को अभक्ष्य क्यों कहा ?—यह शङ्का कर कहते हैं—

**लोक की रक्षा के लिये उन लोगों ने उस तत्त्व को छिपा दिया ॥ २४४- ॥**

इत्यादयः सहस्रशो व्यपदेशाः । यदुक्तम्—

> 'तस्य देवातिदेवस्य परबोधस्वरूपिणः ।
> विमर्शः परमा शक्तिः सर्वज्ञा ज्ञानशालिनी ॥' इति ॥ ७७ ॥

अतश्च मुख्यया वृत्त्या तत्रैव विश्रमणीयं येन साक्षात् परतत्त्वान्तरनु[illegible]ः सिद्ध्येत् ?—इत्याह—

**तत्र संवेदनोदारबिन्दुसत्तासुनिर्वृतः ।**
**संहारबीजविश्रान्तो योगी परमयो भवेत् ॥ ७८ ॥**

तत्रैवं स्थिते सति परप्रमात्रात्मनः 'संवेदनस्य' संवेदकत्वाधानात् 'उदारा' महती येयं 'बिन्दुसत्ता' विदिक्रियाकर्तृत्वात्मिका परा परामर्शदशा, तया सुष्ठु नैराकाङ्क्ष्येण 'निर्वृतः' स्वात्मचमत्कारातिशयशाली, अत एव 'संहारबीजे' परप्रमात्रात्मनि बिन्दोरपि उदयात् श्रीपिण्डनाथे च 'विश्रान्तः' तदैकात्म्यमापन्नोऽत एव 'परमयो योगी भवेत्' परतत्त्वैक्यभाक् भवतीत्यर्थः ॥ ७८ ॥

ननु संविदपेक्षयापि विमर्शस्यैव विश्रान्तिस्थानत्वं प्राधान्येन कस्मादुक्तम् ? इत्याशङ्क्याह—

**अन्तर्बाह्ये द्वये वापि सामान्येतरसुन्दरः ।**
**संवित्स्पन्दस्त्रिशक्त्यात्मा सङ्कोचप्रविकासवान् ॥ ७९ ॥**

---

दिया गया । संविद् का संवित्त्व यही है कि परामर्शक होना जिसका कि विमर्श, स्पन्द, हृदय,विसर्ग इत्यादि हजारों नाम है । जैसा कि कहा गया है—

उस परबोध रूपी देवों के भी देवता का विमर्श ही परमा शक्ति है जो कि सर्वज्ञा और ज्ञानवती है ॥ ७७ ॥

इसलिए मुख्य वृत्ति के द्वारा उसी में विश्राम करना चाहिए जिससे साक्षात् परतत्त्व के भीतर प्रवेश हो जाय । वही कहते हैं—

ऐसा होने पर संविद् की उदार बिन्दुसत्ता के द्वारा निर्वृत होता हुआ संहार बीज में विश्रामलाभ करने वाला योगी परमय हो जाता है ॥ ७८ ॥

तत्र = ऐसा होने पर, प्रमाता रूप संवेदन के संवेदकत्व का आधान होने के कारण उदारा = महती, जो यह बिन्दुसत्ता = ज्ञान क्रिया करने वाली परा परामर्श-दशा, उसके द्वारा भली भाँति निराकाङ्क्ष होकर निर्वृत = स्वात्मचमत्कारातिशय वाला, इसीलिए संहार बीज = पर प्रमाता रूप में, बिन्दु का भी उदय होने से श्री पिण्डनाथ में विश्रान्त = उसके साथ एकात्मता को प्राप्त, इसलिए योगी परमय हो जाता है = परतत्त्व के साथ एकता वाला हो जाता है ॥ ७८ ॥

प्रश्न—संविद् की अपेक्षा विमर्श को ही प्रधानतया विश्रान्तिधाम क्यों कहा गया ?—यह शङ्का कर कहते हैं—

स एव हि संवित्स्पन्दो 'अन्तः' परप्रमात्रात्मनि शिवतत्त्वे सर्वविशेषस्वीकारात् सामान्यात्मा, अत एव प्रविकासवान् अहमिति, 'बाह्ये' मायातः क्षित्यन्तं भेदोल्लासाद्विशेषात्मा, अत एवान्योन्यव्यावृत्त्या सङ्कोचवान् इदमिति; 'द्वये' अन्तर्बहीरूपे विद्यापदे समधृततुलापुटन्यायेन 'अहमिदम्' इति सामान्यविशेषात्मा, अत एव सङ्कोचप्रविकासवान्, अत एवाशेषविश्वोल्लासकारित्वात् इच्छादिशक्तित्रयात्मा—इति स एव परं विश्रान्तिस्थानम्—इति तत्रैवावधेयम् ॥ ७९ ॥

ननु यद्येवं तर्ह्यस्य सङ्कोचविकासवत्त्वेन नानात्वात् जाड्यमापतेत्—इति समाप्तं विश्रान्तिस्थानत्वम् ?—इत्याशङ्क्याह—

**असङ्कोचविकासोऽपि तदाभासनतस्तथा ।**

वस्तुतः संविदेकस्वभावत्वात् असङ्कोचविकासोऽपि असौ संवित्सपन्दः स्वस्वातन्त्र्येण तथा सङ्कोचादिरूपतया अवभासते, इति तथा 'सङ्कोचविकासवान्' इत्युच्यते न तु वस्तुतस्तथा समस्तीति भावः ॥

ननु यदि नाम सङ्कोचविकासाद्यस्य वस्तुतो नास्ति, तत् तदवभासने किं

---

संवित्स्पन्द जो कि अन्तरीण एवं बाहरी दोनो में सामान्य एवं विशेष रूप होने के कारण सुन्दर है, सङ्कोच एवं विकास वाला तथा तीन शक्तियों वाला वह (अन्तिम विश्रान्तिस्थल है) ॥ ७९ ॥

वही संवित्स्पन्द अन्तः = पर प्रमाता रूप शिवतत्त्व में समस्त विशेषो का स्वीकार करने के कारण सामान्य रूप, इसलिए विकासवान् 'अहम्' है । बाहरी = माया से लेकर पृथ्वी पर्यन्त भेद का उल्लास होने से विशेष रूप, इसलिए एक के द्वारा दूसरे की व्यावृति होने के कारण सङ्कोचवान् 'इदम्' है । दोनो में = अन्तरीण एवं बाह्य रूप विद्याभूमि में, समधृततुलापुटन्याय के द्वारा 'अहम् इदम्' ऐसा सामान्य विशेष रूप, इसलिए सम्पूर्ण विश्व का उल्लासक होने के कारण इच्छा आदि तीन शक्तियों वाला—इस प्रकार वही विश्रान्ति का स्थान है—ऐसा वहीं से समझ लेना चाहिए ॥ ७९ ॥

प्रश्न—यदि ऐसा है तो सङ्कोच विकास वाला होने के कारण अनेक होने से वह जड़ हो जायगा फलतः उसकी विश्रान्तिस्थानता नहीं रहेगी ?—ऐसी शङ्का कर कहते हैं—

सङ्कोचविकासरहित होने पर भी (वह) वैसा आभासित होने के कारण वैसा (समझा जाता है) ॥ ८०- ॥

वस्तुतः केवलज्ञानस्वभाव होने के कारण सङ्कोचविकासहीन भी वह संविद्स्पन्द अपने स्वातन्त्र्य के कारण उस प्रकार = सङ्कोचविकासवान् कहलाता है न कि वस्तुतः वैसा है ।

निमित्तम् ?—इत्याशङ्क्याह—

**अन्तर्लक्ष्यो बहिर्दृष्टिः परमं पदमश्नुते ॥ ८० ॥**

इह हि 'बहिः' इदन्तापरामृश्ये देहघटादौ

'तत्तद्रूपतया ज्ञानं बहिरन्तः प्रकाशते ।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत् ॥
नहि ज्ञानादृते भावाः केनचिद्विषयीकृताः ।
ज्ञानं तदात्मतां यातमेतस्मादवसीयते ॥'

इत्यादिश्रीकालिकाक्रमोक्त्या संवित्स्फारसारा एवैते, इत्येवमात्मदृष्टिः अत एव 'अन्तः' अहंपरामर्शात्मनि संवित्तत्त्वे सावधानो बाह्यविषयासङ्गेऽपि स्वरूपपरामर्शपरत्वात् भैरवमुद्रानुप्रविष्टो योगी 'परमं पदमश्नुते' विमर्शदशामधिशेते इत्यर्थः । तेन 'अविद्यैव विद्योपायः' इत्यादिन्यायेन सङ्कुचितमपि बाह्यं रूपं विकस्वरस्वरूपापत्तौ निमित्ततां यायात्—इत्युक्तं स्यात् । तत्र चोचितेन विमर्शेन भाव्यम्—इति विशेषात्मन इदमिति परामर्शस्यापि उल्लासः—इति युक्तमुक्तं 'तथाभासनतस्तथा' इति ॥ ८० ॥

---

प्रश्न—यह इसका सङ्कोच विकास वस्तुतः नहीं है तो उस प्रकार के आभासन में क्या कारण है ?—यह शङ्का कर कहते हैं—

जिसका लक्ष्य अन्दर हो और दृष्टि बाहर हो (अर्थात् शाम्भवीमुद्रा वाला योगी हो वह) परम पद का अनुभव करता है ॥ -८० ॥

यहाँ बाहर = इदं के रूप में परामर्श के योग्य देह घट आदि के विषय में ।

"ज्ञान उन-उन रूपों मे बाहर और भीतर प्रकाशित होता है । ज्ञान के बिना अर्थ की सत्ता नहीं है । इस कारण यह जगत् ज्ञानरूप हैं ।

ज्ञान के बिना किसी ने भी पदार्थों को विषय नहीं बनाया । इससे यह निश्चित होता है कि ज्ञान ही तदात्मता (= भावरूपता) को प्राप्त हुआ ।"

इत्यादि श्री कालिकाक्रम की उक्ति के अनुसार ये (= पदार्थ) संविद् के उल्लासमात्र हैं—यही आत्मदृष्टि है । इसीलिए अन्तः = अहंपरामर्शरूप संवित् तत्त्व मे ध्यान करने वाला योगी बाह्य विषयों के साथ आसक्त होने पर भी स्वरूप के परामर्श में तल्लीन रहने के कारण भैरवमुद्रा में अनुप्रविष्ट हुआ, परम पद का अनुभव करता है = विमर्शदशा में विश्राम करता है । इसलिए 'अविद्या ही विद्या का उपाय है' इत्यादि सिद्धान्त के अनुसार संकुचित भी बाह्य रूप विकस्वर स्वरूप के लाभ का कारण बनता है—ऐसा कहा गया है । ऐसी स्थिति में विमर्श को समीचीन होना चाहिए—इस कारण विशेष रूप 'इदम्' परामर्श का भी उल्लास होता है । इसलिए ठीक ही कहा है—रूप में आभासित होने के कारण उस प्रकार का है ॥ ८० ॥

अत आह—

**ततः स्वातन्त्र्यनिर्मेये विचित्रार्थक्रियाकृति ।**
**विमर्शनं विशेषाख्यः स्पन्द औन्मुख्यसंज्ञितः ॥ ८१ ॥**

'ततः' समनन्तरोक्ताद्धेतोः स्वस्वातन्त्र्योत्थापिते तत्तदर्थक्रियाकारिणि भावजाते यदिदमिति विमर्शनं स विशेषाख्यः स्पन्दस्तत्तदर्थक्रियार्थितातारतम्येन प्रवृत्तेः 'औन्मुख्यसंज्ञितः' औन्मुख्यशब्दव्यपदेश्यः स्यादित्यर्थः ॥ ८१ ॥

न च अत्रैव विश्रमणीयम्—इत्याह—

**तत्र विश्रान्तिमागच्छेद्यद्वीर्यं मन्त्रमण्डले ।**
**शान्त्यादिसिद्धयस्तत्तद्रूपतादात्म्यतो यतः ॥ ८२ ॥**

तत्र—

'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता ।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम् ॥'
(अ०प्र०सि० १५ श्लोक)

इत्याद्युक्त्या इदंविमर्शविश्रान्तिधामनि अहंपरामर्शे विश्रान्तिं कुर्यात्, यत् न केवलमत्र यावन्मन्त्रमण्डलेऽपि वीर्यं, यतोऽहंपरामर्शानुविद्धमन्त्रमण्डलैकात्म्यादेव

---

इसलिए कहा—

इस कारण स्वातन्त्र्य के द्वारा निर्मेय एवं विचित्र अर्थक्रिया करने वाले (पदार्थों) के विषय मे (जो) विमर्श होता है (वह) विशेष नाम वाला स्पन्द है और उसकी औन्मुख्य संज्ञा (भी) है ॥ ८१ ॥

ततः = अव्यवहित पूर्व कहे गए कारण से अपने स्वातन्त्र्य के द्वारा उपस्थापित भिन्न-भिन्न अर्थक्रिया करने वाले पदार्थसमूह के विषय मे जो 'इदम्' विमर्श है वह विशेष नामवाला स्पन्द है । (और वही) भिन्न-भिन्न अर्थक्रिया वाले अर्थों के क्रम से प्रवृत्त होने के कारण 'औन्मुख्य संज्ञा वाला है = औन्मुख्य शब्द से व्यवहृत होता है ॥ ८१ ॥

यही पर विश्राम नहीं करना चाहिए—यह कहते हैं—

जो मन्त्र मण्डल में वीर्य है उसी में विश्रान्ति करनी चाहिए । क्योंकि उन-उन रूपों के तादात्म्य से शान्ति आदि सिद्धियाँ प्राप्त होती हैं ॥८२॥

वहाँ—

जो अपने स्वरूप में विश्रान्त हैं यही 'सोऽहम्' विमर्श हैं । यही 'इदम्' इस विच्छिन्न विमर्श की कृतार्थता है । (अज. प्र. सि. १५)

इत्यादि उक्ति के द्वारा इदं विमर्श की विश्रान्ति वाले धाम अहं परामर्श में

तत्फलभूता विचित्रेतिकर्तव्यताकाः शान्त्यादिसिद्धयो भवेयुरित्यर्थः । संविद्विश्रान्तिमन्तरेण हि न किञ्चिदेव भवेदिति भावः । यद्वक्ष्यति—

'यत्तत्र नहि विश्रान्त तन्नभःकुसुमायते ।' (तं० ८।३)

इति ॥ ८२ ॥

न केवलमेतदेवं यावदिन्द्रियाण्यपि—इत्याह—

**दिव्यो यश्चाक्षसङ्घोऽयं बोधस्वातन्त्र्यसंज्ञकः ।**
**सोऽनिमीलित एवैतत् कुर्यात्स्वात्ममयं जगत् ॥ ८३ ॥**

इह खलु बाह्यर्थौन्मुख्येऽपि अन्तर्लक्ष्यत्वाद्दिव्योऽत एव शुद्धबोधैकरूपत्वात् बोधस्वातन्त्र्यशब्दाभ्यां न तु बुद्धीन्द्रियकर्मेन्द्रियशब्दाभ्यां व्यपदेश्यो योऽयमिन्द्रियसमूहः स बहिः 'अनिमीलितो' व्यापृत एव सन् भैरवमुद्रानुप्रवेशक्रमेण एतज्जगत् 'स्वात्ममयं कुर्यात्' संविन्मात्रसारतया परामृशेदित्यर्थः ॥ ८३ ॥

ननु कथमेवं भवेत् ?—इत्याशङ्क्याह—

**महासाहससंयोगविलीनाखिलवृत्तिकः ।**
**पुञ्जीभूते स्वरश्म्योघे निर्भरीभूय तिष्ठति ॥ ८४ ॥**

---

विश्राम करना चाहिये । जो कि न केवल यहीं अपितु मन्त्रमण्डल में भी वीर्य हैं । जिससे = अहंपरामर्शानुविद्ध मन्त्रमण्डल के साथ तादात्म्य होने से ही उसकी फलस्वरूप विचित्र इतिकर्तव्यता वाली शान्ति आदि सिद्धियाँ होती है । संविद्विश्रान्ति के बिना कुछ भी नहीं होता यह तात्पर्य है । जैसा कि कहेंगे—

"जिसने वहाँ विश्राम नहीं किया वह आकाशकुसुम की भाँति हैं ॥ (त. आ. ८।३) ॥ ८२ ॥

केवल यही ऐसा नहीं है किन्तु इन्द्रियाँ भी वैसी हैं—वही कहते हैं—

जो दिव्य इन्द्रियसमूह हैं, जिसका नाम बोध अथवा स्वातन्त्र्य है । वह बिना बन्द हुए ही इस जगत् को आत्ममय कर लेता है ॥ ८३ ॥

बाह्य पदार्थों की ओर उन्मुखता होने पर भी लक्ष्य भीतर की ओर होने के कारण दिव्य अत एव शुद्धबोध मात्र होने के कारण बोध एवं स्वातन्त्र्य शब्दों के द्वारा, न कि बुद्धीन्द्रिय एवं कर्मेन्द्रिय शब्दों के द्वारा, व्यवहार किए जाने योग्य जो यह इन्द्रियसमूह, वह बाहर, अनिमीलित अर्थात् लगे हुए भी भैरवमुद्रा में अनुप्रवेश क्रम से इस जगत् को स्वात्ममय कर लेता है = संवित् मात्र तत्त्व के रूप में परामर्श करता है ॥ ८३ ॥

प्रश्न—ऐसा कैसे होता है ?—यह शङ्का कर कहते हैं—

महा साहस के संयोग से जिसकी सभी वृतियाँ विलीन हो चुकी हैं

**अकिंचिच्चिन्तकस्तत्र स्पष्टदृग्याति संविदम् ।**
**यद्विस्फुलिङ्गाः संसारभस्मदाहैकहेतवः ॥ ८५ ॥**

महासाहसशब्दाभिधेयचकितमुद्रानुप्रवेशेन 'विलीना' बाह्याद्विगलिताः प्रत्यावृत्ता निखिला इन्द्रियवृत्तयो यस्य स तथा, अत एव 'अकिञ्चिच्चिन्तको' बहिरौन्मुख्याभावात् निरवधानोऽत एव 'स्वरश्म्योघे' तत्तदिन्द्रियमरीचिचक्रे 'पुञ्जीभूते' भेदविगलनात् स्वात्मन्येव सङ्कुटितेऽत एव 'निर्भरीभूय' पूर्णतामासाद्य तिष्ठति सति, तत्र अन्तरहंपरामर्शात्मनि प्रमातृतत्त्वे 'स्पष्टदृक्' प्रस्फुटावबोधः 'संविदं याति' परतत्त्वान्तरनुप्रविशेत् यत्स्फारमात्रादयत्नत एव संसारापकृतिः सिद्ध्येत् ॥ ८४-८५ ॥

न चैवमस्माभिः स्वोत्प्रेक्षितमेवोक्तमित्याह—

**तदुक्तं परमेशेन त्रिशिरोभैरवागमे ।**

तदेव पठति—

**शृणु देवि प्रवक्ष्यामि मन्त्रभूम्यां प्रवेशनम् ॥ ८६ ॥**

---

(वह साधक) पुञ्जीभूत अपनी रश्मियों के समूह के होने पर पूर्णता को प्राप्त करके स्थित रहता है । कुछ न सोचने वाला तथा स्पष्ट दृष्टि वाला (वह, उस) संविद् को प्राप्त होता है जिसका विस्फुलिङ्ग संसार को भस्म करने वाली अग्नि का एक मात्र हेतु है ॥ ८४-८५ ॥

महा साहस शब्द के द्वारा कही जाने वाली चकित मुद्रा मे प्रवेश के द्वारा, विलीन = बाहर से विगलित अर्थात् लौट चुकी है समस्त इन्द्रियवृत्तियाँ जिसकी वह उस प्रकार का, इसीलिए अकिञ्चित्चिन्तक = बाह्य औन्मुख्य के अभाव के कारण अवधानरहित इसलिए, अपनी रश्मियों के समूह के = उन-उन इन्द्रिय किरणों के समूह के, पुञ्जीभूत होने पर = भेद नष्ट हो जाने के कारण आत्मा मे ही सङ्कुटित होने पर, इस कारण, निर्भर होकर = पूर्णता को प्राप्त होकर स्थित होने पर, उस (भूमिका) में अन्दर-अन्दर अहंपरामर्श रूप प्रमातृ तत्त्व के विषय में, स्पष्टदृक् = स्फुट अवबोध वाला (योगी) संविद् को प्राप्त होता है = पर तत्त्व के अन्दर प्रविष्ट हो जाता है जिसके स्फार मात्र से बिना प्रयास के संसार का नाश सिद्ध हो जाता है ॥ ८४-८५ ॥

ऐसा हमने अपनी बुद्धि से नहीं कहा है—वही कहते हैं—

यही (बात) परमेश्वर ने त्रिशिरोभैरव (नामक) आगम में कही हैं ।

वही पढ़ रहे हैं—

हे देवि सुनो । (मैं) मन्त्र भूमि में प्रवेश का वर्णन करूँगा ॥ ८६ ॥

'मन्त्रभूम्याम्' इति परतत्त्वान्तः ॥ ८६ ॥

किं तत् ?—इत्याशङ्क्याह—

**मध्यनाड्योर्ध्वगमनं तद्धर्मप्राप्तिलक्षणम् ।**
**विसर्गान्तपदातीतं प्रान्तकोटिनिरूपितम् ॥ ८७ ॥**

यन्नाम 'विसर्गान्तपदं' द्वादशान्तपदमतिशयेन इतं प्राप्तं तदवधिकं 'मध्यनाड्या' उदानवाहक्रमेण 'ऊर्ध्वगमनं' तन्मन्त्रभूम्यां प्रवेशनमुच्यते—इत्यर्थाक्षिप्तम् । यतस्तस्याः संवित्तत्त्वात्मिकाया मन्त्रभूमेर्ये निरावरणत्व-निर्विकल्पत्वादयो 'धर्माः' तेषां 'प्राप्तिः' तदैकात्म्येन स्फुरत्ता तद्रूपम्, अत एव प्रान्तकोटित्वेन निरूपितं सर्वत्रैव परा काष्ठा—इत्युद्घोष्यते इत्यर्थः । यदुक्तम्—

'यन्निरावरणं संवित्सतत्त्वं कल्पनोज्झितम् ।
तत् परं पुत्रि कथितं सा काष्ठा सा परा गतिः ॥'

इति ॥ ८७ ॥

तच्च कथं स्यात् ?—इत्याशङ्क्याह—

**अधःप्रवाहसंरोधादूर्ध्वक्षेपविवर्जनात् ।**
**महाप्रकाशमुदयज्ञानव्यक्तिप्रदायकम् ॥ ८८ ॥**

---

मन्त्रभूमि में = पर तत्त्व के भीतर ॥ ८६ ॥

वह क्या है ?—यह शङ्का कर कहते हैं—जो द्वादशान्त पद के द्वारा अतिशय को प्राप्त है वहाँ तक सुषुम्ना के द्वारा ऊपर की ओर जाना उस (मन्त्र भूमि) मे प्रवेश (कहा जाता है क्योंकि) उसके धर्मों की प्राप्ति लक्षण वाली वह प्रान्तकोटि कही गयी है ॥ ८७ ॥

जो विसर्गान्तपद = द्वादशान्तपद, को अत्यधिक रूप में प्राप्त है उस सीमा तक, मध्यनाडी के द्वारा = उदानवाह क्रम से, ऊर्ध्व गमन है वह मन्त्रभूमि में प्रवेश कहा जाता है—इतना अर्थात् आक्षिप्त है । क्योंकि उस संवित् तात्मत्मक मन्त्रभूमि के जो निराकरण निर्विकल्पत्व आदि धर्म हैं उनकी, प्राप्ति = उनके साथ एकात्मक होकर स्फुरित होना, तत्त्वरूप, इसलिए प्रान्त कोटि के रूप में निरूपित हैं अर्थात् सर्वत्र पराकाष्ठा कही जाती है । जैसा कि कहा है—"हे पुत्रि ! जो आवरणहीन और कल्पना से रहित संवित् तत्त्व है वह पर कहा गया है, वह काष्ठा है; वह परा गति है" ॥ ८७ ॥

वह कैसे होगा ?—यह शङ्का कर कहते हैं—

अधःप्रवाह को रोकने तथा ऊर्ध्व क्षेप का तिरस्कार करने से सुषुम्णा मे मात्रा की आवृत्ति के द्वारा, नित्योदित (आत्म) ज्ञान की

**अनुभूय परे धाम्नि मात्रावृत्त्या पुरं विशेत् ।**

'अधःप्रवाहस्य' अपानस्य 'ऊर्ध्वक्षेपस्य' प्राणस्य चापहस्तनात् तदुभयघट्टनेन परे मध्यमे धाम्नि—

'पीत्वाकुलामृतं दिव्यं पुनरेव विशेत् कुले ।
पुनरेवाकुलं गच्छेन्मात्रायोगेन पार्वति ॥
सा च प्राणवहा ख्याता तन्त्रेऽस्मिन् पारमेश्वरे ।'

इत्यादिना निरूपितस्वरूपा या मात्रा तस्या 'आवृत्त्या' आवर्तनेन पुनःपुनर्गणनया

'उद्गच्छन्तीं तडिद्रूपां प्रतिचक्रं क्रमात्क्रमम् ।
ऊर्ध्वं मुष्टित्रयं यावत्तावदन्ते महोदयः ॥'

(वि०भै० २९ श्लो०)

इत्याद्युक्तयुक्त्या तत्तच्चक्रोल्लङ्घनक्रमेण द्वादशान्तभुवि 'सकृद्विभातोऽयमात्मा' इति न्यायेन अवभासनक्रियाविच्छेदाभावात् उदयप्रधानं नित्योदितं यदात्मज्ञानं तस्य 'व्यक्तिप्रदायकं' तद्रूपतयावभासमानं परप्रमातृरूपं 'महाप्रकाशमनुभूय पुरं विशेत्' मन्त्रभूमिरूपां पूर्णां स्वात्मवृत्तिमासादयेदित्यर्थः ॥ ८८ ॥

---

अभिव्यक्ति को देने वाले प्रकाश का यहाँ अनुभव कर (योगी) पुर में प्रवेश करता है ॥ ८८-८९- ॥

अधःप्रवाह = अपान, और ऊर्ध्वक्षेप = प्राण, के अपहस्तन से = उन दोनो के सङ्घट्टन से, पर = मध्यम धाम में

"हे पार्वति ! दिव्य कुलामृत का पान कर पुनः कुल में प्रवेश करना चाहिए । फिर मात्रायोग के द्वारा अकुल में प्रवेश करना चाहिए । इस पारमेश्वर तन्त्र में वह (= मध्यनाडी) प्राणवहा कही गई है ॥"

इत्यादि के द्वारा जिसका स्वरूप बतलाया गया है (ऐसी) जो मात्रा उसकी आवृति = आवर्तन के द्वारा, पुनः पुनः = गणना के द्वारा,

"विद्युत् के रूप वाली (वह) क्रमशः एक-एक चक्र को ऊपर-ऊपर करती हुई तीन मुट्ठी तक पहुँचती है उसके बाद अन्त में महान् उदय होता है ॥" (वि.भै. २९)

इत्यादि उक्त युक्ति के द्वारा उन-उन चक्रों को क्रमशः लाँघते हुए द्वादशान्त भूमिका में 'यह आत्मा एक बार आभासित होती है' इस न्याय से अवभासन क्रिया का विच्छेद न होने से उदय ही जहाँ प्रधान है ऐसा नित्य उदित जो आत्मज्ञान, उसकी 'अभिव्यक्ति को देने वाला' उस रूप में अवभासमान परप्रमाता रूप महाप्रकाश का अनुभव कर पुर में प्रवेश करता है अर्थात् मन्त्रभूमिरूप पूर्ण आत्म

सा च किंविधा ?—इत्याशङ्क्याह—

**निस्तरङ्गावतीर्णा सा वृत्तिरेका शिवात्मिका ॥ ८९ ॥**
**चतुष्षड्द्विर्द्विगुणितचक्रषट्कसमुज्ज्वला ।**
**तत्स्थं(त्स्थो) विचारयेत् खं खं खस्थं खस्थेन संविशेत् ॥९० ॥**
**खं खं त्यक्त्वा खमारुह्य खस्थं खं चोच्चरेदिति ।**
**खमध्यास्याधिकारेण पदस्थाश्चिन्मरीचयः ॥ ९१ ॥**

सा च स्वात्मरूपा वृत्तिर्निःशेषविश्वोपशमात् 'निस्तरङ्गा' स्वात्ममात्रविश्रान्त्या शान्तरूपेत्यर्थः । अत एवैकेत्युक्तम् । न चैवमस्या विश्वोत्तीर्णमेव रूपं संभवति, अपितु तथात्वेऽपि विश्वमयीत्याह—'अवतीर्णा' इति, तत्तद्रूपतया बहिरुल्लसितेत्यर्थः । अत एव तत्रत्यबहुग्रन्थार्थगर्भीकारेणाह—'चतुष्षड्द्विर्द्विगुणितचक्रषट्कसमुज्ज्वला' इति । यदुक्तं प्राक्—

'चतुष्षड्द्विर्द्विगणनायोगात् त्रैशिरसे मते ।
षट्चक्रेश्वरता नाथस्योक्ता चित्रनिजाकृतेः ॥' (१।११४) इति ।

---

वृत्ति को प्राप्त करता है ॥ ८८ ॥

वह (= मन्त्र भूमि) कैसी है ?—यह शङ्का कर कहते हैं—

वह वृत्ति तरङ्गरहित एक अवतीर्ण (तथा) चार और छः को दो गुना और फिर उनका दो गुना और फिर उनका दो गुना (= चार, आठ और सोलह तथा छ; बारह और चौबीस) इस प्रकार छः चक्रों से दीप्यमान ख शिवात्मिका है । उन (चक्रों) में रह कर (योगी) ख का विचार करे । पुनः ख में वर्तमान के द्वारा ख में वर्तमान ख में प्रवेश करे । पुनः दोनो ख को छोड़कर ख में आरूढ़ होकर ख में स्थित ख का उच्चार करे । पुनः अधिकार के साथ ख को आक्रान्त कर ख में प्रवेश करे । इस प्रकार चित् की मरीचियाँ पद में स्थित हो जाती हैं ॥ -८९-९१ ॥

वह स्वात्मरूपा वृत्ति समस्त विश्व का विगलन हो जाने से निस्तरङ्ग = अपने में ही विश्रान्ति के कारण शान्त रूप, है । इसलिए 'एक' ऐसा कहा गया है । इस प्रकार इसका विश्वोतीर्ण ही रूप संभव है ऐसी बात नहीं है बल्कि वैसा (= विश्वोतीर्ण) होने पर भी (वह) विश्वमयी है—यही कहते हैं—अवतीर्णा, अर्थात् भिन्न-भिन्न रूपों में बाहर उल्लसित । इसलिए वहाँ के बहुत ग्रन्थों के अर्थ को गर्भ में रखकर कहते हैं—चार और छः के दो गुने का दो गुना वाले छ चक्रों से समुज्ज्वल है । जैसा कि पहले कहा गया है—

त्रिशिरोभैरव के मत में चित्र विचित्र अपनी आकृति वाले स्वामी की, चार और छः के दोगुने के दोगुना की गणना के योग से छ चक्रों का स्वामित्व कहा गया है ।''(त. आ. १।११४)

एवमपि नास्याः स्वस्वरूपात् प्रच्यावः—इत्युक्तं 'शिवात्मिका' इति । तेनास्या बहीरूपतया स्फुरत्तायामपि परप्रमात्रात्मनि स्वस्वरूपे एव विश्रान्तिः—इत्युक्तं स्यात्, यदभिप्रायेणैव भैरवमुद्राया अभिधानम् । एतच्च अतिरहस्यत्वात् गोपनीयम्—इत्याशयेन भगवान्निगूढार्थतयाभिधत्ते—'खस्थम्' इत्यादिना ।

इह खलु योगी भूतिशब्दवाच्यमैश्वर्यात्मस्वातन्त्र्यलक्षणं 'खमारुह्य' अवलम्ब्य स्वस्वरूपं गोपयित्वा दिक्कालादिना सङ्कुचत्तामवभास्य अणुशब्दव्यपदेश्ये खे स्थितं सङ्कुचिततात्मतया स्फुरितं 'खम्'—

'परमात्मस्वरूपं तु सर्वोपाधिविवर्जितम् ।
चैतन्यमात्मनो रूपं सर्वशास्त्रेषु पठ्यते ॥' (ने०तं० ८।१८)

इत्याद्युक्त्या पूर्णप्रथात्मकमवश्यज्ञेयमात्मानं 'विचारयेत्' किमस्य सङ्कुचितमेव तात्त्विकं रूपं न वेति विमर्शपदवीं नयेदित्यर्थः । एवं हि पारमार्थिकस्य रूपस्य लाभो भवेदिति भावः । तदुक्तं तत्रैव—

'खं हि यद्भैरवं ज्ञेयं सर्वमार्गान्तमन्तगम् ।
विचारयेत्तु यो धीमान् करणव्याप्तिमध्यगः ॥
भूमिकास्थो हि चक्रस्थो विन्दते परमार्थतः ।' इति ।

---

इतना होने पर भी इसका अपने स्वरूप से पतन (= राहित्य) नहीं है, इसलिए कहा गया—शिवात्मिका, इससे यह कहा गया कि इस (= स्वात्मरूपा वृत्ति) की बाह्य रूप में स्फुरत्ता होने पर भी परप्रमातृरूप अपने स्वरूप में ही विश्रान्ति है जिस अभिप्राय से ही भैरवमुद्रा का कथन किया गया है । यह अतिरहस्य होने के कारण गोपनीय है इस आशय से भगवान् इस गूढ़ अर्थ को 'खस्थम्'—इत्यादि के द्वारा कहते हैं । भूति शब्द के वाच्य ऐश्वर्य रूप अपने स्वातन्त्र्य स्वरूप 'ख' पर आरूढ़ होकर = उसके सहारें, अपने स्वरूप का गोपन कर दिक् काल आदि के रूप में सङ्कोच का अवसान कर अणु शब्द से व्यवहृत होने योग्य 'ख' में स्थित = संकुचित रूप में स्फुरित 'ख' को

"समस्त उपाधियों से रहित परमात्मरूप चैतन्य ही समस्त शास्त्रों में आत्मा का रूप कहा जाता है" (ने. तं. च २०) ॥

इत्यादि उक्ति के द्वारा पूर्ण विस्तार वाले अवश्य जानने योग्य आत्मा का योगी को विचार करना चाहिए अर्थात् क्या इसका संकुचित रूप ही वास्तविक है अथवा नहीं? इस प्रकार का विमर्श करना चाहिए । ऐसा करने पर पारमार्थिक रूप का लाभ होता है—यह भाव है । वही पर कहा गया है—

'ख' जो कि भैरव है (उसे) सभी मार्गों का अन्त और अन्तिम तक जाने वाला समझना चाहिए । जो बुद्धिमान् ऐसा विचार करता है वह करणव्याप्ति के मध्य में पहुँचा हुआ तथा भूमिका और चक्र में स्थित (= चिन्तन करने वाला

तच्च कथम् ?—इत्याशङ्क्योक्तं—'खस्थेन खस्थं खं चोच्चरेदिति' । च शब्दो हेतौ । 'खे' रतावविष्ठमानेन तदासक्तेन सावधानेन चेतसा 'खे' कुलमूले शक्त्युत्पत्त्यात्मनि जन्माधारे स्थितं 'खं' प्राणरूपां शक्तिमुच्चरेत्—

'आमूलात् किरणाभासां सूक्ष्मसूक्ष्मपरात्मिकाम् ।
चिन्तयेत्तां द्विषट्कान्ते शाम्यन्तीं भैरवोदयः ॥'

(वि०भै० २८ श्लो०)

इत्याद्युक्त्या मध्यधामप्रवेशक्रमेण ऊर्ध्वं द्वादशान्तं नयेत् येन क्रियाशक्त्यात्मनि 'खे' गतं दृश्यं तदुपरक्तां क्रियाशक्तिं प्रमेयभुवं तथा 'खे' ज्ञानशक्तावविस्थितं द्रष्टारं तदुपरक्तां ज्ञानशक्तिं प्रमाणभुवं त्वक्त्वा प्रमाणप्रमेयात्म-व्यवहारपरत्वेऽपि तदासङ्गमपहायेत्यर्थः । यद्यपि अत्रोभयत्रापि द्रष्टृदृश्योपरागः संभवति तथापि प्राधान्यादेवमुक्तम् । तथा 'खं' द्रष्टृदृश्याद्युपाधिवर्जितां स्वविमर्श-मात्ररूपामिच्छाशक्तिम्, 'अधिकारेण अध्यास्य स्वावष्टम्भबलेनाक्रम्य चितिशब्दाभि-धेयं 'खं'—

'विमर्शधाम तुर्यं च व्यापकं चोर्ध्वमध्यमः।

---

साधक) परमार्थ को प्राप्त करता है ।'

यह कैसे होगा?—यह शङ्का कर कहते हैं—'ख मे स्थित के द्वारा ख् में स्थित होकर और ख का उच्चार करना चाहिए । यहाँ 'च' शब्द हेतु अर्थ में (प्रयुक्त है) । चूँकि ख = रति में स्थित उसमें आसक्त (और) सावधान चित्त के द्वारा, ख में = कुल मूल में = शक्ति की उत्पत्ति वाले जन्माधार में स्थित, ख = प्राणरूपिणी शक्ति का उच्चार करना चाहिये ।

'भैरव अवस्था के उदय वाला (साधक) किरण के समान प्रकाश वाली, सूक्ष्म-सूक्ष्म परा स्वरूप शान्त होती हुई उस (= मायावृत्ति) का मूलाधार से लेकर द्वादशान्त तक चिन्तन करे ।'

इत्यादि उक्ति के द्वारा मध्यधाम में प्रवेश के क्रम से ऊपर द्वादशान्त तक (प्राण शक्ति को) ले जाय जिससे क्रियाशक्ति रूप 'ख' में वर्तमान दृश्य और उससे उपरक्त क्रियाशक्ति, जो कि प्रमेय भूमि है, को, तथा 'ख' में = ज्ञानशक्ति में, स्थित द्रष्टा और उससे उपरक्त ज्ञानशक्ति, जो कि प्रमाण भूमि हैं, को, छोड़कर अर्थात् प्रमाणप्रमेयव्यवहारपरक होने पर भी उसकी आसक्ति को छोड़कर । यद्यपि यहाँ दोनो जगह द्रष्टा और दृश्य का उपराग सम्भव हैं, तो भी प्रधानता के कारण ऐसा कहा गया है । तथा ख को = द्रष्टृ एवं दृश्य की उपाधि से रहित केवल आत्म विमर्श रूप इच्छा शक्ति को, अधिकार के द्वारा अध्यासित कर = अपने अवष्टम्भ के बल से आक्रान्त कर, चितिशब्द के द्वारा कहे जाने वाले 'ख' को

'जो विमर्श का स्थान, चतुर्थ, व्यापक, ऊर्ध्व तथा मध्य में सुन्दर छिद्र वाला

सुशिरं तत्त्वराजानं पराकाशं प्रकीर्तितम् ॥'

इत्यादिनीत्या श्रीत्रिशिरोभैरवोक्त्या निरूपितस्वरूपं परतत्त्वलक्षणं तुर्यातीतपदं सम्यग्भैरवमुद्रानुप्रवेशक्रमेण 'विशेत् समावेशभाक् भवेदित्यर्थः । एवं च 'चिन्मरीचयः' तत्तदिन्द्रियवृत्तयो बहिरौन्मुख्याभावात्' 'पदस्थाः' तुर्यातीतदशामधिशयाना एव भवन्तीत्यर्थः ॥ ९१ ॥

एवमप्यत्राप्रमत्तेन भाव्यम्—इत्याह—

**भावयेद्भावमन्तःस्थं भावस्थो भावनिःस्पृहः ।**
**भावाभावगती रुद्ध्वा भावाभावावरोधदृक् ॥ ९२ ॥**

एवमपि 'भावाभावगतीरुद्ध्वा' प्राणापानक्षोभमपहाय 'अन्तःस्थं भावम्' = आन्तरीं सत्तां, योगी 'भावयेत्' मध्यधामानुप्रवेशक्रमेण पौनःपुन्येन तत्रैव आसक्तिं कुर्यात् येन व्युत्थानेऽपि अतः प्रच्यावो न स्यात्, अत एव स 'भावस्थो' ग्राह्यग्राहकसंक्षोभेऽपि बाह्यान्तःकरणवर्गेणालुप्तसंवित्तिः स्वात्ममात्रपरिनिष्ठित एवेत्यर्थः । यदुक्तं तत्रैव

'ऊर्ध्वाधोगमविक्षेपरहितः करणेच्छया ।

---

तथा तत्त्वों का राजा है, उसे पराकाश कहा गया है ।'

इत्यादि त्रिशिरोभैरव मे कही गई नीति के द्वारा जिसका स्वरूप निरूपित है, ऐसे परतत्त्व लक्षण वाले तुर्यातीत पद में, सम्यक् भैरवमुद्रा के अनुप्रवेश के क्रम से, प्रवेश करना चाहिए अर्थात् समावेश वाला होना चाहिए । इस प्रकार, ज्ञान की किरणें = भिन्न-भिन्न इन्द्रियों की वृत्तियाँ, बाह्य औन्मुख्य के न होने से, पदस्थ = तुर्यातीत दशा में अधिष्ठित ही हो जाती है ॥ ९१ ॥

इतना होने पर भी इस (दशा) में प्रमत्त नहीं रहना चाहिये । यह कहते हैं—

(योगी) भाव और अभाव की गति को रोक कर अन्तःस्थ भाव की भावना करे । भाव में स्थित वह भाव एवं अभाव के अवरोध का साक्षात्कार करने वाला (फलतः) भावों के प्रति निःस्पृह हो जाता है ॥ ९२ ॥

योगी, भाव और अभाव की गतियों को रोककर = प्राण और अपान के क्षोभ को छोड़कर, अन्तःस्थ भाव की, = आन्तरिक सत्ता की, भावना करे अर्थात् सुषुम्ना में प्रवेश के द्वारा बार-बार वहीं पर आसक्ति करें जिससे व्युत्थान दशा में भी वहाँ से अलगाव न हो सकें । इसीलिए वह (= योगी), भावस्थ = ग्रह्य और ग्राहक का क्षोभ, होने पर भी, बाह्य और अन्तः करणवर्गो के द्वारा ज्ञान का लोप न होने के साथ-साथ स्वरूप मात्र में परिनिष्ठित ही रहता है । जैसा कि वहीं पर कहा गया है—

रूपं यस्य न हीयेत भावस्थो भावभासकः ॥
स्वरूपप्रतिपन्नोऽसावन्तःकरणवर्जितः ।
भावस्थं तं विजानीयाद् ग्राह्यग्राहकविप्लवे ॥'

इति । अत एव 'भावाभावयोः' प्राणापानयोर्मध्यधामानुप्रवेशेन निस्तरङ्गतया साम्यात्मा योऽसौ 'अवरोधः' तं पश्यति साक्षात्करोतीत्यर्थः ।

यदुक्तं तत्रैव

'प्राणापानौ समौ यस्य साम्यावस्थानमागतौ ।
निस्तरङ्गप्रकारेण भावाभावावरोधदृक् ॥'

इति । अत एव बहिरौन्मुख्याभावात् 'भावनिःस्पृहः' स्वस्वरूपनिष्ठ एवेत्यर्थः । यदुक्तं तत्रैव—

'स्वरूपस्थितिसंयोगलक्षवृत्तिरतस्य च ।
भावनिःस्पृहमेतद्धि तत्पदत्यागवर्तिनः ॥' इति ॥ ९२ ॥

ननु खशब्दस्य स्वरूपाविशेषेऽपि कुतस्त्योऽयं दशधा भिन्नोऽर्थः ?—इत्याशङ्क्याह—

---

'जो प्राण और अपान के ऊर्ध्वाधोगमन के विक्षेप से रहित है; इन्द्रियों की इच्छा से जिसका मनविचलित नहीं होता; जो भावस्थ और भाव का अवभासक है फलतः स्वरूप को उपलब्ध कर लिया है तथा अन्तःकरण की क्रिया से रहित है, ग्राह्यग्राहक के विप्लव के विषय में उसे भावस्थ जानना चाहिये ।'

इसलिए भाव और अभाव = प्राण और अपान, के मध्यस्थान में प्रवेश के द्वारा तरङ्गरहित होकर शान्त आत्मा वाला जो यह अवरोध, उसको, देखता है = साक्षात्कार करता है ।

जैसा कि वहीं कहा है—''जिसके प्राण और अपान सम हैं अर्थात् साम्यावस्था की प्राप्त हो चुके हैं, निस्तरङ्ग होने के कारण वह भाव और अभाव के अवरोध का साक्षात्कार करने वाला है ।''

इसलिए बाह्य औन्मुख्य न होने के कारण पदार्थों के प्रति निःस्पृह (= इच्छारहित अर्थात्) = स्वरूपनिष्ठ (रहता है) ।

जैसा कि वहीं कहा गया है—

स्वात्मरूप में स्थिति प्राप्त करने, जीव का शिव मे संयोजन करने, अपने लक्ष्यवेध मे संलग्न रहने वाले तथा उस पद का त्याग करने वाले की यही भाव निष्पृहता है ॥ ९२ ॥

प्रश्न—'ख' शब्द तो एक ही हैं फिर दश प्रकार का भिन्न अर्थ कहाँ से आया?—यह शङ्का कर कहते हैं—

**आत्माणुकुलमूलानि शक्तिभूतिश्चिती रतिः ।**
**शक्तित्रयं द्रष्टृदृश्योपरक्तं तद्विवर्जितम् ॥ ९३ ॥**
**एतत्खं दशधा प्रोक्तमुच्चारोच्चारलक्षणम् ।**

आत्मा परमात्मा, अणुः सङ्कुचित आत्मा, कुलमूलं प्राणशक्तेः प्रभवस्थानं जन्माधारः, शक्तिर्मध्यमप्राणवाहिनी, भूतिः स्वातन्त्र्यलक्षणमैश्वर्यम्, चितिस्तुर्यातीतपदात्मिका परसंवित्, रतिरासक्तिः, शक्तित्रयं द्रष्टृउपरक्ता ज्ञानशक्तिर्दृश्योपरक्ता क्रियाशक्तिस्तद्विवर्जितेच्छाशक्तिः, प्रोक्तमिति श्रीत्रिशिरोभैरवे । यदुक्तम्—

'खमात्मा केवलं विद्यात् खमणुः सर्वदिक्कतः ।
कुलमूलं तु खं ज्ञेयं खं शक्तिः परिपठ्यते ॥
एकं तु खमिहोद्भाव्यं खद्वयं भूतिचिद्रतिः ।
द्रष्टृदृश्योपरक्तं च शक्तित्रितयं खं विदुः ।'
निष्पन्नपरिणामेन खमभूत्तत्त्वलक्षणम् ।'

इति उच्चारोच्चारलक्षणमिति यथायथं भावनाप्रकर्षेण परसंविदासादकमित्यर्थः ॥ ९३-९४ ॥

न केवलमत्र खशब्देनैव दशधा भिन्नोऽयमर्थ उच्यते यावच्छब्दान्तरेणापि—इत्याह—

---

आत्मा, अणु, कुलमूल, शक्ति, भूति, चैतन्य, रति, दृष्टा और दृश्य से उपरक्त और उनसे रहित तीनो शक्तियां ये दश प्रकार के उच्चारोच्चार लक्षण वाला ख कहा गया है ॥ ९३-९४- ॥

आत्मा = परमात्मा, अणु = सङ्कुचित आत्मा, कुलमूल = प्राण शक्ति का उत्पत्ति स्थान = जन्म का आधार, शक्ति = मध्यम प्राण मे प्रवाहित होने वाली, भूति = स्वातन्त्र्यलक्षण ऐश्वर्य, चिति = तुर्यातीत पद वाली परा संवित्, रति = आसक्ति, तीन शक्तियाँ = द्रष्टा से उपरक्त ज्ञानशक्ति दृश्य से उपरक्त क्रियाशक्ति और उन दोनो से रहित इच्छाशक्ति । कहा गया है—त्रिशिरोभैरव में । जैसा कि कहा है—

'ख' को केवल आत्मा जानना चाहिए । 'ख' को सब ओर से अणु, (जानना चाहिए) । कुलमूल को ख समझना चाहिए । 'ख' शक्ति को कहा जाता है । एक 'ख' और दो 'ख' यहाँ भूति, चित् और रति को जानना चाहिए । द्रष्टा और दृश्य से उपरक्त तथा (उन दोनो से परे) तीन शक्तियों को 'ख' माना गया है । निष्पन्न हुए परिणाम के कारण 'ख' तत्त्व लक्षण वाला हो गया ॥

उच्चार-उच्चार लक्षण (का अभिप्राय है) क्रमशः भावना के प्रकर्ष के द्वारा परासंवित् को प्राप्त कराने वाला ॥ ९३-९४ ॥

केवल 'ख' शब्द के द्वारा ही यह दश प्रकार का भिन्न अर्थ नहीं कहा जाता

**धामस्थं धाममध्यस्थं धामोदरपुटीकृतम् ॥ ९४ ॥**
**धाम्ना तु बोधयेद्धाम धाम धामान्तगं कुरु ।**
**तद्धाम धामगत्या तु भेद्यं धामान्तमान्तरम् ॥ ९५ ॥**

इह खलु योगी 'धाम्नो' भूतेः स्वातन्त्र्यस्य यत् 'उदरं' सतत्त्वं तेन 'पुटीकृतं' सर्वतः संवलितं नित्यावियुक्तम्, अत एव 'धाम्नि' अणौ स्थितं सङ्कुचितात्मतया स्फुरितं 'धाम' आत्मानं बोधयेत् तद्बोधे समर्थमाचरेदित्यर्थः । तत्समर्थाचरणमेवाह—'धाममध्यस्थं धाम धाम्ना धामान्तगं कुरु' इति । 'धाम्नः' कुलमूलस्य जन्माधारस्य मध्ये स्थितं 'धाम' प्राणशक्तिं 'धाम्ना' रत्या तदासक्त्या 'धाम्नः' चितेस्तुर्यातीतपदस्य 'अन्तः' पराकाष्ठा तद्गतं कुरु तदेकरूपतया साक्षात्कुर्यादित्यर्थः । 'तत्' तस्मात् परतत्त्वसाक्षात्काराद्धेतोः 'धाम्नो' दृश्योपरक्तायाः क्रियाशक्तेः प्रमेयभुवो गत्या 'धाम' दृष्टृपरक्ता ज्ञानशक्तिः 'भेद्यं' भेदनीयं त्याज्यमित्यर्थः । यथाहि प्रमेयभूः सर्ववादिषु त्याज्यत्वेन सिद्धा तथा प्रमाणभूतमपि ज्ञानं त्याज्यमेवेति भावः । तुशब्दो भिन्नक्रमो हेतौ । ततश्च 'आन्तरं' प्रमात्रैकात्म्यमापन्नं 'धामान्तम्' अन्त्यं धाम द्रष्टृदृश्याद्युपाधिशून्यां

---

बल्कि दूसरे शब्द से भी—वही कहते हैं—

(योगी) स्वातन्त्र्य के उदर के द्वारा संपुटित किए गए, (फलतः) धाम (= अणु) में स्थित धाम (= आत्मतत्त्व) का बोध करे । जन्माधार के मध्य में स्थित प्राणशक्ति की रति के द्वारा तुरीयातीत पद की पराकाष्ठा तक पहुँचना चाहिए । इस कारण क्रियाशक्ति की गति के द्वारा ज्ञान शक्ति का उद्बोध करना चाहिए । उसके बाद आन्तरिक धामान्त अर्थात् इच्छाशक्ति (का आश्रयण करना चाहिए) ॥ -९४-९५ ॥

योगी धाम का = भूति का = स्वातन्त्र्य का, जो उदर = तत्त्व, उसके द्वारा पुटीकृत = चारा ओर से घिरा हुआ = नित्य संश्लिष्ट,इसलिए धाम में = अणु में, स्थित = संकुचित रूप से स्फुरित, धाम = आत्मा, का बोधन करे = उसके बोध के अनुकूल आचरण करें । उसके योग्य आचरण को बतला रहे हैं—धाम मध्यस्थ... कुरु । धाम के = कुलमूल के = जन्माधार के, मध्य में स्थित, धाम = प्राण शक्ति को, धाम की = चिति की = तुर्यातीत पद की, जो अन्तः = पराकाष्ठा, उसमें लगाओ अर्थात् उसके साथ एकरूप होकर साक्षात्कार करो । इस प्रकार = उस परतत्त्व साक्षात्कार के कारण, धाम की = दृश्य से उपरक्त क्रियाशक्ति की = प्रमेय भूमि की, गति के द्वारा, धाम = द्रष्टा से उपरक्त ज्ञानशक्ति का भेदन करना, चाहिए अर्थात् परित्याग करना चाहिए । तात्पर्य यह है कि जैसे सभी वादियों के मत मे प्रमेय भूमि त्याज्य मानी गई हैं उसी प्रकार प्रमाणभूत ज्ञान भी त्याज्य हैं । 'तु' शब्द का क्रम भिन्न है और (वह) हेतु अर्थ में है । इसके बाद आन्तर = प्रमाता के साथ एकात्मता को प्राप्त, धामान्त = अन्तिम

स्वविमर्शमात्ररूपामिच्छाशक्तिम् अर्थात् आश्रयेत् येन तत्रैव प्ररोहमियात्—इति शब्दार्थसङ्गतिः । वाक्यार्थस्तु प्राग्वत् स्वयमेवाभ्यूह्यः ॥ ९५ ॥

नन्वन्येऽपि परतत्त्वान्तःप्रवेशे बहव उपायाः संभवन्ति तत्कथमस्यैव रहस्यत्वं येन गोपनीयत्वेन निगूढार्थतयैवमुपदेशः ?—इत्याशङ्क्याह—

**भेदोपभेदभेदेन भेदः कार्यस्तु मध्यतः ।**

यः पुनरन्यो भेदोपभेदात्मोपायभेदः संभवति स मध्यतः कार्यो मध्यमो नैवंविध उत्तम इत्यर्थः ॥

एतदेवोपसंहरति—

**इति प्रवेशोपायोऽयमाणवः परिकीर्तितः॥ ९६ ॥**
**श्रीमहेश्वरनाथेन यो हृत्स्थेन ममोदितः।**

न केवलमेतदिहैवोक्तं यावदन्यत्रापि—इत्याह—

**श्रीब्रह्मयामले चोक्तं श्रीमान् रावो दशात्मकः ॥ ९७ ॥**
**स्थूलः सूक्ष्मः परो हृद्यः कण्ठ्यस्तालव्य एव च।**
**सर्वतश्च विभुर्योऽसौ विभुत्वपददायकः ॥ ९८ ॥**

---

धाम = द्रष्टा दृश्य आदि की उपाधि से रहित केवल आत्मविमर्शरूप इच्छाशक्ति का आश्रयण करे जिससे वहीं पर प्ररोह को प्राप्त हो सके—इस प्रकार शब्दार्थ की सङ्गति है । वाक्यार्थ तो पहले की भाँति स्वयं समझ लेना चाहिए ॥ ९४-९५ ॥

प्रश्न—परतत्त्व में प्रवेश के विषय में और भी बहुत उपाय संभव हैं तो फिर इसी को रहस्य क्यों (कहा गया) जिससे गोपनीय के रूप में अर्थ को छिपाकर उपदेश (किया गया) ?—यह शङ्का कर कहते हैं—

जो भेद और उपभेद के द्वारा भेद हैं उसे मध्य से करना चाहिए ॥ ९६- ॥

जो कि दूसरा भेदोपभेद वाला उपाय संभव है वह मध्य से किया जाना चाहिए अर्थात् वह मध्यम (श्रेणी का उपाय) है न कि इस प्रकार उतम ॥ ९६ ॥

इसी का उपसंहार करते हैं—

इस प्रकार (मेरे) हृदय में स्थित महेश्वरनाथ के द्वारा जो कहा गया (वह) यह आणवप्रवेशोपाय (मेरे द्वारा) वर्णित किया गया ॥ -९६-९७- ॥

यह (उपाय) केवल यही नहीं बल्कि अन्यत्र भी कहा गया है—वह कहते हैं—

श्री ब्रह्मयामल में श्रीमान् राव दश प्रकार का कहा गया है जो स्थूल सूक्ष्म, पर, हृद्य, कण्ठ्य और तालव्य और सब प्रकार से व्यापक वह

श्रीमानिति विमर्शरूपतया प्रकाशस्यापि जीवितभूतत्वात् । इहास्य परवाग्रूपस्य अहंविमर्शात्मनो रावस्य प्रथमं तावद्धृदादिभवत्वात् पश्यन्तीमध्यमावैखरीरूपतया त्रैविध्यं, प्रत्येकं च स्थूलसूक्ष्मपरत्वेन त्रैविध्ये नवधात्वम्, एषां नवानामपि भित्तिभूतः परवागात्मा दशमः, स एव हि स्वस्वातन्त्र्यादेवमवभासयेत् । अत उक्तं 'सर्वतश्च विभुः' इति । स एव च विश्रान्तिस्थानम्—इत्युक्तं 'विभुत्वपददायकः' इति । एतच्च प्राक्

'तस्य प्रत्यवमर्शो यः परिपूर्णोऽहमात्मकः ।
स स्वात्मनि स्वतन्त्रत्वाद्विभागमवभासयेत् ॥
विभागाभासने चास्य त्रिधा वपुरुदाहृतम् ।
पश्यन्ती मध्यमा स्थूला वैखरीत्यभिशब्दितम् ॥
तासामपि त्रिधा रूपं स्थूलसूक्ष्मपरत्वतः ।' (३।२३७)

इत्यादिना—

'तत्परं त्रितयं तत्र शिवः परचिदात्मकः ।' (३।२४८)

इत्यन्तेन निर्णीतप्रायम्—इति तत एवैतत्सतत्त्वमवधारणीयम् ॥ ९८ ॥

तदेवमत्रैव परमवधातव्यं येन परमार्थिकस्वरूपलाभो भवेत्—इत्याह—

**जितरावो महायोगी संक्रामेत्परदेहगः ।**
**परां च विन्दति व्याप्तिं प्रत्यहं ह्यभ्यसेत तम् ॥ ९९ ॥**

---

विभुत्व पद को देने वाला है ॥ -९७-९८ ॥

विमर्श रूप होने के कारण प्रकाश का भी जीवन (= कारण) होने के कारण (यह) श्रीमान् है । इस परावाक् रूप अहंविमर्शस्वरूप राव का पहला प्रकार पश्यन्ती मध्यमा वैखरी तीन (रूपों वाला) है क्योंकि, पहले हृदय आदि (= नाभि, कण्ठ) में उत्पन्न होते हैं । फिर प्रत्येक का स्थूल सूक्ष्म और पर भेद से तीन-तीन प्रकार होने से नव प्रकार हुआ । उन नव का आधारभूत परावाक् रूप (राव) दशवां है । वही अपने स्वातन्त्र्य के कारण इस प्रकार अवभासन करता है । इसलिये कहा गया—'सब प्रकार से व्यापक है ।' और वही विश्रान्ति का स्थान है इसलिये कहा गया है—विभुत्वपद को देने वाला है । यह (बात) पहले—''उसका जो.........उनका भी तीन रूप'' (तं. आ. ३।२३७) इत्यादि के द्वारा

'वह तीनो पर है उनमें शिव परचिदात्मक है ।' (तं. आ. ३।२४८)

यहाँ तक प्रायः निर्णीत है । इसीलिए इसको सतत्त्व समझना चाहिए ॥ ९८ ॥

तो इस प्रकार यहीं पर परम तत्त्व का निश्चय करना चाहिए जिससे पारमार्थिक स्वरूप की पाप्ति हो जाय—यह कहते हैं—

राव को वश में करने वाला महायोगी (क्रमशः) उत्कृष्ट देह में रहकर

**तावद्यावदरावे सा रावाल्लीयेत राविणी ।**

'जित' आक्रान्तो वशीकृत उत्तरोत्तरो रावो येनासावेवंविधो महायोगी अर्थादुत्तरोत्तरत्यागेनोर्ध्वमूर्ध्वं रावं संक्रामेत् येन 'परदेहगो' यथायथमुत्कृष्टोत्कृष्टराव-स्वरूपनिष्ठ: 'परां व्याप्तिं विन्दति' पारमार्थिकं स्वरूपं लभते इत्यर्थ: । यदुक्तम्—

'नदते दशधा सा तु दिव्यानन्दप्रदायिका ।
चिनीति प्रथम: शब्दश्चिञ्चिनीति द्वितीयक: ॥
चीरवाकी तृतीयस्तु शङ्खशब्दश्चतुर्थक: ।
तन्त्रीघोष: पञ्चमश्च षष्ठो वंशरवस्तथा ॥
सप्तम: कांस्यतालस्तु मेघशब्दरवस्तथा ।
नवमो दावनिर्घोषो दशमो दुन्दुभिस्वन: ॥
नव शब्दान् परित्यज्य दशमो मोक्षदायक: ।
अनेन विधिना येन व्याहरेद्दशधा रवम् ॥'

इति । अतश्च तावदत्र प्रतिदिनमभ्यास: कार्यो यावत् सा परवागात्मा विमर्शशक्तिस्तत्तद्रावरूपतया प्रस्फुरणात् राविणी रावादेकमेकं रावं विलाप्य विभाग-विगलनात् 'अरावे'ऽहंपरामर्शरूपे स्वात्मनि 'लीयेत' विश्राम्यतीत्यर्थ: ॥ ९९ ॥

---

संक्रमण करता है और पर व्याप्ति को प्राप्त करता है । उसे चाहिए कि वह उसका प्रतिदिन तब तक अभ्यास करे जब तक वह राविणी (= विमर्श शक्ति) राव से अराव में न लीन हो जाय ॥ ९९-१००- ॥

जीत लिया गया = आक्रान्त (अथवा) वश में कर लिया गया है उत्तरोत्तर राव (= शब्द) जिसके द्वारा वह, उस प्रकार का महायोगी अर्थात् उत्तरोत्तर त्याग के द्वारा ऊपरी-ऊपरी राव को संक्रान्त करे जिससे परदेह को प्राप्त अर्थात् क्रमश: उत्कृष्ट राव के स्वरूप में तत्पर हुआ, परव्याप्ति को प्राप्त करता है अर्थात् पारमार्थिक स्वरूप का लाभ करता है । जैसा कि कहा है—

दिव्य आनन्द को देने वाली वह (परावाक् अथवा विमर्श शक्ति) दश प्रकार से बजती है । 'चिन्' इस प्रकार का पहला शब्द है । चिन्-चिन् यह दूसरा । तीसरा शब्द चीरवाकी (सम्भवत: कपड़ा फटने की आवाज) है और चौथा शंख शब्द है । पाँचवा वीणा का शब्द और छठाँ वंशी का शब्द है । सातवाँ काँसे के वर्तन का (आठवाँ) बादल का शब्द नवाँ दावाग्नि का शब्द और दशवाँ मोक्षदायक है । इस प्रकार से दश प्रकार के शब्द का व्यवहार करना चाहिये ।

इसी प्रकार प्रतिदिन (तब-तक) अभ्यास करना चाहिए जब तक कि परावाक् रूप विमर्शशक्ति भिन्न-भिन्न राव के रूप में प्रस्फुरित होने के कारण राविणी होकर राव के द्वारा एक-एक राव को विलीन कर अर्थात् विभाग को नष्ट कर अराव में = अहं परामर्श रूप आत्मा में, लीन न हो जाय = विश्रान्त न हो जाय ॥ ९९॥

एवं परतत्त्वान्तःप्रवेशं निर्णीय तदानन्तर्योद्दिष्टानि तत्पथलक्षणान्यपि लक्षयितुमाह—

**अत्र भावनया देहगतोपायैः परे पथि ॥ १००॥**
**विविक्षोः पूर्णतास्पर्शात्प्रागानन्दः प्रजायते ।**
**ततोऽपि विद्युदापातसदृशे देहवर्जिते ॥ १०१ ॥**
**धाम्नि क्षणं समावेशादुद्भवः प्रस्फुटं प्लुतिः ।**
**जलपांसुवदभ्यस्तसंविद्देहैक्यहानितः ॥ १०२ ॥**
**स्वबलाक्रमणाद्देहशैथिल्यात् कम्पमाप्नुयात् ।**
**गलिते देहतादात्म्यनिश्चयेऽन्तर्मुखत्वतः ॥ १०३ ॥**
**निद्रायते पुरा यावन्नरूढः संविदात्मनि ।**

अत्र समनन्तरोक्ते उपायविशेषे या 'भावना' अभ्यासस्तया तथोक्तवक्ष्यमाणैरुच्चारकरणादिभिः 'देहगतैरुपायैः परे पथि' परतत्त्वान्तर्वेष्टुमिच्छोर्न तु तत्र प्रविष्टस्य, तस्य हि पूर्णतैव भवेदिति भावः पूर्णतायाः 'स्पर्शात्' औन्मुख्यमात्रात् न तु तदावेशात् प्रथमम् 'आनन्दः' चमत्कारविशेषः प्रकर्षेण स्वात्मविषयीकारेण 'जायते' अनुभवपदवीमासादयेदित्यर्थः । तत आनन्दादप्यनन्तरं 'विद्युदापातसदृशे'

---

इस प्रकार पर तत्त्व में प्रवेश का निर्णय कर उसके बाद कहे गये उसके पथ के लक्षणों को भी बतलाने के लिए कहते हैं—

इस (उपाय) में भावना के द्वारा एवं देहगत उपायों के द्वारा परम पथ में प्रवेश चाहने वाले को पूर्णता के स्पर्श के पहले आनन्द का लाभ होता है । इसके बाद बिजली गिरने के समान शरीर ज्ञान से रहित पर तत्त्व में क्षण मात्र समावेश होने से स्पष्टरूप से उद्‌भव अर्थात् ऊर्ध्व की ओर उन्नति होती है । उसके पश्चात् जल एवं धूल के समान अभ्यास के द्वारा प्राप्त संवित् और शरीर की एकता का नाश होने से अपने बल के आक्रमण से देह की शिथिलता के कारण योगी कम्पन को प्राप्त करता है। तत्पश्चात् देह के साथ (आत्मा के) तादात्म्य के नष्ट हो जाने पर अन्तर्मुखता के कारण (योगी) पहले निद्रा का अनुभव (तब तक) करता है जब तक संविदात्मा में रूढ नहीं हो जाता ॥ -१००-१०४- ॥

यहाँ = पहले कहे गए उपायविशेष में जो भावना = अभ्यास, उसके द्वारा इस प्रकार कहे गए तथा आगे कहे जाने वाले उच्चार करण आदि देह में सम्पन्न होने वाले उपायों के द्वारा परमपथ में = परतत्त्व में, प्रवेश करने की इच्छा वाले न कि उसमें प्रविष्ट को; क्योंकि तब तो उसकी पूर्णता ही हो जायगी; पूर्णता के स्पर्श से, जो कि औन्मुख्यमात्र होता है न कि उसमें आवेश रूप, पहले आनन्द = चमत्कार विशेष, प्रकृष्ट रूप में = आत्मा को विषय बनाकर, उत्पन्न होता है =

यथा विद्युति पतितायां सर्वं स्वरूपत्यागेन तन्मयीभवति, एवं 'धाम्नि' परे तत्त्वे समावेशात् प्रस्फुटं कृत्वा देहादावात्मग्रहविगलनेनाधस्तनदशाविश्लेषात् परधामाधिरोहात्मकः 'उद्भवः प्लुतिः' ऊर्ध्वं गमनं भवेदित्यर्थः । अत एव 'देहवर्जिते' इत्युक्तम् । क्षणमिति, चिरस्य हि समावेशे पारिपूर्ण्यमेव भवेदिति भावः । एवं पांसूदकवदनेकजन्माभ्यस्तस्य संविद्देहैक्यस्य या 'हानिः' विभागेन ज्ञप्तिः, ततः क्षणं संविदात्मनः स्वस्य यत् 'बलम्' अहन्तालक्षणं वीर्यं तस्य 'आक्रमणात्' आत्मन्येवाभिमानोदयात् अनात्मन्यात्माभिमानः शिथिलीभवेत्—इति देहादीनां भङ्गुरायमाणत्वात् 'कम्पमाप्नुयात्' तत्र दार्ढ्यं जह्यादित्यर्थः । एवं 'पुरा' पूर्वं प्रथमं देहस्य संविदैक्याभिनिवेशे निवृत्ते सति संविदौन्मुख्यमात्रात् 'निद्रायते' बाह्यवृत्तिव्युपरमात् आन्तरस्य च कस्यचिदनुभवस्य स्फुटमनुदयात् निद्रायमाण आस्ते इत्यर्थः । कियत्कालमेवमास्ते, इत्याह 'यावन्न रूढः संविदात्मनि' इति । तत्रास्य प्ररोहे हि लक्षणान्तरमुदियादिति भावः ॥ १०३ ॥

तदाह—

**ततः सत्यपदे रूढो विश्वात्मत्वेन संविदम् ॥ १०४ ॥**

---

अनुभूत होता है । उसके बाद = आनन्द के भी बाद, विद्युत् आपात के सदृश = जैसे बिजली के गिरने पर सब कुछ अपने रूप का त्याग कर विद्युन्मय हो जाता है, उसी प्रकार, धाम में = परतत्त्व में, समावेश होने से स्पष्ट रूप से देह आदि में आत्मा की अवधारणा का नाश होने से नीचे की दशा से अलग हो जाने के कारण, पर धाम में आरोहण स्वरूप उद्‌भव = प्लुति = ऊर्ध्व गमन होता है । इसीलिए 'देहरहित' कहा गया । क्षणमात्र के लिए—कहने का भाव यह है कि बहुत देर तक समावेश होने पर पूर्णता ही हो जायगी । इस प्रकार धूल और पानी के समान (= जैसे धूलधूसरित व्यक्ति ऊपर से पानी में कूदे तो धूल धुल जाती है वैसे) अनेक जन्मों से अभ्यास के द्वारा प्राप्त संविद् और शरीर की एकता की जो हानि = पृथक् रूप में ज्ञान, उससे एक क्षण के लिए संविद्‌स्वरूप जो अपना बल = अहन्तालक्षण वीर्य, उसके आक्रमण = अपने अन्दर ही अभिमान के उदय से, अनात्मा में आत्मा का बोध शिथिल हो जाता है । इस प्रकार शरीर आदि के भग्न जैसा होने के कारण (योगी) कम्प को प्राप्त करता है = उस विषय में दृढता को छोड़ देता है । इस प्रकार पहले देह की संवित् के साथ ऐक्यभावना के हट जाने पर केवल संविद् की ओर उन्मुखता रहने से निद्रा का अनुभव करता है अर्थात् बाह्य वृत्तियों के शान्त होने से तथा आन्तरिक किसी अनुभव का स्पष्टतया उदय न होने से निद्रालु जैसा पड़ा रहता है । कब तक ऐसा रहता है?—उसको बतलातें है—कि जब तक संविदात्मा में रूढ नहीं हो जाता । उस (आत्मा) मे इस (योगी) का आरोहण होने में (योगी के अन्दर) दूसरे लक्षणों का उदय होने लगेगा—यह तात्पर्य है ॥ १००-१०३ ॥

**संविदन् घूर्णते घूर्णिर्महाव्याप्तिर्यतः स्मृता ।**

'ततो' अनन्तरं परसंविदात्मनि 'सत्यपदे' प्राप्तप्ररोहः सन् निखिलस्यास्य देहघटाद्यात्मनो जगतः संविदेव सतत्त्वं न पुनस्तदतिरिक्तं नामैतत् किञ्चित्—इति साक्षात्कुर्वन् 'घूर्णते' भ्रमति, चलति स्पन्ददशाधिशायी भवेदित्यर्थः । एतद्दशाधिशायिनो हि योगिनः सदैव सृष्टिसंहारकारित्वेन परं पारमेश्वर्यमुदियात्—इत्युक्तं 'घूर्णिर्महाव्याप्तिर्यतः स्मृता' इति ॥ १०४ ॥

ननु—

'दशावस्थाश्विनोत्यन्तः शक्तितेजोपवृंहितः ।
कम्पो भ्रमस्तथा घूर्णिः प्लवनं स्थिरतापि च ॥
चित्रकाशस्तथानन्दो दिव्यदृष्टिश्चमत्कृतिः ।
अवाच्यो दशमो भावः शिवतत्त्वे प्रवेशनात् ॥
संस्पर्शः प्राप्यते यावत्तावन्मुक्तो भवार्णवात् ।'

इत्याद्युक्त्या परतत्त्वान्तर्विविक्षोर्लक्षणान्तराण्यपि संभवन्ति—इति यावत् तानि नोदितानि तावत्कथमेतावतैव तदनुप्रवेशो भवेत् ?—इत्याशङ्क्याह—

**आत्मन्यनात्माभिमतौ सत्यामेव ह्यनात्मनि ॥ १०५ ॥**

---

उसके बाद सत्य पद पर आरूढ़ हुआ (योगी) संविद् का विश्वरूप में अनुभव करता हुआ घूर्णन करता है । क्योंकि घूर्णि महाव्याप्ति कही गई है ॥ -१०४-१०५- ॥

ततः = बाद में, परसंविद्रूप सत्यपद में आरूढ़ होकर (योगी) इस सम्पूर्ण देहघटादि रूप जगत् का तत्त्व संविद् ही है उसके अतिरिक्त दूसरा नहीं—ऐसा साक्षात् जानता हुआ घूर्णन करता है = भ्रमण करता है = चलता है अर्थात् स्पन्द दशा में रहता है । उस दशा में अधिष्ठित योगी के सदा सृष्टिसंहारकारी होने से परम परमेश्वरता का उदय होता है—इसलिए कहा—क्योंकि घूर्णि महाव्याप्ति कही गई है ॥ १०४ ॥

प्रश्न—अन्तःशक्ति के तेज से समृद्ध (योगी) दश अवस्थाओं को प्राप्त होता है । (वे अवस्थायें हैं)—कम्प भ्रम, धूर्णि, प्लवन, स्थिरता, चित्प्रकाश,आनन्द, दिव्यदृष्टि, चमत्कार और अवाच्य दशम भाव (जिसका) शिव तत्त्व में प्रवेश के कारण तब तक संस्पर्श प्राप्त होता रहता है जब तक संसार समुद्र से मुक्त नहीं हो जाता ।

इत्यादि उक्ति के द्वारा पर तत्त्व के भीतर प्रवेश चाहने वाले के दूसरे भी लक्षण होते हैं, इस कारण जब तक वे (योगी) के अन्दर उदित न हों तब तक इतने (= मूल कारिका मे कहे गये) से ही उसमें प्रवेश कैसे हो जायगा?—यह शङ्का कर कहते हैं—

**आत्माभिमानो देहादौ बन्धो मुक्तिस्तु तल्लयः ।**

इह खलु द्विधा बन्ध आत्मन्यनात्माभिमानोऽनात्मन्यात्माभिमानश्च—इति तदेव चाणवं मलमुच्यते । यदाहुः—

'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः ॥' (ई०प्र० ३।२।४)

इति । तदेव च कार्ममायीयहेतुत्वात् इयतः संसारस्य मूलभूतम् । यदुक्तम्—

'मलः कर्म निमित्तं तु नैमित्तिकमतः परम् ।' (स्व०तं० ३।१७६)

इति । अतश्च 'स एष मूले निहितः कुठारः' इतिवत् तत्रैव यदितव्यं येनाशेषबन्धव्युपरमो भवेदिति भावः । तदेवेह प्राधान्येनोक्तम्, अतश्च मुख्यया वृत्त्या स एव बन्धस्तल्लय एव च मुक्तिरिति संक्षेपार्थः ॥ १०५ ॥

तल्लश्च किमक्रमेणैव भवेदुतान्यता ?—इत्याशङ्क्याह—

**आदावनात्मन्यात्मत्वे लीने लब्धे निजात्मनि ॥ १०६ ॥**

---

आत्मा में अनात्मा का अभिमान होने पर ही अनात्मा देह आदि में आत्माभिमान बन्धन है और उसका लय हो जाना मुक्ति है ॥ -१०५-१०६- ॥

बन्धन दो प्रकार का है—(१) आत्मा में अनात्माभिमान और (२) अनात्मा में आत्माभिमान । यही आणवमल कहा जाता है । जैसा कि कहते हैं—

''बोध के स्वातन्त्र्य की हानि तथा स्वातन्त्र्य का बोध न होना (यह) दो प्रकार का आणव मल अपने स्वरूप की हानि के कारण होता है ।'' (ई. प्र. का. ३।२।४)

और वही कार्म और मायीय मलों का हेतु होने के कारण संसार का मूल है । जैसा कि कहा है—

मल कर्म का निमित्त है इसके अतिरिक्त (शेष) नैमित्तिक (= मलके कार्य) है । (स्व. तं. ३।१७६)

इस प्रकार 'यह तो मूल मे ही कुठाराघात है' के समान वहीं (= आणव मल के निरसन में) प्रयास करना चाहिये जिससे समस्त बन्धन का नाश हो जाय । वही यहाँ मुख्य रूप से कहा गया है । इसलिये मुख्य रूप में वही (= आणव मल ही) बन्ध है और उसका लय ही मुक्ति है—यह संक्षिप्त अर्थ है ॥ १०५ ॥

उसका लय क्रम से होता है या दूसरी प्रकार ?—यह शङ्का कर कहते हैं—

पहले अनात्मा जब आत्मा में लीन हो जाता है तथा अपना स्वरूप

**आत्मन्यनात्मतानाशे महाव्याप्तिः प्रवर्त्तते ।**

प्रथमं हि 'अनात्मनि' देहादावात्माभिमानस्य विलये सति आत्मन्यनात्मत्वाभिमानस्य नाशो भवेत् येन संविल्लक्षणे स्वस्मिन्नेवात्मन्यभिमानोदये सति महाव्याप्तिः प्रवर्त्तते, परं पारमेश्वर्यमुदियादित्यर्थः ॥ १०६ ॥

एवं प्रथमं विशिष्टापूर्वस्पर्शोदयात् आनन्दमात्रानुभवो न तु द्विविधस्यापि बन्धस्य व्युपरमः । तदनु देहादावात्माभिमानविगलनेन आत्मन्येवात्माभिमान उदेति किं तु क्षणमात्रं, पुनरपि व्युत्थानादौ तादवस्थ्यादनन्तरं देहादावात्माभिमानस्य साक्षाद्विलयः, तदनु तत्संस्कारस्यापि यावदन्ते यथायथमात्मन्येवात्माभिमानस्य प्ररोहान्महती व्याप्तिः प्रवर्तते—इति पञ्चभिरेव लक्षणैः पर्याप्तम्—इति तान्येवोपात्तानि न पुनरन्यानि तेषामत्रैवान्तर्भावात् ॥ १०६ ॥

यदभिप्रायेणैवागमोऽपि—इत्याह—

**आनन्द उद्भवः कम्पो निन्द्रा घूर्णिश्च पञ्चकम् ॥ १०७ ॥**
**इत्युक्तमत एव श्रीमालिनीविजयोत्तरे ।**

यदुक्तं तत्र—

---

उपलब्ध हो जाता है उसके बाद आत्मा के विषय में अनात्मज्ञान का नाश होने पर महाव्याप्ति होती है ॥ -१०६-१०७- ॥

पहले अनात्म देह आदि में आत्माभिमान का विलय होने पर आत्मा के बारे मे अनात्मभावना का नाश हो जाता है जिससे संविद्रूप अपनी आत्मा में अभिमान का उदय होने पर महाव्याप्ति का लाभ होता है अर्थात् परम परमेश्वरता का उदय होता है ॥ १०६ ॥

इस प्रकार पहले विशिष्ट अपूर्व स्पर्श का उदय होने के कारण आनन्द मात्र का अनुभव होता है न कि दोनों प्रकार के बन्धनों का नाश होता है । उसके बाद देह आदि में आत्मभाव के नष्ट होने से आत्मा में ही आत्मभाव उदित होता है किन्तु यह क्षण मात्र के लिये होता है । क्योकिं बाद मे व्युत्थान आदि में वैसी ही अवस्था रहती है । बाद मे देह आदि के विषय में आत्माभिमान का साक्षाद् विलय हो जाता है । उसके बाद उसके संस्कार का भी (विलय हो जाता है) । अन्त में क्रमशः आत्मा मे ही आत्मा की भावना का उदय होने से महाव्याप्ति का उदय होता है—ये पाँच लक्षण ही पर्याप्त है । इसलिये उन्हीं का ही उल्लेख किया गया न कि अन्य का । क्योंकि उनका इन्हीं (पाँच) में अन्तर्भाव हो जाता है ॥ १०६॥

इसी अभिप्राय से आगम भी है—वही कहते हैं—

इसीलिये मालिनी विजयोत्तरतन्त्र में आनन्द, उद्भव, कम्प, निद्रा और घूर्णि ऐसा कहा गया जैसा कि वहाँ कहा गया ॥ -१०७-१०८- ॥

'अनया शोध्यमानस्य शिष्यस्यास्य महामतिः ।
लक्षयेच्चिह्नसङ्घातमानन्दादिकमादरात् ॥
आनन्द उद्भवः कम्पो निद्रा घूर्णिश्च पञ्चकम् ।'

(मा०वि० ११।३५)

इति ॥ १०७ ॥

ननु योगिनः समग्रलक्षणोदये महाव्याप्तिर्भवेत्—इत्युक्तं, यदा पुनरेकैकमेव लक्षणमुदियात् तदास्य किं भवेत् ?—इत्याशङ्क्याह—

**प्रदर्शितेऽस्मिन्नानन्दप्रभृतौ पञ्चके यदा ॥ १०८ ॥**
**योगी विशेत्तदा तत्तच्चक्रेशत्वं हठाद् व्रजेत् ।**

यदा पुनरानन्दप्रभृतौ समनन्तरोक्ते पञ्चके योगी 'विशेत्' युगपत्तत्प्रवेश-विरोधात् एकैकमेव लक्षणमनुभवेत् तदास्य हठात् स्वरसत एव तत्र तत्र नियते चक्रे त्रिकोणादावीशत्वं भवेत्, तत्तच्चक्रजयो जायते इत्यर्थः ॥ १०८ ॥

ननु पूर्णतास्पर्शादेवमनुभवोदयः—इति पूर्णे सर्वस्य भावात् कथं नैयत्येनैवं भवेत्?—इत्याशङ्क्याह—

**यथा सर्वेशिना बोधेनाक्रान्तापि तनुः क्वचित् ॥ १०९ ॥**

---

"महाबुद्धिमान् गुरु इस (शक्ति) के द्वारा शोध्यमान इस शिष्य के अन्दर आनन्द आदि चिह्नसमूह को लक्षित करे । आनन्द उद्भव कम्प निद्रा और घूर्णि पाँच (चिह्न) हैं ।" (मा. वि. ११।३५) ॥ १०७ ॥

प्रश्न—योगी के अन्दर समस्त लक्षणों का उदय होने पर महाव्याप्ति होती है—ऐसा कहा गया । किन्तु जब एक-एक हो लक्षण प्रकट होते हैं तब इसका क्या होता है?—यह शङ्का कर कहते हैं—

जब इस ऊपर कहे गये पाँच आनन्द आदि में (योगी) प्रवेश करता है तो भिन्न-भिन्न चक्रेश्वरत्व को हठात् प्राप्त करता है ॥ -१०८-१०९- ॥

जब पहले कही गई आनन्द आदि (पाँच भूमिकाओं) में योगी प्रवेश करता है (अर्थात्) एक साथ उनमें प्रवेश न हो सकने के कारण एक-एक ही लक्षण का अनुभव करता है तब इसको हठात् = स्वभावतः ही उस-उस निश्चित त्रिकोण आदि चक्र में ईश्वरता प्राप्त हो जाती है अर्थात् उन-उन चक्रों पर विजय प्राप्त होती है ॥ १०८ ॥

प्रश्न—पूर्णता का स्पर्श होने पर ही उस प्रकार का अनुभव होता है तो उस प्रकार पूर्ण मे सबके होने से क्यों निश्चित रूप से ऐसा (एक-एक लक्षण प्रकट) होता है ?—यह शङ्का कर कहते हैं—

जैसे सर्वत्र वर्त्तमान बोध से व्याप्त भी शरीर किसी एक स्थल में कुछ

**किञ्चित्कर्तुं प्रभवति चक्षुषा रूपसंविदम् ।**
**तथैव चक्रे कुत्रापि प्रवेशात्कोऽपि संभवेत् ॥ ११० ॥**

यद्वत् सर्वव्यापिना बोधेन 'आक्रान्ता' तदभेदमापन्नापि तनुः क्वचिदेव किञ्चिदेव कर्तुं प्रभवति चक्षुषा रूपस्येव न तु गन्धादेः, अर्थात् संनिकृष्ट एव देशे न तु विप्रकृष्टे संविदम्; एवं कुत्रापि त्रिकोणादौ प्रतिनियते चक्रे प्रवेशात् कोऽपि आनन्दादिरेकैक एवानुभवविशेषः संभवेत् न तु सर्वः—इति युक्तमुक्तं 'तत्तच्चक्रेशत्वं हठाद्व्रजेत्' इति ॥ ११० ॥

ननु किं कस्य चक्रम् ?—इत्याशङ्क्याह—

**आनन्दचक्रं वह्न्यश्रि कन्द उद्भव उच्यते ।**
**कम्पो हृत्तालु निद्रा च घूर्णिः स्यादूर्ध्वकुण्डली॥ १११ ॥**

'वह्न्यश्रि' इति त्रिकोणं योगिनीवक्त्रमित्यर्थः । 'ऊर्ध्वकुण्डली' इति द्वादशान्तः । एषां चाभेदोपचारात् सामानाधिकरण्येन निर्देशः ॥ १११ ॥

नन्वेषामेवं प्रतिनियमे किं प्रमाणम् ?—इत्याशङ्क्याह—

---

करने में समर्थ होता है—जैसे रूप का ज्ञान आँख से । इसी प्रकार चक्र मे कहीं भी प्रवेश होने से कोई एक ही (लाभ) सम्भव होता है ॥ -१०९-११० ॥

जिस प्रकार सर्वव्यापी बोध के द्वारा आक्रान्त = उसके साथ अभेद को प्राप्त, भी शरीर कहीं ही कुछ ही करने में समर्थ होता है (जैसे) चक्षु के द्वारा रूप का ही (ज्ञान होता है) न कि गन्ध आदि का अर्थात् सन्निकृष्ट ही देश में न कि दूर देश में ज्ञान होता है उसी प्रकार कहीं त्रिकोण आदि निश्चित चक्र में प्रवेश होने से आनन्द आदि कोई एक ही अनुभवविशेष सम्भव होता है न कि सब । इस प्रकार ठीक ही कहा—हठात् उन-उन चक्रेश्वरत्व को प्राप्त होता है ॥ १०९-११० ॥

प्रश्न—किसका कौन सा चक्र है?—यह शङ्का कर कहते हैं—

आनन्द चक्र वह्नि = तीन, अश्र = कोण अर्थात् त्रिकोणात्मक है । कन्द को उद्भव कहते हैं । कम्प हृदय और तालु है तथा निद्रा और घूर्णि ऊर्ध्वकुण्डली मे होता है ॥ १११ ॥

वह्न्यश्रि = त्रिकोण अर्थात् योगिनी का मुख । ऊर्ध्वकुण्डली = द्वादशान्त । इनका अभेद होने से समान विभक्ति (प्रथमा) का प्रयोग कर बतलाया गया है ॥ १११ ॥

प्रश्न—इनकी इस प्रकार की व्यवस्था में क्या प्रमाण है ?—यह शङ्का कर कहते हैं—

**एतच्च स्फुटमेवोक्तं श्रीमन्त्रैशिरसे मते ।**

तत्र चैतत् षष्ठसप्तमयोरेवानन्तप्रमेयपुरःसरीकारेण बहुना ग्रन्थेन कटाक्षितम्, इति ग्रन्थविस्तरभयात् न संवादितम्—इति तत एवावधार्यम् ॥

तदेवमियतोपायजातेन समासादनीयस्य परस्य तत्त्वस्य नैमित्तिकं व्यपदेशान्तरमप्यस्ति—इत्याह—

**एवं प्रदर्शितोच्चारविश्रान्तिहृदयं परम् ॥ ११२ ॥**
**यत्तदव्यक्तलिङ्गं नृशिवशक्त्यविभागवत् ।**

'एवम्' उक्तेन प्रकारेण प्रदर्शिता येयमुच्चारादीनां विश्रान्तिः, तस्या यत् 'परं हृदयं' योगिनीहृदयादिशब्दव्यपदेश्यमहंपरामर्शमयं संवित्स्पन्दात्मकं प्रकृष्टं सतत्त्वं तन्नरशक्तिशिवाविभागवत्त्वादव्यक्तलिङ्गमुच्यते—इत्यर्थः ॥ ११२ ॥

नन्वेवं व्यपदेशस्य किं निमित्तम् ?—इत्याशङ्क्याह—

**अत्र विश्वमिदं लीनमत्रान्तःस्थं च गम्यते॥ ११३ ॥**
**इदं तल्लक्षणं पूर्णशक्तिभैरवसंविदः ।**

---

और यह (बात) त्रिशिरोभैरव मत में स्पष्ट कही गई हैं ॥ ११२- ॥

वहाँ छठें और सातवें को ही अनन्त प्रमेय मानकर प्रचुर ग्रन्थ के द्वारा कटाक्ष किया गया है । ग्रन्थ के विस्तार के भय से (यहाँ उसे) नहीं कहा गया इसलिए वहीं से समझना चाहिए ॥ १११ ॥

तो इस प्रकार इतने उपायों के द्वारा प्राप्य परतत्त्व का दूसरा नाम नैमित्तिक भी है—यह कहते हैं—

इस प्रकार (ऊपर) बतलाए गए उच्चार की विश्रान्ति का जो परम हृदय नर शिव और शक्ति के तादात्म्य वाला है वह अव्यक्त लिङ्ग है ॥ -११२-११३- ॥

एवम् = उक्त प्रकार से, प्रदर्शित जो यह उच्चार आदि की विश्रान्ति, उसका जो परम हृदय = योगिनीहृदय आदि शब्दों के द्वारा व्यवहार्य अहंपरामर्शमय संवित् का स्पन्दरूप प्रकृष्ट तत्त्व, वह नर शक्ति और शिव से अविभक्त होने के कारण अव्यक्त लिङ्ग कहा जाता है ॥ ११२ ॥

प्रश्न—इस प्रकार के व्यवहार का क्या कारण है ?—यह शङ्का कर कहते हैं—

चूँकि उसमें यह विश्व लीन रहता है और इसके अन्दर स्थित हुआ जाना जाता है । (अतः) यही पूर्णशक्तिभैरवसंविद् का वह लक्षण है ॥ -११३-११४- ॥

चशब्दो भिन्नक्रमो हेतौ । यतो 'त्र' अहंपरामर्शमये परस्मिन् हृदये नरशक्तिशिवात्मकम् 'इदं विश्वं लीनम्' अविभागेनावस्थितम्—इति यावत् । न चैतज्जतुकाष्ठवत् अपि तु क्षीरनीरवदित्युक्तम् 'अत्रान्तःस्थं च गम्यते' इति, ऐकात्म्यमापन्नं सत् प्रतीयते इत्यर्थः । इदमेव हि तन्निरूपितस्वरूपायाः परस्याः संविदो लक्षणं यत् तत एव विश्वमुदेति तत्रैव च विलीयते इति । यदुक्तम्—

'लिङ्गशब्देन विद्वांसः सृष्टिसंहारकारणम् ।
लयादागमनाच्चाहुर्भावनां पदमव्ययम् ॥' इति ॥ ११३ ॥

नन्विह त्रिविधं लिङ्गमुक्तं व्यक्तं व्यक्ताव्यक्तमव्यक्तं च—इति, तत्राव्यक्तं परैव संवित्—इत्युक्तम् । अन्यद् द्वयं पुनः किं तस्या एव स्फारो न वा ? इत्याशङ्क्याह—

**देहगाध्वसमुन्मेषे समावेशस्तु यः स्फुटः ॥ ११४ ॥**
**अहन्ताच्छादितोन्मेषिभावेदंभावयुक् स च ।**
**व्यक्ताव्यक्तमिदं लिङ्गं मन्त्रवीर्यं परापरम् ॥ ११५ ॥**
**नरशक्तिसमुन्मेषि शिवरूपाद्विभेदितम् ।**

'देहगाध्वसमुन्मेषे' देहादावात्माभिमाने सत्यपि यः पुनरपरिम्लानः

---

च शब्द का क्रम दूसरा है और वह हेतु (अर्थ) मे (प्रयुक्त) है । चूंकि इस = अहंपरामर्श वाले परम हृदय में नर शक्ति शिवात्मक यह विश्व लीन = अपृथक् रूप में स्थित है । यह (= लीनता) लाख और काष्ठ की भाँति (एकदेशेन संयुक्त) नहीं अपितु दूध और पानी की तरह (सर्वावयवेन) है । इसलिए कहा गया कि इसमें स्थित समझा जाता है अर्थात् तादात्म्य को प्राप्त प्रतीत होता है । उसके द्वारा निरूपितस्वरूप वाली परा संविद् का यही लक्षण है कि उसी से (इस) विश्व का विकास होता है और उसी में (यह) विलीन होता है । जैसा कि कहा है—

"विद्वान् लोग पदार्थों के लय और आगमन के कारण सृष्टि और संहार के कारणभूत अव्यय पद को लिङ्ग शब्द से व्यवहृत करते हैं" ॥ ११३ ॥

प्रश्न—लिङ्ग तीन प्रकार का कहा गया है—व्यक्त, व्यक्ताव्यक्त और अव्यक्त । उनमें अव्यक्त परासंविद् ही है—ऐसा कहा गया है । शेष दो क्या उसी के स्फार है या नहीं ?—यह शङ्का कर कहते हैं—

देह में वर्त्तमान अध्वा का उन्मेष होने पर अहन्ता से आच्छादित (बाह्य) उल्लास वाले भावों का इदंभाव से युक्त जो स्पष्ट समावेश है वह व्यक्ताव्यक्त लिङ्ग होता है । यह परापर (होने के कारण) मन्त्रवीर्यात्मक है । नर और शक्ति के द्वारा उन्मेषणशील है । अतः शिवरूप से भिन्न है ॥ -११४-११६- ॥

देहस्थ अध्वा का उन्मेष होने पर = देह आदि में आत्माभिमान होने पर, भी

परतत्त्वान्तःसमावेशः तदिदं व्यक्ताव्यक्तं लिङ्गम्—इति संबन्धः । ननु यद्येवं तदव्यक्तादस्य को विशेष ? इत्याशङ्क्याह—अहन्तेत्यादि । अहन्ताच्छादित 'उन्मेषिषु' बहिरुल्लसत्सु भावेषु योऽसौ 'इदंभाव' इदन्ता तेन युज्यते, इदमहमितिप्रतीतिरूप इत्यर्थः । अत एवास्य विद्यादशावदहन्तेदन्तयोः सामानाधिकरण्यात् व्यक्ताव्यक्तत्वम्, अत एव शुद्धाहंपरामर्शरूपत्वाभावात् शिवरूपाद्विभेदितं सत् नरशक्तिभ्यां समुन्मेषणशीलं, नरशक्तिरूपमिति यावत् । एवमपि परापरं शक्तिप्रधानमित्यर्थः । नरप्रधानं हि व्यक्तं लिङ्गं भविष्यतीत्याशयः । अत एव मन्त्रवीर्यम् । एतद्दशामधिशयानो हि मन्त्रः स्वोचितफलदानसामर्थ्यभाग्भवतीति भावः । यदुक्तम्—

न पुंसि न परे तत्त्वे शक्तौ मन्त्रं नियोजयेत् ।
पुंस्तत्त्वे जडतामेति परे तत्त्वे तु निष्फलः ॥
शक्तौ मन्त्रो नियुक्तस्तु सर्वकर्मफलप्रदः । इति ॥ ११५ ॥

न केवलं व्यक्ताव्यक्तमेव लिङ्गमस्याः स्फारो यावत् व्यक्तमपि—इत्याह—

**यन्न्यक्कृतशिवाहन्तासमावेशं विभेदवत् ॥ ११६ ॥**

---

जो स्वच्छ परतत्त्वान्तःप्रवेश है वही यह व्यक्ताव्यक्त लिङ्ग है—ऐसा सम्बन्ध (समझना चाहिए) ।

प्रश्न—यदि ऐसा है तो अव्यक्त से इसका क्या अन्तर है?—यह शङ्का कर कहते हैं—अहन्ता इत्यादि । अहन्ता से आच्छादित उन्मेष वाले = बाहर उल्लसित होने वाले पदार्थों के विषय में जो इदंभाव = इदन्ता, उससे युक्त होने वाला अर्थात् 'इदम् अहम्' ऐसी प्रतीति वाला । इसीलिए शुद्धविद्यादशा के समान अहन्ता और इदन्ता का सामानाधिकरण्य होने से यह व्यक्ताव्यक्त है । इसीलिये शुद्ध अहंपरामर्शरूप न होने से शिवरूपता से भिन्न होते हुए जड और शक्ति के कारण उन्मेषशील है अर्थात् जडशक्तिरूप है । ऐसा होने पर भी परापर अर्थात् शक्ति की प्रधानता वाला है । तात्पर्य यह है कि जडप्रधान व्यक्त लिङ्ग हो जायगा । इसीलिए (वह) मन्त्रवीर्यात्मक है । स्पष्टार्थ यह है कि इस दशा में अधिष्ठित मन्त्र अपने उचित फल को देने के सामर्थ्य वाला हो जाता है । जैसा कि कहा गया है—

'मन्त्र को न पुरुष (= जडजगत्) और न परतत्त्व में अपि तु शक्ति में नियोजित करना चाहिए । क्योंकि पुरुष तत्त्व में (लगाने पर मन्त्र) जडता को प्राप्त हो जाता है और परतत्त्व में (लगाने पर) निष्फल हो जाता है । शक्ति में लगाया गया मन्त्र सब कर्मों के फल को देने वाला होता है' ॥ ११५ ॥

केवल व्यक्ताव्यक्त ही लिङ्ग इस (परासंविद्) का स्फार नहीं है बल्कि व्यक्त भी है—यह कहते हैं—

जो, शिवअहन्तासमावेश को गौण कर देने वाला भेद वाला

**विशेषस्पन्दरूपं तद् व्यक्तं लिङ्गं चिदात्मकम्**

यन्नाम गुणीकृतपराद्वयरूपाहन्तापरामर्शम्, अत एव 'विभेदवत्' बहीरूपतया स्फुरत् विशेषस्पन्दरूपम्—इति विमर्शनं तद् व्यक्तं लिङ्गमुच्यत इत्यर्थः । एवमपि चिदात्मकम्, अन्यथा हि एतत्र किञ्चिद्भवेदिति भावः ॥ ११६ ॥

न केवलमेषां स्वरूपत एव भेदो यावत् फलतोऽपि—इत्याह—

**व्यक्तात्सिद्धिप्रसवो व्यक्ताव्यक्ताद् द्वयं विमोक्षश्च ।**
**अव्यक्ताद् बलमाद्यं परस्य नानुत्तरे त्वियं चर्चा ॥ ११७ ॥**

यदुक्तम्—

'प्रतिमापूजनाद्भुक्तिर्मुक्तिर्लिङ्गार्चनात् सदा ।
मुखलिङ्गार्चनात्पुंसां भुक्तिमुक्ती प्रसिद्ध्यतः ॥' इति ।

'बलमाद्यं परस्य' इति अव्यक्तं व्यक्ताव्यक्तस्य तद् व्यक्तस्य । ननु यद्येवं तदेतद्भित्तिभूते सर्वसर्वात्मकेऽनुत्तरे धाम्नि पुनः का वार्ता ?—इत्याशङ्क्याह—'नानुत्तरे त्वियं चर्चा' इति । तत्र हि पारिपूर्ण्येन नैराकाङ्क्ष्योत्पादात् को नाम

---

तथा विशेष स्पन्द रूप है वह व्यक्त लिङ्ग है तथा चिदात्मक है ॥ -११६-११७- ॥

जो पराद्वयरूप अहन्तापरामर्श को गौण बना देने वाला इसलिए भेदवाला = बाह्यरूप में स्फुरित होता हुआ विशेष स्पन्दरूप विमर्श है वह अव्यक्त लिङ्ग कहा जाता है । ऐसा होने पर भी (वह) चिदात्मक है अन्यथा यह कुछ भी नहीं होगा ॥ ११६ ॥

इनका केवल स्वरूपगत ही भेद नहीं है अपितु फलगत भी है—वही कहते हैं—

व्यक्त से सिद्धि और (उसका) प्रसव होता है । व्यक्ताव्यक्त से दोनों (= सिद्धि और प्रसव) तथा मोक्ष (का लाभ) होता है । अव्यक्त से दूसरे को प्रथम बल (मिलता है) और अनुत्तर के विषय में यह चर्चा ही नहीं (होती) ॥ ११७ ॥

जैसा कि कहा गया है—

पुरुषों को प्रतिमा की पूजा से सदा भोग, (अव्यक्त) लिङ्ग की पूजा से मोक्ष तथा मुख (= व्यक्ताव्यक्त) लिङ्ग की पूजा से भोग और मोक्ष दोनो मिलता है ।

दूसरे का प्रथम बल है (का स्पष्टार्थ है कि) अव्यक्तव्यक्ता व्यक्त का और वह (= व्यक्ताव्यक्त) अव्यक्त का (बल है) प्रश्न—यदि ऐसा है तो इनके आधारभूत सर्वसर्वात्मक अनुत्तर धाम के विषय में क्या बात है ?—यह शङ्का कर कहते हैं—

सिद्ध्यादिप्रविभागः—इति भावः ॥ ११७ ॥

नन्वाद्यमेव परस्य विश्रान्तिस्थानं न तु विपर्ययः—इत्यत्र किं निबन्धनम् ?—इत्याशङ्क्याह—

**आत्माख्यं यद् व्यक्तं नरलिङ्गं तत्र विश्वमर्पयतः ।**
**व्यक्ताव्यक्तं तस्माद् गलिते तस्मिंस्तदव्यक्तम् ॥ ११८ ॥**

यन्नाम समनन्तरोक्तस्वरूपं नरप्रधानत्वात् आत्माख्यमिदंविमर्शास्पदं व्यक्तं लिङ्गं तत्र आत्माख्ये लिङ्गे 'यदिदं तदहमेव' इत्येवंरूपतया विश्वं विलापयतो योगिनोऽहन्तेदन्तयोः सामानाधिकरण्येन स्फुरणात् व्यक्ताव्यक्तं लिङ्गं, तस्माव्यक्ता-व्यक्तादपि लिङ्गात् तस्मिन् विश्वस्मिन् 'गलिते' अहंपरामर्शशेषतामापन्ने तदव्यक्तं लिङ्ग भवेदित्यर्थः ॥ ११८ ॥

नन्वनेन किमुक्तम् ?—इत्याशङ्क्याह—

**तेनात्मलिङ्गमेतत् परमे शिवशक्त्यणुस्वभावमये ।**
**अव्यक्ते विश्राम्यति नानुत्तरधामगा त्वियं चर्चा ॥ ११९ ॥**

---

अनुत्तर के बारे में यह चर्चा नहीं है । क्योकिं वहाँ पूर्णता होने से निराकाङ्.क्षा की उत्पत्ति होने के कारण सिद्धि आदि का विभाग कैसा ?—यह तात्पर्य है ॥११७ ॥

प्रश्न—पहला ही पर (= बाद वाले) का विश्रान्ति स्थान है अन्य नहीं इसमें क्या कारण है?—यह शङ्का कर कहते हैं—

आत्मा नामक जो अव्यक्त (तत्त्व) हैं उसमें नर लिङ्ग वाले विश्व को विलीन करने वाले (योगी) के (अन्दर) व्यक्त और अव्यक्त (समान रूप से स्फुरित होते हैं) फिर उस (व्यक्ताव्यक्त) के कारण वह (विश्व) जिसमें विलीन हो जाता है वह अव्यक्त है ॥ ११८ ॥

जो अभी पहले कहे गए स्वरूप वाला, जड़प्रधान होने से आत्मा नामक इदंविमर्श का आधारभूत व्यक्त लिङ्ग है उस आत्मा नामक लिङ्ग में 'जो यह है वही मैं हूँ' इस प्रकार विश्व का विलयन करने वाले योगी के मन में अहन्ता और इदन्ता का समान रूप से स्फुरण होने के कारण वह व्यक्ताव्यक्त लिङ्ग है । पुनः उस व्यक्ताव्यक्त लिङ्ग से उस विश्व का विगलन होने पर जब अहंपरामर्श शेष रह जाता है तो यह अव्यक्त लिङ्ग हो जाता है ॥ ११८ ॥

प्रश्न—इससे क्या कहा गया ?—यह शङ्का कर कहते हैं—

इसलिए यह आत्मलिङ्ग परम शिवशक्तिअणुस्वभाव वाले अव्यक्त में विश्राम करता है । किन्तु यह चर्चा अनुत्तरधाम से सम्बद्ध ही नहीं है ॥ ११९ ॥

इत्थम् 'एतत्' नरप्रधानं व्यक्तमात्मलिङ्गम् अर्थात् नरशक्तिप्रधाने व्यक्ताव्यक्ते लिङ्गे विश्रान्तिमासाद्य, शिवप्राधान्येऽपि गर्भीकृतावान्तररूपत्वात् नरशक्तिशिवात्मनि, अत एव 'परमे' लिङ्गान्तरवैलक्षण्यादुत्कर्षभाजि अव्यक्ते लिङ्गे 'विश्राम्यति' तत्तादात्म्येन प्रस्फुरतीत्यर्थः। ननु यथा व्यक्तादिलिङ्गद्वयमव्यक्ते विश्राम्यति तथैव तदप्यनुत्तरे धाम्नि—इति कस्मान्नोक्तम् ?—इत्याशङ्क्याह—'नानुत्तरधामगा त्वियं चर्चा'—इति । तद्धि अनुत्तरमेव धामाव्यक्तादिलिङ्गत्रयात्मना प्रस्फुरति—इति सदैव तत्र तद्विश्रान्तमन्यथा ह्यस्य भवनमेव न स्यात् ॥ ११९ ॥

अत एवाह—

**एकस्य स्पन्दनस्यैषा त्रैधं भेदव्यवस्थितिः ।**

इह खलु 'एकस्य' प्रधानस्यानुत्तरात्मनो योगिनीहृदयादिशब्दव्यपदेश्यस्य 'स्पन्दनस्यैषा' व्यक्तादिलिङ्गात्मिका त्रिविधेन भेदेन 'व्यवस्थितिः' परिस्फुरणं न तु तदतिरिक्तमेतत् किञ्चिदित्यर्थः ॥

अतश्च व्यक्तादिलिङ्गपरिहारेणात्रैव विश्रान्तिः कार्या—इत्याह—

**अत्र लिङ्गे सदा तिष्ठेत् पूजाविश्रान्तितत्परः ॥ १२० ॥**

---

इस प्रकार यह = जडप्रधान (अत एव) व्यक्त आत्मलिङ्ग अर्थात् नर शक्ति की प्रधानता होने पर भी भीतर अन्यरूपों को भी धारण करने के कारण नर शक्ति शिव स्वरूप है इसीलिए परम मे = दूसरे लिङ्ग से विलक्षण होने के कारण उत्कर्ष वाले अव्यक्त लिङ्ग में, विश्राम करता है = उसके साथ एकाकार होकर स्फुरित होता है । प्रश्न—जिस प्रकार व्यक्त आदि दो लिङ्ग अव्यक्त में विश्राम करते हैं उसी प्रकार वह (= अव्यक्त) भी अनुत्तर धाम में (विश्राम करता है) ऐसा क्यों नहीं कहा गया ?—यह शङ्का कर कहते हैं—यह चर्चा अनुत्तर धाम के विषय में नहीं हैं । क्योंकि वह अनुत्तर ही धाम अव्यक्त आदि तीन लिङ्गों के रूप में स्फुरित होता है—अतः वह (= लिङ्गत्रय) उसमें सदा विश्रान्ति वाला है । अन्यथा इसकी सत्ता ही न होती ॥ ११९ ॥

इसीलिए कहते हैं—

एक ही स्पन्दन की यह तीन प्रकार की व्यवस्था है ॥ १२०- ॥

एक ही प्रधान अनुत्तर आत्मा, जो कि योगिनीहृदय आदि शब्दों से व्यवहार्य है, स्पन्दन की यह व्यक्त आदि लिङ्ग रूप तीन प्रकार के भेद से व्यवस्थिति = परिस्फुरण है न कि उससे अतिरिक्त यह कुछ है ॥ १२० ॥

इसलिए व्यक्त आदि लिङ्ग को छोड़कर यहीं विश्राम करना चाहिए—कहा गया है—

**इस लिङ्ग में पूजा और विश्रान्ति से युक्त हो कर सदा रहना**

यदुक्तम्—

'मृच्छैलधातुरत्नादिभवं लिङ्गं न पूजयेत् ।
यजेदाध्यात्मिकं लिङ्गं यत्र लीनं चराचरम् ॥
बहिर्लिङ्गस्य लिङ्गत्वमनेनाधिष्ठितं यतः ।' (मा०वि.१८।४२)

इति ॥ १२० ॥

नन्वत्र विश्रान्त्या किं स्यात् ?—इत्याशङ्क्याह—

**योगिनीहृदयं लिङ्गमिदमानन्दसुन्दरम् ।**
**बीजयोनिसमापत्त्या सूते कामपि संविदम् ॥ १२१ ॥**

इदं स्पन्दनात्म योगिनीहृदयाभिधेयमानन्दमयं लिङ्गं बीजयोन्यात्मक-शिवशक्त्यैकात्म्येन 'कामपि संविदं सूते' परसंविदावेशमाविष्कुर्यादित्यर्थः। अथ च चर्याक्रमेणाप्येवं परसंविदनुप्रवेशो भवेदित्यपि कटाक्षितम् ।

यदुक्तम्—

'त्रिकोणमण्डलं पूज्यं शक्तित्रयसमन्वितम् ।
तन्मध्ये चेतनं चिन्त्यं लिङ्गं वै पश्चिमामुखम् ॥' इति यथा
'आनन्दस्यन्दि यद् गीतं सर्वप्रसवकारणम् ।
उपस्थाख्येयमेतत्तु सौषुम्नं रूपमुच्यते ॥' इति ॥१२१ ॥

---

चाहिये ॥ -१२० ॥

जैसा कि कहते हैं—

मिट्टी, पत्थर, धातु, रत्न आदि से बने हुए लिङ्ग की पूजा नहीं करनी चाहिए। बल्कि उस आध्यात्मिक लिङ्ग की अर्चा करनी चाहिए जिसमें समस्त चर एवं अचर लीन हैं । क्योंकि बाहरी लिङ्ग की लिङ्गता इसी से अधिष्ठित हैं । (मा० वि० १८।४२) ॥ १२० ॥

प्रश्न—यहाँ विश्रान्ति करने से क्या होगा ?—यह शङ्का कर कहते हैं—

यह योगिनीहृदय लिङ्ग आनन्द से सुन्दर हैं । यह बीज और योनि के तादात्म्य के द्वारा अनिर्वचनीय संवित् को उत्पन्न करता है ॥ १२१ ॥

यह स्पन्दन रूप योगिनीहृदय नामक आनन्दमय लिङ्ग बीजयोनिस्वरूप शिवशक्ति की एकात्मता के द्वारा किसी भी (= अद्भुत) संवित् को उत्पन्न करता है अर्थात् पर संवित् के आवेश का आविष्कार करता है । चर्याक्रम के द्वारा भी इस प्रकार का परसंवित् में प्रवेश होता है—यह व्यंग्य हैं । जैसा कि कहा गया है—

"तीन शक्ति से युक्त त्रिकोणमण्डल पूजनीय है । उसके मध्य में पश्चिमाभिमुख चेतन लिङ्ग चिन्तनीय (= चिन्तन के द्वारा शुभ प्रदान करता) हैं" । तथा—

नन्वत्रैव विश्रान्त्या कथमेवं स्यात्? इत्याशङ्क्याह—

**अत्र प्रयासविरहात् सर्वोऽसौ देवतागणः ।**
**आनन्दपूर्णे धाम्न्यास्ते नित्योदितचिदात्मकः ॥ १२२ ॥**

यदुक्तम्—

'त्रिकोणे देवताः सर्वा ब्रह्मविष्णुमहेश्वराः ।' इति ॥ १२२ ॥

न केवलमत्र सर्व एव देवतागण आस्ते यावत् पारमेश्वरी शक्तिरपि—इत्याह—

**अत्र भैरवनाथस्य ससङ्कोचविकासिका ।**
**भासते दुर्घटा शक्तिरसङ्कोचविकासिनः ॥ १२३ ॥**

अत्रानन्दपूर्णे धाम्नि 'असङ्कोचविकासिनो' निस्तरङ्गजलधिप्रख्यस्य पूर्णस्य प्रकाशस्य 'ससङ्कोचविकासिका' सदैव सृष्टिसंहारमयी, अत एव दुर्घटकारिणी स्वातन्त्र्याख्या शक्तिः 'भासते स्वात्मैकात्म्येन प्रथते यन्माहात्म्यादियान् विश्वस्फारः सदैव सृष्टिसंहारदशाधिशायितामेतीत्यर्थः ॥ १२३ ॥

तदाह—

---

"जिसे आनन्द का जनक कहा गया है और जो सबकी उत्पत्ति का कारण है यह उपस्थ नामक (इन्द्रिय) सुषुम्ना का रूप कहा जाता है" ॥ १२१ ॥

प्रश्न—इसी में विश्रान्ति के द्वारा ऐसा कैसे होता है?—यह शङ्का कर कहते हैं—

**प्रयास न होने से सभी देवगण इस आनन्दपूर्ण धाम में नित्य उदित चैतन्य युक्त होकर रहते हैं ॥ १२२ ॥**

जैसा कि कहा है—

"त्रिकोण में ब्रह्मा विष्णु और रुद्र सभी देवता रहते हैं" ॥ १२२ ॥

यहाँ केवल सब देवता ही नहीं अपितु परमेश्वर की शक्ति भी रहती हैं—यह कहते हैं—

**यहाँ पर सङ्कोचविकासरहित भैरवनाथ की सङ्कोचविकास वाली दुर्घट शक्ति (भी) रहती हैं ॥ १२३ ॥**

इस आनन्दपूर्ण धाम में सङ्कोचविकासरहित निस्तरङ्ग जलधि के समान शोभावाले प्रकाश की सङ्कोचविकासयुक्त = सदा सृष्टिसंहार वाली, इसलिए दुर्घटकारिणी स्वातन्त्र्य नामक शक्ति भासित होती हैं = अपनी आत्मा के साथ एक होकर विकसित होती हैं जिसकी महिमा से इतना बड़ा विश्व का विस्तार सदा सृष्टि और संहार की दशा में वर्त्तमान रहता है ॥ १२३ ॥

**एतल्लिङ्गसमापत्तिविसर्गानन्दधारया ।**
**सिक्तं तदेव सद्विश्वं शश्वन्नवनवायते॥ १२४ ॥**

एतस्मिन्ननुत्तरधामात्मनि समनन्तरोक्ते 'लिङ्गे समापत्तिः' ऐकात्म्यं यस्यैवंविधो यो 'विसर्गः' स्वातन्त्र्याख्या कौलिकी शक्तिस्तस्य या 'आनन्दधारा'—

'विसर्गगता च सैवास्या यदानन्दोदयक्रमात् ।
स्पष्टीभूतक्रियाशक्तिपर्यन्ता प्रोच्छलत्स्थितिः ॥' (तं० ३।१४४)

इत्याद्युक्त्यानन्दोदयक्रमेणोच्छलत्ता तया 'सिक्तं' बहिरुच्छूनतामापादितं सत् तत्कालमेव शश्वद्विश्वं 'नवनवायते' सदैव सृष्टिसंहारपात्रतामासादयतीत्यर्थः । अथ च चर्याक्रमेण एतयोर्वज्रपद्मादिशब्दव्यपदेश्यरूपयोर्लिङ्गयोः 'समापत्त्या' संभोगेन विसर्गरूपा येयमानन्दधारा तया 'सिक्तं' दत्तबीजं सत् स्त्रीपुमाद्यात्म विश्वमनवरत-मुत्पद्यत इत्यर्थः ॥ १२४ ॥

ननु भेदप्राणविकल्पसंस्काराधायित्वाद् बुद्धिध्यानादीनां स्पष्टमेवाणवो- पायत्वम् —इति युक्तमत्र तदभिधानं, परतत्त्वान्तःप्रवेशलक्षणः पुनरयमुपायो निर्विकल्प-स्वरूपत्वान्न तथा—इति कथमस्यात्राभिधानम्? इत्याशङ्क्याह—

---

वही कहते हैं—

इस लिङ्ग के साथ एकात्मता वाले विसर्ग के आनन्द की धारा से सिक्त वही वर्त्तमान विश्व निरन्तर नवीन होता जाता है ॥ १२४ ॥

इस अनुत्तर धाम वाले पहले कहे गए लिङ्ग में समापत्ति = एकात्मता है जिसकी उस प्रकार का जो विसर्ग = स्वातन्त्र्य नामक कौलिकी शक्ति, उसकी जो आनन्द धारा

इसकी विसर्गता यही है कि यह आनन्द के उदय के क्रम से स्पष्ट हुई क्रियाशक्तिपर्यन्त उच्छलत्ता की स्थिति वाली है ॥ (तं. आ. ३।१४४)

इत्यादि उक्ति के द्वारा आनन्द के उदयक्रम से उच्छलत्ता, उसके द्वारा सिक्त = बाह्य उच्छूनता को प्राप्त होकर विश्व तत्काल ही नवीन होता जाता है = सदा सृष्टि संहार का पात्र होता है । उधर चर्याक्रम से इन दोनो वज्र एवं पद्म आदि शब्द से व्यवहार्य लिङ्ग और योनि की समापत्ति = संभोग से विसर्गरूप जो यह आनन्दधारा उसके द्वारा सिक्त = बीज का आधान, होने पर स्त्रीपुंरुषरूप विश्व निरन्तर उत्पन्न होता रहता है ॥ १२४ ॥

प्रश्न—भेदप्राण विकल्प और संस्कार का आधायक होने से बुद्धि ध्यान आदि स्पष्टतया आणवोपाय हैं इसलिए यहाँ उस (= उपाय) का कथन तो ठीक है किन्तु परतत्त्व के अन्दर प्रवेश वाला यह उपाय निर्विकल्पकस्वरूप होने के कारण वैसा नहीं हैं इसलिए उस (= उपाय) का यहाँ कथन कैसे हैं?—यह शङ्का कर कहते हैं—

**अनुत्तरेऽभ्युपायोऽत्र ताद्रूप्यादेव वर्णितः।**
**ज्वलितेष्वपि दीपेषु घर्मांशुः किं न भासते॥ १२५ ॥**

'अत्र' आणवोपायप्रकाशनपरेऽप्याह्निके साक्षादनुत्तरनिमित्तं परतत्त्वान्तः-प्रवेशात्मायम् 'अभ्युपायस्ताद्रूप्यात्' अनुत्तराभ्युपायरूपत्वादेवोक्तः । अत्र दृष्टान्तः, यथा तत्तदर्थप्रकाशनाय परिमितप्रकाशेषु दीपादिषु सत्स्वपि महाप्रकाशस्य घर्मांशोरवस्थाने न कश्चिद्दोषः, एवमत्रापीति तात्पर्यार्थः ॥ १२५ ॥

नन्वेवं त्रयाणामप्याणवादीनामुपायानां साङ्कर्येणैवोपदेशः कार्यः—इति किं पृथक् पृथगाह्निकपरिकल्पनेन ?—इत्याशङ्क्याह—

**अर्थेषु तद्भोगविधौ तदुत्थे**
**दुःखे सुखे वा गलिताभिशङ्कम् ।**
**अनाविशन्तोऽपि निमग्नचित्ता**
**जानन्ति वृत्तिक्षयसौख्यमन्तः ॥ १२६ ॥**

'अर्थेषु' नीलादिषु 'तद्भोगविधौ' नीलादिबुद्धौ 'तदुत्थे' नीलादिकृते दुःखे सुखे वेत्येवमर्थक्रियापर्यन्तं प्राप्तप्रतिष्ठाने बाह्येऽर्थजाते 'निमग्नचित्ताः' तत्तद्धाना-दानादि कुर्वाणा अपि तत्र 'गलिताभिशङ्कमनाविशन्तः' स्वप्नार्थवदसदेवेदमिति

---

यहाँ अनुत्तर के विषय में तद्रूपता होने के कारण ही उपाय का वर्णन किया गया है । दीपों के जलने पर भी क्या सूर्य प्रकाशित नहीं होता ॥ १२५ ॥

आणवोपायप्रकाशनपरक इस आह्निक में साक्षात् अनुत्तरनिमित्तक परतत्त्वान्तः—प्रवेशरूप यह उपाय चिद्रूपता = अनुत्तर अवस्था, को प्राप्त करने का उपाय होने के कारण ही कहा गया । इस विषय में दृष्टान्त हैं—जिस प्रकार भिन्न-भिन्न पदार्थों को प्रकाशित करने के लिए परिमित प्रकाश वाले दीप के रहने पर भी महाप्रकाश सूर्य के रहने में कोई दोष नहीं हैं उसी प्रकार यहाँ भी हैं ॥ १२५॥

प्रश्न—इस प्रकार आणव आदि तीनों उपायों का सम्मिलित ही उपदेश करना चाहिए पृथक्-पृथक् आह्निक की कल्पना से क्या (लाभ)?—यह शङ्का कर कहते हैं—

पदार्थ, उनकी भोगविधि अथवा उनसे उत्पन्न सुख और दुःख में निमग्नचित्त वाले (योगी) शङ्कारहित होकर उसमें आविष्ट न होते हुए भी भीतर-भीतर वृत्तिक्षय के सुख का अनुभव करते हैं ॥ १२६ ॥

अर्थ के विषय में = घट आदि के विषय में, उनकी भोगविधि में = घट आदि के ज्ञान में, उससे उत्पन्न = घट आदि के द्वारा किए गए दुःख अथवा सुख के विषय में इस प्रकार अर्थक्रियापर्यन्त प्रतिष्ठा को प्राप्त बाह्य पदार्थसमूह में

निःसंदेहं तद्वैवश्यमभजमाना योगिनो वृत्तिक्षयसौख्यमन्तर्जानन्ति—

'अन्तर्लक्ष्यो बहिर्दृष्टिः परमं पदमश्नुते ।'

इत्याद्युक्तयुक्त्या बहिस्तत्तदव्द्यवहारपरत्वेऽपि स्वात्ममात्रविश्रान्त्या परं चमत्कारातिशयमनुभवन्तीत्यर्थः । अतश्च भेदमयत्वेऽप्यभेदरूपत्वमस्य इत्यामुखे भेदस्यावस्थानादिहैतदभिधानम्—इति न कश्चिद्दोषः । एतदेव हि योगिनः परं विस्फूर्जितं यद् भेदमयत्वेऽप्यभेदरूपतयावस्थानमिति ॥ १२६ ॥

तदाह—

**सत्येवात्मनि चित्स्वभावमहसि स्वान्ते तथोपक्रियां**
**तस्मै कुर्वति तत्प्रचारविवशे सत्यक्षवर्गेऽपि च ।**
**सत्स्वर्थेषु सुखादिषु स्फुटतरं यद् भेदवन्ध्योदयं**
**योगी तिष्ठति पूर्णरश्मिविभवस्तत्तत्त्वमाचीयताम् ॥ १२७ ॥**

इह खलु चित्स्वभावत्वादर्कादिप्रकाशविलक्षणे परप्रमातृरूपे पूर्णे आत्मन्येव सति स्वात्मसाक्षात्कारावसरे चिदेकरूपत्वादविभागतया तथा 'तस्मै' निरूपित-

---

निमग्नचित्त वाले = उन-उन का त्याग और ग्रहण करने वाले, भी उनके विषय में निःशङ्क होकर प्रवेश न करने वाले = स्वाप्न पदार्थ के समान यह असत् है—ऐसा निःसन्देह उसकी विवशता को अस्वीकार करने वाले, योगी अन्दर-अन्दर वृत्तिक्षय के सुख को जानते हैं ।

'(जिसका) लक्ष्य अन्दर और दृष्टि बाहर की ओर हैं (वह शाम्भवी मुद्रा वाला योगी) परम पद का अनुभव करता है ।'

इत्यादि उक्त युक्ति के द्वारा बाहर भिन्न-भिन्न व्यवहार में लगे होने पर भी अपनी आत्मा में विश्रान्ति के द्वारा परम चमत्कारातिशय का अनुभव करते हैं । इसलिए यह भेदमय होते हुए भी अभेदमय है इस कारण प्रारम्भ में भेद की स्थिति होने से यहाँ इसका कथन किया गया । इसलिए कोई दोष नहीं हैं । योगी का यही सबसे बड़ा वर्चस्व है कि (वह) भेदमय होते हुए भी अभेद रूप में स्थित रहता है ॥ १२६ ॥

वही कहते हैं—

चित्स्वभावरूप तेज वाले आत्मतत्त्व के रहने पर, अपने अन्तःकरण में उसके (= चित्स्वभाव के आत्मतत्त्व के) लिये उपकार करने पर, और उसके प्रचार में विवश इन्द्रियवर्ग के रहने पर तथा सुख आदि पदार्थों के रहने पर भी जो स्पष्टतर भेदरहित है और जिसमें योगी पूर्णरश्मि विभव वाला होकर स्थित रहता है उस तत्त्व का चयन करना चाहिए ॥ १२७ ॥

चित्स्वभाव वाले तथा सूर्य आदि से विलक्षण प्रकाश वाले परप्रमातारूप पूर्ण

स्वरूपायात्मने सङ्कुचत्तावभासनेन नियतज्ञत्वकर्तृत्वलक्षणाम् 'उपक्रियां' कुर्वति 'स्वान्ते'ऽन्त:करणवर्गे सति बुद्धिप्रमातृदशायामासूत्रितविभागतया तथा 'तस्य' स्वान्तस्य योऽसौ 'प्रचार' इत्थमहमिदं वेद्मीत्याद्यात्म प्रकृष्टं चरणं 'तद्विवशे' तदायत्ते इत्यर्थ: । यन्नाम न हि बुद्ध्यादावुपारूढं तत्र बाह्येन्द्रियाणि किं विदध्युरित्यभिप्राय: । एवंरूपे चक्षुरादीन्द्रियकलापे सति देहादिप्रमातृदशायां विभक्ततया विद्यमानेषु सुखादिषु इष्टानिष्टरूपेष्वर्थेषु—इत्येवमभेदभेदाभेदभेदात्मनि कक्ष्यात्रयेऽपि स्फुटतरं कृत्वा 'भेदवन्ध्योदयं' निर्विशेषं यद्योगी तिष्ठति तदेव नाम भैरवमुद्रानुप्रवेशात्म 'तत्त्वं' पारमार्थिकं रूपमाचीयतां, ग्राह्यग्राहकाद्यात्मकबाह्यक्षोभमयत्वेऽपि तदासङ्गमपहाय स्वात्ममात्रनिष्ठ एवावतिष्ठेदित्यर्थ: । अत एव बाह्याकाङ्क्षासंक्षयात् सदैव प्रक्षीणनिखिलेन्द्रियवृत्तितया 'पूर्णरश्मिविभव' इत्युक्तम् । यद्गीतम्—

'बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमव्ययमश्नुते ॥' (भ०गी० ५।२१)

इति ॥ १२७ ॥

एवमेतदुपसंहृत्य तदानन्तर्येणोद्दिष्टस्य करणस्य प्रविवेचनं प्रतिजानीते—

---

आत्मा में ही अपनी आत्मा के साक्षात्कार का अवसर होने पर चिदेकरूप होने से अविभक्त तथा उस = निरूपितस्वरूप वाले आत्मा के लिए संकुचितता के अवभासन के द्वारा जब अपना अन्त:करणवर्ग नियत ज्ञान एवं कर्त्तृत्व लक्षण वाली उपक्रिया को करने लगता है तब बुद्धिप्रमाता की दशा में विभाग होने के कारण तथा उस = स्वान्त का जो यह प्रचार = मैं इसको जानता हूँ—इस प्रकार का प्रकृष्ट आचरण, उसके विवश = उसके अधीन । अभिप्राय यह है कि जो बुद्धि में उपारूढ़ नहीं होगा उसके विषय में बाह्य इन्द्रियाँ क्या कर सकेंगी? चक्षु आदि इन्द्रियगण के ऐसा होने पर इष्ट अनिष्ट रूप सुख आदि जब देह आदि प्रमाता की दशा में विभक्त हो जाते हैं तब उस प्रकार अभेद, भेदाभेद और भेद रूप तीन श्रेणियों में स्पष्ट कर जो भेदबन्ध्योदय = निर्विशेष, होकर योगी स्थित रहता है वही भैरवमुद्रा में प्रवेशरूप तत्त्व हैं = पारमार्थिक रूप हैं । (उसका) चयन करना चाहिए = ग्राह्य ग्राहकदि रूप बाह्य क्षोभ से युक्त होने पर भी उसकी आसक्ति को छोड़कर केवल अपने स्वरूप में ही रहना चाहिए । इसलिए बाह्य आकांक्षा का क्षय हो जाने से सदैव समस्त इन्द्रियवृत्तियों की क्षीणता वाला होने से (योगी को) पूर्ण—रश्मिविभव कहा गया है । जैसा कि गीता में (उक्त) हैं—

बाह्य स्पर्शों में अनासक्त आत्मा वाला वह (योगी) अव्यय सुख का अनुभव करता है ॥ (गी० ५।२१) ॥ १२७ ॥

इस प्रकार इस (= आणवोपाय) का उपसंहार कर उसके बाद कथित कारण का विवेचन करने की प्रतिज्ञा करते हैं—

**इत्युच्चारविधिः प्रोक्तः करणं प्रविविच्यते ।**

उच्चार एव हि प्राणचिदात्मना प्रथमं द्विविधः । तत्र चिदात्मापि चित्प्राधान्येन विमर्शप्राधान्येन च भवन् द्विधा भवति—इति स एव त्रिविधः । तत् परतत्त्वान्तःप्रवेशात्मनोऽप्युपायस्य तद्भेदत्वादुच्चारात्मकत्वमेव—इति युक्तमुपसंहृतम्—'उच्चारविधिः प्रोक्तः' इति ॥

तच्च करणं न स्वोपज्ञमेवास्माभिः क्रियते—इत्याह—

**तच्चेत्थं त्रिशिरःशास्त्रे परमेशेन भाषितम् ॥ १२८ ॥**
**ग्राह्यग्राहकचिद्व्याप्तित्यागाक्षेपनिवेशनैः ।**
**करणं सप्तधा प्राहुरभ्यासं बोधपूर्वकम् ॥ १२९ ॥**
**तद्व्याप्तिपूर्वमाक्षेपे करणं स्वप्रतिष्ठता ।**

'चित्' संवित्तिः 'निवेशनं' संनिवेशः । इह ग्राह्यादिभिः सप्तभिः प्रकारैर्भिन्नं करणं नाम बोधपूर्वकमभ्यासं प्राहुः, बोध्यन्यग्भावेन स्वात्मैकतानतामापन्नं बोधमेव कथितवन्त इत्यर्थः । तद्धि करणं—

'सोऽहं (सर्वो) ममायं विभव इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ॥'

(ई०प्र० ४।३।१२)

---

इस प्रकार उच्चार विधि कह दी गयी । अब कारण का विवेचन किया जा रहा है ॥ १२८- ॥

उच्चार ही पहले प्राण और चित् रूप से दो प्रकार का है । उनमें चिद् उच्चार भी चित्प्राधान्य और विमर्शप्राधान्य के भेद से दो प्रकार का होता है । इस प्रकार वही (= उच्चार ही) तीन प्रकार का है । परतत्त्व के भीतर प्रवेशरूप भी उपाय उसका भेद हैं इस कारण वह उच्चारात्मक ही हैं—इसलिए ठीक ही कहा कि—उच्चारविधि कह दी गई ॥

वह करण हम अपनी बुद्धि से ही नहीं कह रहे हैं—यह कहते हैं—

**त्रिशिरोभैरव शास्त्र में वह (करण) परमेश्वर के द्वारा इस प्रकार कहा गया है । ग्राह्य, ग्राहक, चित्, व्याप्ति, त्याग, आक्षेप और निवेश (भेद) से करण को सात प्रकार का कहते हैं । (यह करण) बोधपूर्वक अभ्यास हैं। व्याप्तिपूर्वक आक्षेप होने पर अपने अन्दर प्रतिष्ठित होना ही करण है ॥ -१२८-१३०- ॥**

चित् = संवित्ति; निवेशन = संनिवेश । ग्राह्य आदि सात प्रकारों से भिन्न बोधपूर्वक अभ्यास को करण कहते हैं । (विद्वान् लोगों ने) बोध्य को छिपाने के साथ-साथ अपनी एकतानता को प्राप्त बोध को ही (करण) कहा है । वह करण—

इत्याद्युक्तनीत्या व्याप्तिपूर्वं विश्वस्याक्षेपे 'स्वप्रतिष्ठता' स्वात्मन्येव विश्रान्तिरित्यर्थः । यदुक्तं तत्र—

'ग्राह्यं च ग्रहकं चैव संवित्तिं च तृतीयिकाम् ।
संनिवेशं तथा व्याप्तिमाक्षेपं त्यागमेव च ॥
करणं सप्तधा ख्यातमभ्यासं बोधपूर्वकम् ।
तद्व्याप्तिपूर्वमाक्षेपे करणं स्वप्रतिष्ठता ॥'

इति । ग्राह्यादीनां च तत्रैव—

'ग्राह्यस्वरूपविज्ञानं द्रव्यत्वे यद्व्यवस्थितम् ।
व्यक्तिनिष्ठं तु मन्तव्यं ग्राहकं तु स्फुटार्थकम् ॥
ग्राहयेच्चित्स्वरूपं तु व्यक्ताव्यक्तविचारकम् ।
प्रत्यक्षादिप्रमाणैश्च ग्रहीता गोलकस्थितिः ॥
गोलकं द्वारमित्युक्तं मनसा बाह्यतां ततः ।
न जहाति न गृह्णाति ग्रहीता ग्राहकः स्मृतः ।
लक्ष्यलक्षसमायोगात् प्रतिज्ञावस्तुयोगतः ।
उभयोर्नान्यविश्लेषं यथैवानुभवं स्मृतम् ॥
विचार्यमाणं यत्किञ्चित्स्वरूपविभवात्मकम् ।

---

"यह सब मेरा ही वैभव हैं"—ऐसा जानने वाले विश्वात्मा (योगी) के विकल्पों का प्रसरण होने पर भी (उसकी) महेशता बनी रहती हैं । (ई. प्र. ४।३।१२)

इत्यादि के द्वारा कही गयी नीति से व्याप्तिपूर्वक विश्व का आक्षेप होने पर स्वप्रतिष्ठिता = अपने में ही विश्रान्ति रहती है—यह तात्पर्य हैं । जैसा कि वहाँ कहा है—"ग्राह्य, ग्राहक, संवित्ति, संनिवेश, व्याप्ति, आक्षेप और त्याग—(इस प्रकार) करण सात प्रकार का कहा गया है । बोधपूर्वक अभ्यास को (करण कहते हैं) । व्याप्तिपूर्वक आक्षेप होने पर अपने में प्रतिष्ठित होना ही करण है ॥"

ग्राह्य आदि के विषय में वहीं पर—

जो द्रव्य में स्थित है वह ग्राह्यरूप विज्ञान हैं । और जो (विज्ञान) व्यक्ति में स्थित है वह स्पष्ट अर्थवाला ग्राहक (विज्ञान) हैं ।

व्यक्त और अव्यक्त का विचार करने वाला चैतन्य, जो गोलक में रहता है, प्रत्यक्ष आदि प्रमाणों के द्वारा (विषय का ) ग्रहण करता है । गोलक को द्वार कहा गया है । मन के द्वारा बाहर गया हुआ (चैतन्य) न त्याग करता है न ग्रहण करता है । (जो) ग्रहण करने वाला (हैं वही) ग्राह्य कहा गया है ।

लक्ष्य और लक्षण के योग से तथा प्रतिज्ञातवस्तु के योग के कारण दोनों (= लक्ष्य लक्षण और प्रतिज्ञातवस्तु) का एक दूसरे से भेद न करना अनुभव (= संवित्ति) कहा गया है ॥

संनिवेशं तु तज्ज्ञेयं तद्व्याप्तिरभिधीयते ॥
स्वरूपस्थितिभावस्य एकदेशगतस्य च ।
घोणार्चिःप्रविकासं तु स्थानात्स्थानपदक्रमात् ॥
ज्ञायते वस्तुबोधज्ञस्त्रिप्रकारेण वस्तुनि ।
व्याप्तिस्तु कथिता सा तु सर्वज्ञा सर्वगा परा ॥
अनुभूय स्वरूपं तु निवृत्तिं नैव गच्छति ।
ज्ञानभेदपदप्राप्त्या अत्याक्षेपगमात्मनः ॥
स्वरूपं चिन्त्यमानोऽपि ग्राह्यप्राकारधर्मधीः ।
त्यजेत्पूर्वपदाद्भेदात् त्यागं तु परिकीर्तितम् ॥
पदस्थस्त्यागभागी च संवृतात्मपरस्य च ।
आक्षेपं तं विजानीयात्सर्वत्रावस्थितं प्रिये ।

इत्यादिना स्वरूपमुक्तम् ॥ १२९ ॥

नन्विहैतन्निर्भज्य कस्मान्नोक्तं किमागमपाठमात्रेण ?—इत्याशङ्क्याह—

**गुरुवक्त्राच्च बोद्धव्यं करणं यद्यपि स्फुटम् ॥ १३० ॥**

---

जो कुछ विचार्यमाण है वह स्वरूप का ही वैभव है—ऐस समझना सन्निवेश है ॥

स्वरूप में स्थिति की दशा अथवा (स्वरूप के) एक अंश मे (स्थिति की दशा जैसे) नथुने के तेज का विकास (या इसी प्रकार) एक स्थान से दूसरे स्थान पर जाने से वस्तु का बोध होता है यह बोध उक्त विधि से तीन प्रकार का होता है (यह भी सन्निवेश है)।

व्याप्ति उसे कहते हैं जो कि सब को जानने की सर्वत्र वर्त्तमान रहने की स्थिति है । यह परा अवस्था है ।

निवृत्ति का निषेध तथा दोनों (= प्रवृत्ति एवं निवृत्ति) के अभाव को ज्ञानभेद के द्वारा हटाना आत्मा का आक्षेप है ॥

स्वरूप का चिन्तन करते हुए भी ग्राह्य रूप धर्मबुद्धि को छोड़ देना ही त्याग कहा गया है ।

पद में रहते हुए त्याग की भावना रखना तथा अपने को सब ओर से संवृत कर लेने को ही हे प्रिये ! सर्वत्र स्थित आक्षेप समझना चाहिये ।

इत्यादि के द्वारा (वहीं ग्राह्य आदि का) स्वरूप कहा गया है ॥ १२९ ॥

प्रश्न—यहाँ पर इसको अलग-अलग कर क्यों नहीं कहा गया? आगमपाठ से क्या लाभ ?—यह शङ्का कर कहते हैं–

यद्यपि करण स्पष्टरूप से गुरुमुख से जानने योग्य हैं तथापि आगम

**तथाप्यागमरक्षार्थं तदग्रे वर्णयिष्यते ।**

इह यद्यप्यनुभवैकगोचरत्वात् करणस्वरूपं गुरुमुखादेव स्फुटमवगन्तव्यं तथाप्यागमार्थो मा विच्छेदीत्येतदग्रे 'वर्णयिष्यते' अन्तरान्तरा पुरस्ताच्चर्चयिष्यते- इत्यर्थः । तथाहि—

'अर्थस्य प्रतिपत्तिर्या ग्राह्यग्राहकरूपिणी ।
सा एव मन्त्रशक्तिस्तु वितता मन्त्रसंततौ ॥' (तं० १६।२५६)
इत्यादिना षोडशाह्निके ग्राह्यग्राहकयोः ।
'यत्तु सर्वाविभागात्म स्वतन्त्रं बोधसुन्दरम् ।
सप्तत्रिंशं तु तत्प्राहुस्तत्त्वं परशिवाभिधम् ॥' (तं० ११।२१)

इत्यादिनैकादशाह्निके संवित्तेः ।

'इह किल दृक्कर्मेच्छाः शिव उक्तास्तास्तु वेद्यखण्डलके ।'
(तं० १५।३३८)

इत्यादिना पञ्चदशाह्निके व्याप्तेः ।

'एवं त्रिविधविसर्गविशसमापत्तिधाम्नि य उदेति ।
संविन्परामर्शात्मा ध्वनिस्तदेव मन्त्रवीर्यं स्यात् ॥
(तं० २९ ।१४०)

---

की रक्षा के लिए आगे उसका वर्णन किया जाएगा ॥ -१३०-१३१- ॥

यद्यपि केवल अनुभव का विषय होने के कारण करण का स्वरूप स्पष्टतया गुरुमुख से ही जानने योग्य है तथापि आगम का प्रतिपाद्य खण्डित न हो जाय इसलिए आगे इसका वर्णन किया जायगा अर्थात् आगे बीच-बीच में इसकी चर्चा की जायगी । वह इस प्रकार—

"अर्थ का जो ग्राह्यग्राहकरूप ज्ञान है वही मन्त्र शक्ति हैं (जो) मन्त्रों के प्रवाह में व्याप्त हैं ।" (तं. आ. १६।२५३)

इत्यादि के द्वारा सोलहवें आह्निक में ग्राह्य ग्राहक का (वर्णन) हैं ।

"जो सबका अविभागस्वरूप स्वतन्त्र सुन्दर बोध उसी को (विद्वान् लोग) परम शिव नामक सैंतीसवां तत्त्व कहते हैं" ॥ (तं. आ. ११।२१)

इत्यादि के द्वारा ग्यारहवें आहिक में संवित् का (वर्णन हैं) ।

ज्ञान क्रिया और इच्छा सब शिव ही हैं ये वेद्य खण्ड मे कही गयी हैं ।

इत्यादि के द्वारा पन्द्रहवें आह्निक में व्याप्तिका—

"इस प्रकार त्रिविध विसर्ग के आवेश की समापत्ति वाले स्थान में जो संवित् परामर्शरूप ध्वनि उदित होती है । वही मन्त्रवीर्य है" । (तं. आ. २९।१४०)

इत्यादिना—

'यत्र सर्वे लयं यान्ति दह्यन्ते तत्त्वसञ्चयाः ।
तां चितिं पश्य कायस्थां कालानलसमप्रभाम् ॥'

(तं० २५।१७२)

इत्यादिना चैकान्त्रिंशाह्निके त्यागस्याक्षेपस्य च तत्तन्मुद्रास्वरूपनिरूपणद्वारेण द्वात्रिंशाह्निके संनिवेशस्य स्वरूपं वक्ष्यति—इति तत एवैतत्सतत्त्वं स्वयमेवावधारणीयम् । एवं च व्यावर्णनेऽस्यायमभिप्रायो यदेकप्रघट्टकेनैव रहस्यार्थोपदेशो न न्याय इति । यदुक्तमनेनैवान्यत्र—

'नातिरहस्यमेकत्र ख्याप्यं न च सर्वथा
गोप्यम् इति हि अस्मद्गुरवः ।'

इति । तदस्माकमपि एवं-व्याख्याने श्रीमदभिनवगुप्तपादा एव प्रमाणम्—इति नात्र विद्वद्भिरस्मभ्यमसूयितव्यम् ॥ १३० ॥

एवं करणस्वरूपमुट्टङ्क्य तदनन्तरोद्दिष्टं वर्णतत्त्वं वक्तुमुपक्रमते—

**उक्तो य एष उच्चारस्तत्र योऽसौ स्फुरन् स्थितः ॥ १३१ ॥**
**अव्यक्तानुकृतिप्रायो ध्वनिर्वर्णः स कथ्यते ।**

---

इत्यादि के द्वारा तथा

"उसमें सब तत्त्वसमूह विलीन हो जाते हैं और जला दिए जाते हैं । शरीर में स्थित कालाग्नि के समान कान्ति वाली उस चिति को देखो ।" (तं. आ. २५।१७२)

इत्यादि के द्वारा उन्तीसवें आह्निक में त्याग और आक्षेप का (वर्णन है) भिन्न-भिन्न मुद्रास्वरूप के निरूपण के द्वारा बत्तीसवें आह्निक में सन्निवेश का स्वरूप कहेंगे । इसलिए इसे यथार्थता के साथ वहीं से जान लेना चाहिए । इस प्रकार पृथक् वर्णन में इसका अभिप्राय यह है कि एक अनुच्छेद के द्वारा ही रहस्य विषय का उपदेश उचित नहीं हैं । जैसा कि इन्होंने ही अन्यत्र कहा है—

अत्यन्त रहस्य को एक स्थान में नहीं बतलाना चाहिए और न सर्वथा छिपाना (चाहिये—ऐसा हमारे गुरु कहते थे) । तो हम लोगों के भी इस प्रकार की व्याख्या में श्रीमान् अभिनवगुप्त ही प्रमाण है । इसलिए विद्वान् लोग हमारे प्रति आक्रोश न करें ॥ १३० ॥

इस प्रकार करण तत्त्व का उल्लेख कर उसके बाद नामित वर्णतत्त्व का कथन करने के लिसे उपक्रम करते हैं—

**जो यह उच्चार कहा गया उसमें जो यह अव्यक्त के अनुकरण जैसा ध्वनि स्फुरित होता हुआ स्थित रहता है वह वर्ण कहलाता**

य एष प्राणात्मा प्रागुच्चार उक्तस्तत्र स्फुरन् स्थितः—

'नास्योच्चारयिता कश्चित्प्रतिहन्ता न विद्यते ।
स्वयमुच्चरते देवः प्राणिनामुरसि स्थितः ॥' (स्व०तं० ७।५७)

इत्याद्युक्त्या स्वरसत एवोच्चरन् । तथा

'एको नादात्मको वर्णः सर्ववर्णाविभागवान् ।
सोऽनस्तमितरूपत्वादनाहत इहोदितः ॥' (तं० ६।२१६)

इत्यादिवक्ष्यमाणयुक्त्या सर्ववर्णाविभागस्वभावत्वादव्यक्तप्रायो योऽसावनाहतरूपो नादः स वर्णोत्पत्तिनिमित्तत्वाद्वर्ण उच्यते वर्णशब्दाभिधेयो भवेदित्यर्थः ॥ १३१ ॥

नन्वेवंविधोऽयं वर्णः कुत्रोपलभ्यते ?—इत्याशङ्क्याह—

**सृष्टिसंहारबीजं च तस्य मुख्यं वपुर्विदुः ॥ १३२ ॥**

तस्य च सृष्टिबीजं संहारबीजं चेति बीजद्वयं 'मुख्यं वपुः' प्रधानमभिव्यक्ति-स्थानमित्यर्थः ॥ १३२ ॥

नन्वेवमस्य परिज्ञानेन किं स्यात् ?—इत्याशङ्क्याह—

---

है ॥ -१३१-१३२- ॥

जो यह प्राणरूप उच्चार पहले कहा गया उसमें स्फुरित होता हुआ स्थित रहता है—

"इसका न तो कोई उच्चारण करने वाला और न (उसे) रोकने वाला है । प्राणियों के हृदय में स्थित यह देव स्वयं उच्चरित होता है ।" (स्व. तं. ७।५७)

इत्यादि उक्ति के द्वारा स्वभावतः ही उच्चरित होता हुआ तथा—

"एक नादात्मक वर्ण सभी वर्णों के मेल वाला है, वह कभी भी अस्त न होने वाला होने के कारण यहाँ अनाहत कहा गया है ।" (तं. आ. ६।२१६)

इत्यादि कही जाने वाली युक्ति से सभी वर्णों के मेलस्वभाव वाला होने के कारण प्रायः लगभग अव्यक्त जो यह अनाहत रूप नाद वह वर्णों की उत्पत्ति का कारण होने से वर्ण कहा जाता है = वर्ण शब्द का वाच्य होता है ॥ १३१ ॥

प्रश्न—इस प्रकार का वर्ण कहाँ मिलता है?—यह शङ्का कर कहते हैं—

**विद्वान् सृष्टि एवं संहार के बीज को उसका मुख्य शरीर मानते हैं ॥ -१३२ ॥**

और उसका सृष्टि बीज और संहार बीज ये दो बीज मुख्य शरीर = अभिव्यक्ति के प्रधान स्थान हैं ॥ १३२ ॥

प्रश्न—इसके परिज्ञान से क्या होगा?—यह शङ्का कर कहते हैं—

**तदभ्यासवशाद्याति क्रमाद्योगी चिदात्मताम् ।**

तच्छब्देन सृष्टिबीजादावभिव्यज्यमानो नादः परामृष्टः ॥

तदेवोपपादयति—

**तथा ह्यनच्के साच्के वा कादौ सान्ते पुनःपुनः ॥ १३३ ॥**
**स्मृते प्रोच्चारिते वापि सा सा संवित्प्रसूयते ।**

इह हि—

'.......................द्विजमाद्यमजीवकम् ।' (मा० वि० १७।२९)

इत्याद्युक्तेः 'अनच्के' स्वररहिते

'वामजङ्घान्वितो जीवः.........................।' (मा० वि० ३।५४)

इत्याद्युक्त्या 'साच्के' स्वरसहिते च ककारादिसकारान्ते वर्णकलापे पुनःपुनरुच्चारिते स्मृतेऽपि वा सा सा मर्मनिकृन्तनाप्यायनादिरूपा परस्परविलक्षणा 'संवित्' अनुभवो जायते। तेन सृष्टिबीजादावभिव्यज्यमानं नादं पौनःपुन्येनोच्चारयन् स्मरन् वापि योगी चिदैकात्म्यमनुभवेत्—इति युक्तमुक्तं 'तदभ्यासवशाद्याति क्रमाद्योगी चिदात्मताम्' इति ॥ १३३ ॥

---

उसके क्रमिक अभ्यास के कारण योगी चिदात्मता को प्राप्त होता है ॥ १३३- ॥

'तत्' शब्द से सृष्टि बीज आदि में अभिव्यक्त होता हुआ नाद समझा गया है ॥

उसी का उपपादन करते हैं—

स्वररहित या सस्वर 'क' से लेकर 'स' तक (के वर्णों का ) स्मरण और उच्चारण होने पर यहाँ संवित् उत्पन्न होती हैं ॥ -१३३-१३४- ॥

पहला वर्ण (= अ) द्विज उस प्रकार की जीवनरहित (= स्वर रहित) हैं । (मा. वि. १७ ।२९)

इत्यादि उक्ति के कारण अनच्क = स्वररहित में जीव (= ठ स ल ह वामजङ्घा = 'ऐ') से युक्त हैं । (मा. वि. ३।५५)

इत्यादि उक्ति के द्वारा साच्क = स्वरसहित और ककार से लेकर सकार तक के वर्णसमूह के बार-बार उच्चारण या स्मरण होने पर सा सा = हृदय को काटने या भरने आदि के समान परस्पर विलक्षण, संवित् = अनुभव उत्पन्न होता है । इससे सृष्टि बीज आदि में अभिव्यज्यमान नाद का बार-बार उच्चारण या स्मरण करने वाला योगी चित् के साथ तादात्म्य का अनुभव करता है । इसलिए ठीक ही कहा—उसके अभ्यास के द्वारा योगी क्रमशः चिदात्मता को प्राप्त होता है ॥१३३॥

न केवलं वाच्यार्थाव्यतिरेकिणो लोकोत्तरा मान्त्रा वर्णा एवं यावल्लौकिका अपि—इत्याह—

**बाह्यार्थसमयापेक्षा घटाद्या ध्वनयोऽपि ये ॥ १३४ ॥**
**तेऽप्यर्थभावनां कुर्युर्मनोराज्यवदात्मनि ।**

वस्तुवृत्तेनासंभाविनं बाह्यं पृथुबुध्नोदरादिरूपम् 'अर्थम्' उत्तमवृद्धादिना कल्पितमिदमस्याभिधेयमित्येवमात्मकं 'समयं' चापेक्षमाणा अपि ये घटाद्याः शब्दास्ते स्ववाच्यार्थवार्तामात्रानभिज्ञा अपि आत्मन्यर्थादुच्चारिताः स्मृता वा पृथुबुध्नोदरादेरर्थस्य 'भावनां' साक्षात्कारं, मनोराज्यवदिति, यथा स्वोत्प्रेक्षा-विकल्पादौ कान्तादिशब्दाः कामशोकादिना भाव्यमानास्तत्रासंनिहितस्यापि कान्तादेरर्थस्य कुर्युः, एवं संभाव्यते इत्यर्थः । एवं समयादिनिरपेक्षाणां संविदैकात्म्येन वर्तमानानां मान्त्राणां वर्णानां पुनरेवंसंभावने का नाम शङ्का भवेदिति भावः ॥ १३४ ॥

आगमोऽप्येवमित्यर्थद्वारेणाह—

**तदुक्तं परमेशेन भैरवो व्यापकोऽखिले ॥ १३५ ॥**
**इति भैरवशब्दस्य संततोच्चारणाच्छिवः ।**

---

लोकोत्तर मान्त्र वर्ण केवल वाच्य अर्थ से भिन्न नहीं हैं बल्कि अलौकिक भी हैं—यह बतला रहे हैं—

**बाह्य (रूप) एवं अर्थ के सङ्केत की अपेक्षा रखने वाली भी जो घट आदि ध्वनियाँ हैं वे भी आत्मा में मनोराज्य के समान अर्थभावना करती हैं ॥ -१३४-१३५- ॥**

वस्तु के व्यवहार से उत्पन्न न होने वाले बाह्य चौड़ा गोल उदर आदि रूप तथा 'अर्थ' = उत्तम वृद्ध आदि के द्वारा कल्पित 'यह इसका वाच्य है' ऐसे सङ्केत की अपेक्षा वाले भी जो घट आदि शब्द हैं वे अपने वाच्य अर्थ की बात से अनभिज्ञ होते हुए भी आत्मा में अर्थात् उच्चारित अथवा स्मृत होकर मनोराज्य में वर्त्तमान पृथुबुध्नस्दर आदि युक्त अर्थ की भावना = साक्षात्कार, को (उत्पन्न करते हैं) । जैसे अपनी उत्प्रेक्षा या विकल्पना आदि में कान्ता आदि शब्द काम शोक आदि के द्वारा भावित होने पर वहाँ अवर्त्तमान भी कान्ता आदि की (भावना) करते हैं वैसे ही यहाँ भी सम्भव हैं । इसी प्रकार सङ्केत आदि से निरपेक्ष (तथा) संविद् के साथ अभिन्नतया वर्त्तमान मान्त्र वर्णो की इस प्रकार की सम्भावना में क्या शङ्का हो सकती हैं ॥ १३४ ॥

आगम भी ऐसा है—यह (बात) अर्थ के द्वारा कहते हैं—

**वही परमेश्वर ने कहा है—भैरव सब में व्यापक हैं । इसलिए भैरव शब्द के निरन्तर उच्चारण से (योगी) शिव (हो जाता**

'भैरव' इति निरुक्तदृष्ट्या सर्वं भ्रियाद्धारयति पुष्णाति रचयति अन्तर्बहिर्वा करोति सृष्टिस्थितिसंहारकृत् अखिले व्यापकः सकलजगत्क्रोडीकारेण भरितत्वात् पूर्णः—इत्येवमात्मव्याप्तिगर्भीकारेण भैरवशब्दस्य पौनःपुन्येन 'उच्चारणात्' मध्य-धाम्नि हृदयात् द्वादशान्तं यावत्परामर्शनाच्छिवो भवेत्, भैरवैकात्म्यमनु-भवेदित्यर्थः । उक्तमिति—श्रीविज्ञानभैरवे । यदुक्तं तत्र—

'भ्रियात्सर्वं रचयति सर्वदो व्यापकोऽखिले।
इति भैरवशब्दस्य संततोच्चारणाच्छिवः ॥'

(वि०भै० ११३ श्लो०)

इति ॥ १३५ ॥

ननु यदि नामैवमुच्चारणाद्भवेत् तदस्तु, स्मरणात् पुनरेतत् कथम्? इत्याशङ्क्याह—

**श्रीमत्त्रैशिरसेऽप्युक्तं मन्त्रोद्धारस्य पूर्वतः ॥ १३६ ॥**

मन्त्रोद्धारस्य पूर्वत इति,

'अधुना श्रोतुमिच्छामि मन्त्रोद्धारस्य लक्षणम् ।'

इति भगवत्या प्रश्ने कृते हि तत्समाधानमारभमाणेन भगवतैतत्स्मरणस्वरूपं

---

है) ॥ -१३५-१३६- ॥

"भैरव" इस (शब्द को) निरुक्त की दृष्टि से (देखने पर) जो सबका भरण, धारण, पोषण, रचना अन्दर या बाहर करता है, सृष्टिस्थितिसंहारकारी, सबमें व्यापक, समस्त जगत् को गोद में रखकर भरण करने से पूर्ण हैं—इस प्रकार आत्मव्याप्ति को गर्भीकृत करने से, भैरव शब्द का बार-बार उच्चारण करने से मध्य धाम में = हृदय से लेकर द्वादशान्त तक, परामर्श करने से (साधक) शिव हो जाता है = भैरव के साथ एकात्मता का अनुभव करता है । कहा गया है—विज्ञान भैरव मे । जैसा कि वहाँ कहा है—

'सबका, भरण करता है, रचना करता है, सब कुछ देने वाला है, सबमें व्यापक हैं । इस प्रकार भैरव शब्द का निरन्तर उच्चारण करने से (साधक) शिव हो जाता है । (वि० भै० ११३) ॥ १३५ ॥

प्रश्न—यदि उच्चारण से ऐसा होता है तो हो, स्मरण से यह कैसे हो सकता है ?—यह शङ्का कर कहते हैं—

त्रिशिरोभैरव में भी मन्त्रोद्धार के पहले कहा गया है ॥ -१३६ ॥

मन्त्रोद्धार के पहले—

'अब मन्त्रोद्धार का लक्षण सुनना चाहती हूँ'

प्रथमतरमेवोक्तमित्यर्थः । एतदेव हि विचार्यमाणं मन्त्राणां परं वीर्यमिति भावः । यदुक्तमनेनैव सूत्रविमर्शिन्याम्—

'तत एव सकलसिद्धिवितरणचतुरचिन्तामणिप्रख्यमागमिकाः स्मरणमेव मन्त्रादिप्राणितं मन्यते ।' (ई०प्र०वि० १।४।१) इति ॥ १३६ ॥

तदेव पठति—

**स्मृतिश्च स्मरणं पूर्वं सर्वभावेषु वस्तुतः।**
**मन्त्रस्वरूपं तद्भाव्यस्वरूपापत्तियोजकम् ॥ १३७ ॥**

इह अनुभवप्रत्यभिज्ञादिप्रत्ययान्तरवैलक्षण्येनोज्जृम्भमाणं 'स' इति प्रत्यवमर्शनात्मकमनुभूतार्थप्रकाशसंप्रमोषणरूपं 'स्मरणं स्मृतिः' तद्रूपा पारमेश्वरी शक्तिरित्यर्थः । तच्च वाच्यवाचकात्मकेषु स्फुरत्सु भावेषु 'पूर्वम्' उपादित्सादिपूर्वकोटाववश्यभावि, अन्यथा हि—

'स्मरणादभिलाषेण (पेन) व्यवहारः प्रवर्तते ।'

इत्यादिनीत्या तन्मूलः समग्र एव व्यवहार उत्सीदेत् । पूर्वमनुभूतोऽर्थ इदानीं

---

ऐसा भगवती के द्वारा प्रश्न करने पर उसके समाधान का आरम्भ करते हुए भगवान् के द्वारा यह स्मरण स्वरूप पहले ही कहा गया । विचार किए जाने पर यही मन्त्रों का परमवीर्य हैं—यह तात्पर्य हैं । जैसा कि इन्होंने सूत्रविमर्शिनी में कहा है—

'इसी कारण आगम के विद्वान् समस्त सिद्धियों को देने में चतुर चिन्तामणि के समान स्मरण को ही मन्त्र आदि का प्राण मानते हैं ।' (ई. प्र. वि. १।४।१) ॥ १३६ ॥

वही पढ़ते हैं—

स्मृति ही स्मरण है । यह सभी भावों का पूर्ववर्त्ती हैं । यह वस्तुतः मन्त्रस्वरूप हैं । वह अनुभवनीय (पदार्थ) के स्वरूप के तादात्म्य का व्यवस्थापक हैं ॥ १३७ ॥

अनुभव प्रत्यभिज्ञा आदि दूसरे ज्ञानों से विलक्षणता के साथ उत्पन्न होने वाला, 'वह' इस प्रकार प्रत्यवमर्शनात्मक तथा अनुभूत विषय के प्रकाश का असम्प्रमोषरूप स्मरण स्मृति हैं । अर्थात् उस रूप वाली परमेश्वर की शक्ति हैं । वह वाच्यवाचक रूप स्फुरित होने वाले पदार्थों में, पूर्व = ग्रहण की इच्छा आदि की पूर्व कोटि में अवश्य रहने वाली हैं । अन्यथा

'स्मरण के कारण इच्छा (= बातचीत) के द्वारा व्यवहार चलता है ।'

इत्यादि सिद्धान्त के द्वारा उसके कारण (चलने वाला) समस्त व्यवहार ही

नास्तीति निर्विषयत्वात् स्मृतिरेव नोल्लसेत्; अस्तित्वे वा तस्यानुभव एव भवेत्—इति कथं तन्मूलोऽयं व्यवहारः सिद्ध्येदित्याशङ्क्योक्तं—'वस्तुतो मन्त्रस्वरूपम्' इति । तद्धि स्मरणं वस्तुवृत्तेन मन्त्रयति स्वाभेदेन विश्वं परामृशति—इति 'मन्त्रः' परः प्रमाता तस्य स्वरूपं तदेकविश्रान्तमित्यर्थः । नन्वेमपि किं स्यात् ?—इत्याशङ्क्याह—'तद्भाव्यस्वरूपापत्तियोजकम्' इति । यतस्तत्परप्रमात्रात्म मन्त्रस्वरूपं 'भाव्यस्य' अनुभवनीयस्य घटादेरर्थस्य 'स्वरूपापत्तिः' स्वात्मसात्कारस्तत्र योजयति, तथात्वेन व्यवस्थापयतीत्यर्थः । यदि नाम हि तदविभागेन निखिलमिदमनुभूतं वस्तु न संभवेत् तत् स्मरणमेव न भवेदिति भावः । यदुक्तम्—

'सर्वेऽनुभूता यदि नान्तरर्थास्त्वदात्मसात्कारसुरक्षिताः स्युः ।
विज्ञातवस्त्वप्रतिमोषरूपा काचित् स्मृतिर्नाम न संभवेत्तत् ॥'

इति ॥ १३७ ॥

तामेव विशिनष्टि—

**स्मृतिः स्वरूपजनिका सर्वभावेषु रञ्जिका ।**
**अनेकाकाररूपेण सर्वत्रावस्थितेन तु ॥ १३८ ॥**

---

उच्छिन्न हो जायगा । पहले अनुभव किया गया पदार्थ इस समय नहीं हैं इस प्रकार विषयाभाव के कारण स्मृति ही उत्पन्न नहीं होगी, अथवा रहने पर अनुभव ही होगा—इस प्रकार तन्मूलक यह व्यवहार कैसे सिद्ध होगा ?—यह शङ्का कर कहा गया—वस्तुतः मन्त्रस्वरूप हैं । वह स्मरण वस्तु के वृत्त (= व्यवहार) के साथ मन्त्रणा करता है = अपने से अभिन्न रूप में विश्व का परामर्शन करता है इसलिए मन्त्र परप्रमाता (है) । उसका स्वरूप अर्थात् उसी मे विश्रान्त । ऐसा होने पर भी क्या होगा?—यह शङ्का कर कहते हैं—तद्भाव्य स्वरूपापत्तियोजक हैं । क्योंकि वह = परप्रमाता रूप मन्त्रस्वरूप, भाव्यकी = अनुभवनीय घट आदि विषय की, (जो) स्वरूपापत्ति = आत्मसात्कार, उसमें लगाता है = उस रूप में स्थापित करता है । यदि यह समस्त अनुभूत वस्तु उससे अविभक्त रूप में न सम्भव होती तो उसका स्मरण ही नहीं होता । जैसा कि कहा गया है—

'(हे परमेश्वर !) यदि हृदय में अनुभूत सारे पदार्थ तुम्हारे आत्मसात्कार के कारण सुरक्षित न होते तो विज्ञात वस्तु की अप्रमोषरूप कोई स्मृति नाम का (तत्त्व) सम्भव न होता' ॥ १३७ ॥

उसी को विशेष रूप से बता रहे हैं—

स्मृति अपने (वर्त्तमान) रूप की जनक हैं । वह सर्वत्र स्थित अनेक आकार के रूप से सभी पदाथों में स्फुट होने वाली हैं । (वह स्मृति) अपने स्वभाव की प्राप्ति है । परमार्थतः (वह) संवित् ही हैं । इसलिए उसे

**स्वस्वभावस्य संप्राप्तिः संवित्तिः परमार्थतः ।**
**व्यक्तिनिष्ठा ततो विद्धि सत्ता सा कीर्तिता परा॥ १३९ ॥**

यतः सा स्मृतिः 'व्यक्तिः' अर्थप्रकटनात्मा प्राच्योऽनुभवः 'तन्निष्ठा' तदभेदमापन्ना सती स्वस्येदानीन्तनकालावच्छिन्नस्य रूपस्य 'जनिका' स्मर्यमाणार्था-वभासिकेत्यर्थः । प्राच्यस्यैव ह्यनुभवस्येदानीन्तनकालावच्छेदेन पुनरुन्मेषो नाम स्मरणम्, अत एव पूर्वापरोभयकालावलम्बनेनौचित्योपनतः 'स' इति परामर्शोऽस्य परमार्थः ।

नन्वेवमपि स्मृतेर्विकल्पविशेषत्वात् निर्विषयत्वेन कथमर्थावभासकत्वमित्युक्तं 'सर्वभावेषु रञ्जिका' इति । 'अनेकाकाररूपेण सर्वत्रावस्थितेन तु' इति । सा हि 'सर्वत्र' सर्वेषु पूर्वावभातेषु घटादिषु भावेष्वर्थितादिवशाद् घटकाञ्चनद्रव्य-त्वाद्यात्मकेन 'अनेकेनैवाकारेण' कदाचिदपि स्वालक्षण्यात् स्वस्वरूप एवावस्थितेन घटाभासमात्राद्यात्मना 'रञ्जिका' स्वकाले स्फुटमेवावभासिकेत्यर्थः । यदुक्तम्—

'भासयेच्च स्वकालेऽर्थान्पूर्वाभासितमामृशन्।
स्वलक्षणं घटाभासमात्रेणाथाखिलात्मना ॥' (ई०प्र० १।४।२)

इति । एवं प्राच्यस्यानुभवस्य स्मृत्यभेदेनैवावभासात् स्मृत्यनुभवयोरैक्यं सिद्धम्—

---

अभिव्यक्ति में रहने वाली जानो । वह परा सत्ता कही गई हैं ॥ १३८-१३९ ॥

चूँकि वह स्मृति व्यक्ति = अर्थप्राकट्यरूप अतीत अनुभव, उसमें रहने वाली = उससे अभिन्न होते हुए स्वयं इस समय के काल से अवच्छिन्न रूप की जनिका = स्मर्यमाण अर्थ का अवभास कराने वाली हैं । अतीत अनुभव का वर्त्तमान काल में पुनः उन्मेष ही स्मरण है । इसलिए अतीत और वर्त्तमान दोनो कालों के आलम्बन के कारण औचित्य को प्राप्त 'वह' = परामर्श, इसका परमार्थ हैं ।

प्रश्न—ऐसा होने पर भी स्मृति के विशिष्ट विकल्प रूप होने के कारण निर्विषयक होने से, (यह) पदार्थों की अवभासिका कैसे होगी ?—इसलिए कहा गया—सर्वभावेषु रञ्जिका । और अनेकाकाररूपेण सर्वत्र अवस्थित है । वह (स्मृति) सर्वत्र = सभी पूर्व = अनुभूत घट आदि पदार्थों का, प्रयोजनवश घट, काञ्चन, द्रव्य आदि अनेक आकार में और कभी स्वलक्षण होने के कारण अपने स्वरूप में ही स्थित होने से केवल घटाभास रूप में, रञ्जिका = अपने काल में स्पष्ट अवभास कराने वाली हैं । जैसा कि कहा गया है—

पहले आभासित पदार्थ का अपने काल मे प्रत्यवमर्शन करने वाली (स्मृति कभी) केवल स्वलक्षण का और कभी सम्पूर्ण रूप से घटाभास का आभास कराती हैं । (ई. प्र. १।४।२) ।

इस प्रकार अतीत अनुभव का स्मृति से अभिन्न रूप में आभासन होने के

इति सा स्मृतिरेव स्वात्मनः संप्राप्तिः, पारमार्थिकी च संवित्तिरित्युक्तं 'स्वस्वभावस्य संप्राप्तिः संवित्तिः परमार्थतः' इति । यदुक्तम्—

'न च युक्तं स्मृतेर्भेदे स्मर्यमाणस्य भासनम्।
तेनैक्यं भिन्नकालानां संविदां वेदितैष सः ॥' (ई०प्र० १।४।३)

अतएव च—

'सा स्फुरत्ता महासत्ता देशकालाविशेषिणी।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥' (ई०प्र० १।५।१४)

इत्यादिना निरूपितस्वरूपा पराकृत्रिमाहन्तापरामर्शात्मिका मान्त्री वीर्यभूमियम्, अत्रैवावधातव्यमित्युक्तं 'विद्धि सत्ता सा कीर्तिता परा' इति । विद्धीत्यत्र वाक्यार्थस्य कर्मत्वम् ॥ १३९ ॥

तदेवं लौकिकानां घटादीनां शब्दानामेवमुच्चारणात् स्मरणाद्वा यत्र संविदैकात्म्यावाप्तावुपायत्वं तत्र सृष्टिबीजादीनां का वार्ता ?—इत्याह—

**किं पुनः समयापेक्षां विना ये बीजपिण्डकाः ।**
**संविदं स्पन्दयन्त्येते नेयुः संविदुपायताम् ॥ १४० ॥**

---

कारण स्मृति ही अपनी आत्मा की प्राप्ति और परमार्थिक संवित्ति है । यही कहा गया—स्वस्वभावस्य... । जैसा कि कहा गया है—

"स्मृति से भेद होने पर स्मर्यमाण का भेदाभास युक्तिसङ्गत नहीं हैं । इसीलिये भिन्न कालों में वर्त्तमान संविदों की एकता ही हैं । और यही वह ज्ञाता है ।" (ई. प्र. १।४।३)

और इसीलिए—

"वह प्रकाशन करने वाली महासत्ता देश और काल के वैशिष्ट्य (= सीमा) से रहित हैं । वह यह सार होने के कारण परम शिव का हृदय कही गई हैं ।" (ई. प्र. १।५।१४)

इत्यादि के द्वारा जिसका स्वरूप वर्णित हैं (वह) यह परा, स्वाभाविक अहंभाव का परामर्श करने वाली, मन्त्रसम्बन्धी वीर्यभूमि हैं । इसी में अवधान करना चाहिए । इसलिए कहा गया—विद्धि सत्ता सा कीर्त्तिता परा । पूरा वाक्यार्थ 'विद्धि' क्रिया का कर्म हैं ॥ १३९ ॥

तो इस प्रकार जहाँ लौकिक घट आदि शब्दों का इस प्रकार उच्चारण अथवा स्मरण संविद् के साथ एकात्मता की प्राप्ति का उपाय हैं वहाँ सृष्टिबीज आदि की क्या बात?—यह कहते हैं—

**समय की अपेक्षा के बिना जो बीज पिण्ड आदि हैं उनकी क्या बात ? ये संविद् का स्पन्दन कराते हैं तो क्या ये संविद् (की प्राप्ति) के**

एते संविदुपायतां नेयुरिति काक्वा व्याख्येयम् ॥ १४० ॥

ननु समयानपेक्षमेव कथमेवमेते कुर्वन्ति ?—इत्याशङ्क्याह—

**वाच्याभावादुदासीनसंवित्स्पन्दात्स्वधामतः ।**
**प्राणोल्लासनिरोधाभ्यां बीजपिण्डेषु पूर्णता ॥ १४१ ॥**

संविदैकात्म्येन स्फुरणात् व्यतिरिक्तस्य वाच्यस्याभावात्, तथा 'उदासीनः' स्वात्ममात्रविश्रान्तेरबहिर्मुखो योऽसौ संवित्स्पन्दस्तद्रूपात् 'स्वधामतः' स्वस्फारात्, तथा प्रमाणात्मनः 'प्राणस्योल्लासात्' प्रमेयोन्मुखं प्रसरणात्, तथा 'निरोधात्' अन्तर्मुखरूपे विश्रमात् सृष्टिसंहारकारित्वात् सृष्टिबीजादिरूपेषु 'बीजपिण्डेषु पूर्णता' अनन्योन्मुखत्वात् नैराकाङ्क्ष्यमित्यर्थः । घटादिषु लौकिकेषु पुनः शब्देषु वाच्यसद्भावादेरपूर्णत्वात् समयाद्यपेक्षत्वमित्यर्थसिद्धम् ॥ १४१ ॥

एवमेतत् सामान्येनाभिधाय विशेषमुखेनापि दर्शयति—

**सुखसीत्कारसत्सम्यक्साम्यप्रथमसंविदः ।**

---

उपाय नहीं हो सकते ॥ १४० ॥

क्या ये संविद् की उपायता को प्राप्त नहीं हो सकते ?—इस तरह इसकी व्याख्या काकुध्वनि से करनी चाहिए ॥ १४१ ॥

प्रश्न—समय की अपेक्षा के बिना ही ये इस प्रकार कैसे करते हैं ?—यह शङ्का कर कहते हैं—

वाच्य का अभाव होने से, उदासीन संवित्स्पन्द रूप होने से, अपने स्फार के कारण एवं प्राण के उल्लास तथा निरोध से बीजपिण्डों में पूर्णता होती है ॥ १४१ ॥

संविद् के साथ एकात्म होकर स्फुरण होने के कारण भिन्न वाच्य के न होने से, उदासीन = केवल अपनी आत्मा में विश्रान्ति के कारण अन्तर्मुख, जो यह संविद् का स्पन्द, तद्रूप होने से, स्वधाम = स्वस्फार के कारण, तथा प्रमाण रूप प्राण के उल्लास = प्रमेय की ओर प्रसार तथा निरोध = अन्तर्मुख रूप में विश्राम, (इन दोनों) के कारण सृष्टिसंहारकारी होने से सृष्टि के बीज आदि रूपों में = बीजपिण्डों में, पूर्णता = अन्योन्मुख न होने के कारण निराकाङ्क्षता है । घट आदि लौकिक शब्दों में वाच्य के होने से अपूर्ण होने के कारण समय आदि की अपेक्षा होती हैं—यह (बात) अर्थात् सिद्ध है ॥ १४१ ॥

इस प्रकार इसे सामान्य रूप से कह कर (अब) विशेष रूप से भी दिखला रहें हैं—

सुख, सीत्कार, सत्, सम्यक्, एवं साम्य सम्बन्धी प्रथम संविद् का

**संवेदनं हि प्रथमं स्पर्शोऽनुत्तरसंविदः ॥ १४२ ॥**
**हृत्कण्ठ्योष्ठ्यत्रिधामान्तर्नितरां प्रविकासिनि ।**
**चतुर्दशः प्रवेशो य एकीकृततदात्मकः ॥ १४३ ॥**
**ततो विसर्गोच्चारांशे द्वादशान्तपथावुभौ ।**
**हृदयेन सहैकध्यं नयते जपतत्परः ॥ १४४ ॥**

सुखादिसंबन्धिन्याः 'प्रथमायाः' आद्यायाः संविदो यत् 'प्रथमम्' आद्यमेव संवेदनम्, अनन्तरं हि संवेद्याद्यारुषितत्वमपि भवेदिति भावः । स नाम अनुत्तरसंविदः 'स्पर्शः' परसंवित्साक्षात्कारः इत्यर्थः । 'सुखं' चमत्कारातिशयः, 'सीत्कारः' तत्कारणं 'सत्' रमणीयं बाह्यं स्त्र्यादि वस्तु, सम्यगरमणीयमपि स्वोचितेन संनिवेशेनावस्थितं, 'साम्यं' रागद्वेषादिद्वन्द्वपरिहारः । अथ च सुखादीनामाद्या सकारमात्ररूपा या संवित् तस्याः संवेदनादप्येवम्—इति परबीजगतस्यामृतवर्णस्यापि तत्त्वं प्रदर्शितम् । यदुक्तं प्राक्—

'क्षोभाद्यन्तविरामेषु तदेव परमामृतम् ।
सीत्कारसुखसद्भावसमावेशसमाधिषु ॥' (तं० ३।१६७)

इति । अस्य च दन्त्यत्वेऽपि कन्दे विश्रान्तिरिति—

---

प्रथम संवेदन ही अनुत्तर संवित् का स्पर्श हैं । हृदय कण्ठ और ओष्ठ रूप तीन धाम के अन्दर भली भाँति विकसित होने वाले (आधार = सौः) में जो प्रवेश है (वह) चौदहवाँ तथा उस (= अमृत वर्ण) से अभिन्न हैं ।

इसके बाद विसर्ग के उच्चारांश में जप मे तत्पर (योगी) दोनों द्वादशान्तपथों को हृदय के साथ एकता को प्राप्त करा देता है ॥ १४२-१४४ ॥

सुख आदि से सम्बद्ध, प्रथम = पहली संविद्, का जो प्रथम = पहला, संवेदन, बाद में वह सम्वेद्य आदि से युक्त भी हो जाता है—यह भाव है । वह अनुत्तर संविद् का स्पर्श अर्थात् परासंविद् का साक्षात्कार हैं । सुख = अत्यधिक चमत्कार; सीत्कार = उसका कारण, सत् = रमणीय, स्त्री आदि बाहरी वस्तु, सम्यक् = रमणीय न होते हुए भी अपने उचित सन्निवेश के साथ स्थित, साम्य = राग द्वेष आदि द्वन्द्व का त्याग । यहाँ सुख आदि की प्रथम सकारमात्ररूप जो संवित्, उसके संवेदन से भी ऐसा होता है—इस प्रकार पराबीज वाले अमृत वर्ण (= स्) का भी तत्त्व (= सौः) दिखलाया गया । जैसा कि पहले कहा गया है—

क्षोभ से लेकर अन्तिम विराम वाले, सीत्कार, सुख, सद्भाव, समावेश और समाधि में वही परम अमृत (वर्त्तमान हैं) (तं. आ. ३।१६७)।

इस (= सकार) के दन्त्य होने पर भी (इसका) विश्राम कन्द में हैं । यह बात—

'कन्दहृत्कण्ठताल्वग्र......................।' (तं० ५।१४५)

इत्यादिवक्ष्यमाणार्थबलादवगन्तव्यम् । ततोऽपि 'अन्तः' मध्यधाम्नि नाडीत्रयस्यापि संमिलिततयात्यन्तं विकस्वरे ब्रह्मरन्ध्रोर्ध्ववर्तिनि नाड्याधाराभिधे परस्मिन्नाधारे यः प्रवेशः स चतुर्दशः, तस्येदं विश्रान्तिस्थानमित्यर्थः । नन्वत्र किमसौ केवलतयैव विश्राम्यत्युतान्यथा ? इत्याशङ्क्योक्तम्—'एकीकृततदात्मकः' इति । 'एकीकृतः' स्वाभेदेनास्थापितः—

'ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।' (भ०गी० १७।२३)

इत्यादिनीत्या तस्य परस्य ब्रह्मण आत्मा येनासावमृतवर्णसंभिन्न इत्यर्थः । ननु यद्येतदस्य विश्रान्तिस्थानम् उदयस्थानं पुनः किम् ?—इत्याशङ्क्याह—'हृत्कण्ठ्यौष्ठ्यत्रिधामा' इति तात्स्थ्यात् हृदकारः कण्ठ्यौष्ठ्यश्च औकारस्तयोः संहतत्वात् हृत्कण्ठौष्ठानि त्रीणि 'धामानि' उदयस्थानानि यस्यासावेवंविधः, तेन हृदयाद्युदयक्रमेण त्रिशूलभूमौ विश्राम्यति—इति शूलवर्णतत्त्वम् । तदनन्तरमपि विसर्गोच्चारांशे सावधानो जपतत्परो योगी उभौ 'द्वादशान्तपथौ' नासिक्यशिवद्वादशान्तौ सृष्ट्यात्मना 'हृदयेन सहैकध्यं नयते' शक्त्यादिसामरस्येन द्वादशान्तपर्यन्तं पराबीजमुच्चारयेदित्यर्थः ॥ १४४ ॥

---

"कन्द हृदय, कण्ठ और तालु के अग्र................" (तं. आं. ५।१५५)

इत्यादि आगे कहे जाने वाले (श्लोक के) अर्थ से जान लेना चाहिए । उसके भी भीतर = मध्य धाम में, तीनों नाड़ियों के मिल जाने से अत्यन्त विकसित, ब्रह्मरन्ध्र के (१२ अंगुल) ऊपर वर्त्तमान नाड्याधार नामक परआधार में जो प्रवेश है वह चौदहवाँ हैं । उसका यह (= सौः) विश्राम स्थल हैं । प्रश्न—क्या यहाँ पर वह अकेले विश्राम करता है या अन्य रूप से ?—यह शङ्का कर कहा गया—एकीकृत तदात्मकः । एकीकृत = अपने से अभिन्न रूप में स्थापित—

"ओम्, तत् एवं सत् इस प्रकार ब्रह्म का निर्देश तीन प्रकार का कहा गया है।" (भ० गी० १७।२३)

इत्यादि नीति के द्वारा उस पर ब्रह्म की आत्मा जिससे यह अमृत वर्ण (= स) से मिला हुआ है । प्रश्न—यह इसका विश्रान्तिस्थल हैं तो उदयस्थल कौन सा है ?—यह शङ्का कर कहते हैं—हृत् कण्ठ ओष्ठ तीन स्थान । उसमें रहने के कारण हृद्य, कण्ठ्य और ओष्ठ्य = औकार, उन दोनो के मिल जाने से हृदय, कण्ठ और ओष्ठ तीन धाम = उदय के स्थान हैं जिसके वह, उस प्रकार का । इसलिए हृदय आदि में उदय के क्रम से (यह) त्रिशूल भूमि मे विश्राम करता है । यह शूल वर्ण का रहस्य हैं । उसके बाद भी (सः में वर्त्तमान) विसर्ग के उच्चारणांश के बारे में सावधान जप में लगा हुआ योगी दोनो द्वादशान्त मार्गों को = नासिक्य और शिव द्वादशान्त को, सृष्टि रूप हृदय के साथ, एकता को ले जाता है = शक्ति आदि की समरसता के द्वारा द्वादशान्तपर्यन्त परा बीज का

एतदेव सङ्कलयति—

**कन्दहृत्कण्ठताल्वग्रकौण्डिलीप्रक्रियान्ततः ।**
**आनन्दमध्यनाड्यन्तः स्पन्दनं बीजमावहेत् ॥ १४५ ॥**

'कौण्डिली' शक्तिद्वादशान्तः 'प्रक्रियान्तः' शिवद्वादशान्तः । एवं कन्दात् प्रभृति तत्तदाधारोल्लङ्घनक्रमेण द्वादशान्तपर्यन्तं मध्यधामान्तरिदं सृष्टिबीजं 'स्पन्दनमावहेत्' अनुत्तरसंविदामर्शात्मना प्रस्फुरेदित्यर्थः ॥ १४५ ॥

एवमेतद्वर्णतत्त्वं संहारबीजानुसारेणापि अभिधत्ते—

**संहारबीजं खं हृत्स्थमोष्ठ्यं फुल्लं स्वमूर्धनि ।**
**तेजस्त्र्यश्रं तालुकण्ठे बिन्दुरूर्ध्वपदे स्थितः ॥ १४६ ॥**

तत्र खस्य कण्ठ्यत्वेऽप्युरस्यतोद्रेकेण हृत्स्थत्वं, 'फुल्लं' फकारस्तच्चौष्ठ्यम्, ओष्ठत एवोच्चारात्, 'तेजो' रेफस्तस्य मूर्धन्यत्वान्मूर्धन्येवावस्थानम् । त्र्यश्रमेकारस्तस्यापि कण्ठतालव्यत्वात् तालुकण्ठ एवावस्थितिः । 'ऊर्ध्वपदे' इति शक्तिशिवद्वादशान्तरूपे । एवं हृदादिस्थानविश्रान्तिपुरस्सरमेवोच्चारो भवेदिति भावः । यस्तु

---

उच्चारण करता है ॥ १४३-१४५ ॥

इसी को संग्रह रूप में कहते हैं—

कन्द, हृदय, कण्ठ, ताल्वग्र, कौण्डिली और प्रक्रियान्त तक आनन्द रूप मध्य नाडी के भीतर स्पन्दनबीज का स्फुरण करना चाहिए ॥ १४५॥

कौण्डिली = शक्तिद्वादशान्त; (= मूलाधार) प्रक्रियान्त = शिवद्वादशान्त (= ब्रह्मरन्ध्र से १२ अंगुल ऊपर)। इस प्रकार कन्द से लेकर उन-उन आधारों का क्रमशः उल्लङ्घन करते हुए द्वादशान्त तक मध्य धाम के भीतर इस सृष्टिबीज (= स्) का वहन करना चाहिए = अनुत्तर संविद् आमर्श के रूप में स्फुरण करना चाहिए ॥ १४५ ॥

इस प्रकार संहारबीज के अनुसार भी इस वर्णतत्त्व को कहते हैं—

संहार बीज = 'ख' हृदय में रहता है । फकार ओष्ठज है । तेजस् = र् अपनी मूर्धा में (रहता है) । त्र्यश्र = (= ए) तालु कण्ठ में और बिन्दु ऊर्ध्व पद में रहता है ॥ १४६ ॥

यद्यपि ख का स्थान कण्ठ हैं तो भी हृदय से उसका उद्रेक होने से (उसे) हृदयस्थ (माना गया है) । फुल्ल = फकार, वह ओष्ठ्य है क्योंकि ओष्ठ से उसका उच्चारण होता है । तेजस = रेफ । मूर्धन्य होने के कारण उसकी मूर्धा में स्थिति है । त्र्यश्र = एकार । कण्ठ्य तालव्य होने से उसकी भी कण्ठतालु में ही स्थिति है । ऊर्ध्वपद = शक्ति शिव दो द्वादशान्त । इस प्रकार हृदय आदि स्थानों

'खरूपे निर्वृतिं प्राप्य......................।' (तं० ५।७५)

इत्यादिना संवित्क्रमेण प्रागुच्चार उक्तः सोऽप्यत्रानुसंधेयः, संवित्क्रमस्य सर्वत्रैव भावात् ॥ १४६ ॥

नन्वेवमुक्तेन वर्णतत्त्वेन किं भवेत् ?—इत्याशङ्क्याह—

**इत्येनया बुधो युक्त्या वर्णजप्यपरायणः ।**
**अनुत्तरं परं धाम प्रविशेदचिरात् सुधीः ॥ १४७ ॥**

बुधः सुधीरित्यत्र 'ज्ञानित्वस्यात्र प्राधान्यमुक्तम्' इति दर्शितम् ॥ १४७ ॥

तदेवं वर्णतत्त्वमभिधाय भङ्ग्यन्तरेणाप्याह—

**वर्णशब्देन नीलादि यद्वा दीक्षोत्तरे यथा ।**

ननु किमेतत् स्वमनीषिकयैवोक्तमुत निबन्धान्तरं किञ्चिदत्रास्ति? इत्याशङ्क्याह —'दीक्षोत्तरे यथा' इति । अर्थाद्दीक्षोत्तराख्ये ग्रन्थे यथोक्तमिति ॥

तदेवाह—

**संहारन्त्रग्निमरुतो रुद्रबिन्दुयुतान्स्मरेत् ॥ १४८ ॥**

---

में विश्रामपूर्वक ही उच्चार होता है । और जो 'ख रूप में निवृत्ति को प्राप्त कर.. .......' (तं. ५।७५) इत्यादि के द्वारा संवित्क्रम से उच्चार कहा गया है उसका भी यहाँ अनुसन्धान करना चाहिए क्योंकि संवित्क्रम सब जगह रहता है ॥ १४६ ॥

प्रश्न—इस उक्त वर्णतत्त्व से क्या (लाभ) होगा ?—यह शङ्का कर कहते हैं—

इस प्रकार इस युक्ति के साथ वर्ण के जप में लगा हुआ विद्वान् ज्ञानी शीघ्र ही अनुत्तर धाम में प्रवेश कर जाता है ॥ १४७ ॥

बुधः सुधी यह (कहने से) यहाँ ज्ञान का प्राधान्य कहा गया है—यह प्रदर्शित होता है ॥ १४७ ॥

इस प्रकार वर्ण तत्त्व का कथन कर अब दूसरी रीति से भी कहते हैं—

अथवा वर्ण शब्द से नील आदि (का ग्रहण होता है) जैसा कि दीक्षोत्तर नामक ग्रन्थ में (उक्त है) ॥ १४८- ॥

प्रश्न—क्या यह अपनी बुद्धि से कहा गया है या इस विषय में कोई दूसरा ग्रन्थ भी (प्रमाण) हैं ?—यह शङ्का कर कहते हैं—जैसे कि दीक्षोत्तर में । अर्थात् दीक्षोत्तर नामक ग्रन्थ में जैसा कहा गया है ।

वही कहते हैं—

(योगी यदि) रुद्र विन्दु से युक्त संहार नृ अग्नि मरुत् का तन्मय होकर

**हृदये तन्मयो लक्ष्यं पश्येत्सप्तदिनादथ ।**
**विस्फुलिङ्गाग्निवन्नीलपीतरक्तादिचित्रितम् ॥ १४९ ॥**
**जाज्वलीति हृदम्भोजे बीजदीपप्रबोधितम् ।**
**दीपवज्ज्वलितो बिन्दुर्भासते विघनार्कवत् ॥ १५० ॥**

'संहारः' क्षकारो 'ना' पुमान् मकारः 'अग्निः' रेफः 'मरुत्' यकारः, एतान् पिण्डीभूतान् रुद्रेणै(णो)कारेण बिन्द्वर्धचन्द्रादिना च युतान् तावद्धृदये स्मरेत् यावत्तदेकतानः सन् सप्तदिनादूर्ध्वं 'लक्ष्यं पश्येत्' ध्येयं किञ्चित् प्रकटीभवेदित्यर्थः । तद्धि अस्य लक्ष्यमुक्तस्वरूपं, यद्बीजं तदेव प्रकाशतादात्म्यात् दीपस्तेन 'प्रबोधितम्' अभिव्यञ्जितं सत् विस्फुलिङ्गप्रधानाग्निन्यायेन नीलपीताद्यनेकवर्णचित्रीकृतं हृदम्भोजे 'जाज्वलीति' स्पष्टनिरीक्षणीयतामेतीत्यर्थः । एवमत्राप्येकतानस्य सतोऽस्य भावनातारतम्येन दीपवद् ग्रीष्मार्कवच्च यथायथं दीप्तो 'बिन्दुः' वेदयिता स्वात्मा भासते,

'आत्मानमत एवायं ज्ञेयीकुर्यात् ।' (ई०प्र० १।५।१५)

इत्याद्युक्तयुक्त्या लक्ष्यतामेतीत्यर्थः ॥ १५० ॥

नन्वेवं लक्ष्यतामाप्तेनात्मनास्य किं स्यात् ?—इत्याशङ्क्याह—

---

हृदय में स्मरण करता है तो सात दिनों के अन्दर लक्ष्य की प्राप्ति कर लेता है । बीज रूपी दीप से प्रबोधित (लक्ष्य) नील पीत रक्त आदि (वर्णों) से चित्रित विस्फुलिङ्ग अग्नि के समान हृदयकमल में जलता है । दीप के समान जलने वाला विन्दु मेघरहित सूर्य के समान चमकता है ॥ -१४८-१५० ॥

संहार = क्ष, ना = पुरुष = म, अग्नि = र, मरुत् = य, परस्पर मिले हुए इनको, रुद्र = ओ, (इन सबका) विन्दु और अर्धचन्द्र आदि से युक्त कर हृदय में स्मरण करना चाहिए । (योगी) जब एकतान हो जाता है तब सात दिन के बाद लक्ष्य का दर्शन करता है अर्थात् (उसके सामने) ध्येय आंशिक रूप में प्रकट हो जाता है । पहले जिसका स्वरूप बतलाया गया वह लक्ष्य, जो बीज हैं वही प्रकाश के साथ एक होने से दीप है, उससे प्रबोधित = अभिव्यञ्जित होता हुआ विस्फुलिङ्ग प्रधान अग्नि की भाँति नील पीत आदि अनेक रङ्गों से विचित्र बनाया गया, हृदय कमल में जलता है = स्पष्ट निरीक्षण के योग्य हो जाता है । इस प्रकार यहाँ भी एकतान रहने वाले इस (योगी) के भावनातारतम्य के द्वारा दीप के समान और ग्रीष्मकालीन सूर्य के समान क्रमशः दीप्त बिन्दु = ज्ञान करने वाला आत्मा, भासित होता है ।

'इसलिए यह (योगी) आत्मा को ज्ञेय करे ।' (ई. प्र. १।५।१५)

इत्यादि उक्ति के अनुसार लक्ष्यता को प्राप्त करता है ॥ १५० ॥

**स्वयंभासात्मनानेन तादात्म्यं यात्यनन्यधीः।**
**शिवेन हेमतां यद्वत्ताम्रं सूतेन वेधितम् ॥ १५१ ॥**

अनेनेति आत्मना । शिवेनेति, स्वात्मैव हि परमेश्वरः शिवः—इति नः सिद्धान्तः इत्यभिप्रायः ॥ १५१ ॥

न चैवमस्यैव मन्त्रस्य वीर्यं यन्नीलपीताद्यनेकवर्णोदयद्वारेण स्वात्मसाक्षात्कारः अपि तु सर्वेषाम्—इत्याह—

**उपलक्षणमेतच्च सर्वमन्त्रेषु लक्षयेत् ।**

ननु सर्वेषां मन्त्राणां प्रतिनियतमेव फलं संभवेत्—इत्यविवादः । न हि अमृतबीजं मारणादि कर्तुमुत्सहते क्रूरबीजं वाप्यायनादि—इति कथं मन्त्रान्तर-निर्वर्त्यं कर्म मन्त्रान्तरेष्वपि भवेत् ?—इत्याशङ्क्याह—

**यद्यत्सङ्कल्पसंभूतं वर्णजालं हि भौतिकम् ॥ १५२ ॥**
**तत् संविदाधिक्यवशादभौतिकमिव स्थितम् ।**

यद्यन्नाम हि—

'विकल्पयोनयः शब्दा...................।'

---

प्रश्न—इस प्रकार लक्ष्य को प्राप्त आत्मा से इसका (= साधक का) क्या होगा ?—यह शङ्का कर कहते हैं—

एक ध्यान वाला (योगी) इस स्वप्रकाश आत्मा के द्वारा शिव के साथ (उसी प्रकार) एकता को प्राप्त हो जाता है जैसे पारद के द्वारा विद्ध ताँबा सोना बन जाता है ॥ १५१ ॥

इसके द्वारा = आत्मा के द्वारा । शिव के द्वारा—अपना आत्मा ही परमेश्वर शिव है यह हमारा सिद्धान्त हैं—यह अभिप्राय हैं ॥ १५१ ॥

नील पीत आदि अनेक वर्णो के उदय के द्वारा आत्मसाक्षात्कार होना केवल इसी मन्त्र की महिमा नहीं है बल्कि सभी मन्त्रों की हैं—यह कहते हैं—

यह (= उपर्युक्त कथन) उपलक्षण है । सभी मन्त्रों में इसे लगाना चाहिए ।। १५२- ।।

प्रश्न—सभी मन्त्रों का फल निश्चित हैं—यह सर्वसम्मत है । अमृतबीज मारण तर्पण नहीं कर सकता और क्रूरबीज (= जीवन) नहीं दे सकता तो फिर एक मन्त्र के द्वारा सिद्ध होने वाला यह क्रर्म दूसरे मन्त्रों से भी कैसे होगा?—यह शङ्का कर कहते हैं—

सङ्कल्प से उत्पन्न जो-जो वर्णसमूह भौतिक है वह (सब) संविद् की अधिकता के कारण अभौतिक जैसा हो जाता है ॥ -१५२-१५३- ॥

इत्यादिनीत्या सङ्कल्पसंभूतत्वात् 'भौतिकं' भेदानुप्राणितं मायीयं वर्णजातं तत्सर्वमेव संविदाधिक्यवशात् भौतिकत्वन्यग्भावनेन संविद एवोद्रेकादभौतिकमिव स्थितं, भेदरूपत्वेऽपि संविदद्वैतपरमार्थमेवेत्यर्थः । इदमुक्तं भवति—

यद्यपि संविद एवायं सकलः स्फारः, तथापि तस्या आधिक्येनाप्रतीतौ भेदमयत्वात् एषां प्रतिनियतार्थक्रियाकारित्वम्; आधिक्येन प्रतीतौ पुनः सर्वेषां स्वात्मसाक्षात्कारलक्षणमविशिष्टमेव फलमिति । यदुक्तम्—

'एवमेषां स्वरूपांशस्पर्शे शिवमयी स्थितिः ।
तदनाच्छुरणे भिन्नसंसारस्थितिवर्तनम् ॥' इति ॥ १५२ ॥

अतश्च सर्वेषामेव मन्त्राणां संविदात्मन्यनुपाधौ रूपे विश्रान्तस्ताद्रूप्यमेवासादयेत्—इत्याह—

**अतस्तथाविधे रूपे रूढो रोहति संविदि ॥ १५३ ॥**
**अनाच्छादितरूपायामनुपाधौ प्रसन्नधीः ।**

नन्विह सर्वमन्त्राणां स्वरूपे तावदविवादसिद्ध एव भेदः—इति स फलेऽप्यवश्यमापतेत् कारणभेदाधीनत्वात् तस्य, तत् कथमेवमुक्तम् ?—

---

"शब्द विकल्प से उत्पन्न होते हैं...।"

इत्यादि शास्त्र के अनुसार सङ्कल्प से उत्पन्न होने के कारण जो भी भौतिक = भेद से युक्त, मायीय वर्णसमूह है वह सभी संविद् की अधिकता के कारण भौतिकत्व के छिपा देने से संविद् का ही विस्फार होने से अभौतिक के समान स्थित हैं । भेदरूप होने पर भी संविद् के साथ अद्वय होने से परमार्थ ही हैं । स्पष्टार्थ यह हैं—यद्यपि यह समस्त प्रपञ्च संविद् का ही है तो भी उसकी अधिकता से प्रतीति न होने पर भेदमय होने से ये (पदार्थ) सीमित एवं नियत अर्थक्रिया करते हैं । और जब (संविद् की प्रतीति) अधिकता से होती हैं तब सबका फल आत्मसाक्षात्कार रूप सामान्य ही होता है । जैसा कि कहा गया है—

"इस प्रकार इनके स्वरूपांश का स्पर्श होने पर इनकी स्थिति शिवमयी होती है । और उसका स्पर्श न होने पर भेदमय संसार की सत्ता वर्त्तमान रहती हैं" ॥ १५२ ॥

इसलिए सभी मन्त्रों की संविदात्मक अनुपाधि रूप में विश्रान्ति होने से (योगी) तद्रूपता को ही प्राप्त करता है । यह कहते हैं—

**अतः अनावृतरूप वाली उपाधिरहित उस प्रकार की संविद् में वर्त्तभान योगी प्रसन्नचित्त होता हुआ आरूढ़ होता है ॥ -१५३-१५४- ॥**

प्रश्न—सब मन्त्रों के स्वरूप में भेद निर्विवादसिद्ध है—अतः वह फल में अवश्य आएगा क्योंकि वह (= फलभेद) कारणभेद के अधीन हैं, फिर ऐसा कैसे

इत्याशङ्क्याह—

**नीले पीते सुखे दुःखे संविद्रूपमखण्डितम् ॥ १५४ ॥**
**गुरुभिर्भाषितं तस्मादुपायेषु विचित्रता ।**

'गुरुभिः' वामनदत्ताचार्येण, भाषितमिति संवित्प्रकाशे । अनेनेदमुक्तं भवति—नीलादेर्वाच्यवाचकात्मनो विश्वस्य संविद्रूपत्वाविशेषात् न कश्चिद्वास्तवो भेदः संभवेदिति । ननु यद्येवं तत् कथमिदं वाच्यवाचकात्मवैचित्र्यमपह्नूयतां, नहि भातमभातं भवेत्, तदत्र किं प्रतिपत्तव्यम् ?—इत्याशङ्क्याह—'तस्मादुपायेषु विचित्रता' इति । एवं संवित्स्वातन्त्र्योल्लसितं यन्नामेदं वैचित्र्यं तदुपायमात्रविषयमेव पर्यवस्येत्, न तूपेयविषयमपीत्यर्थः । यदभिप्रायेणैव—

'संवित्तिफलभेदोऽत्र न प्रकल्प्यो मनीषिभिः ।' (मा०वि० २।२५)

इत्याद्युक्तम् ॥ १५४ ॥

एवमेकस्मिन्नेवोपेये प्राप्तव्ये परमियदुपायजातमुपदिष्टम्—इत्याह—

**उच्चारकरणध्यानवर्णैरेभिः प्रदर्शितः ॥ १५५ ॥**
**अनुत्तरपदप्राप्तावभ्युपायविधिक्रमः ।**

---

कहा गया?—यह शङ्का कर कहते हैं—

नील, पीत, सुख, दुःख में संविद् का रूप एक ही हैं ऐसा गुरु के द्वारा कहा गया है । इस कारण उपायों में विचित्रता (= अनेकता) होती हैं ॥ -१५४-१५५- ॥

गुरु = वामनदत्ताचार्य के द्वारा । कहा गया—संवित्प्रकाश (नामक ग्रन्थ में) । इससे यह उक्त होता है—घट आदि वाच्यवाचकरूप विश्व के संविद् रूप से अभिन्न होने के कारण वास्तविक कोई भेद सम्भव नहीं हैं । प्रश्न—यदि ऐसा है तो इस वाच्यवाचकरूप वैचित्र्य को कैसे छिपाया जाय ? (क्योंकि) जो प्रतीत हो रहा है वह अप्रतीत नहीं हो सकता । तो यहाँ क्या समझना चाहिए ?—यह शङ्का कर कहते हैं—इस कारण उपायों में विचित्रता है । इस प्रकार संवित् के स्वातन्त्र्य से उल्लासित जो यह वैचित्र्य है वह उपायमात्र विषयवाला ही रहेगा न कि उपेय को भी (अपना) विषय बनाएगा । जिस अभिप्राय से ही—

"बुद्धिमान् लोग यहाँ संविद्रूपी फल का भेद न समझें ।" (मा. वि. २।२५)

इत्यादि कहा गया है ॥ १५४ ॥

इस प्रकार एक ही उपेय को प्राप्त करने के विषय में इतने उपायसमूह का उपदेश किया गया—यह कहते हैं—

अनुत्तर पद की प्राप्ति के विषय में इन उच्चार करण ध्यान वर्ण के

ननूच्चारादीनामागमेऽप्यनेनैव क्रमेण पाठः—इति कथमिह तदुल्लङ्घनेन ध्यानोप्रक्रममेषां निर्देशः कृतः ?—इत्याशङ्क्याह—

**अकिञ्चिच्चिन्तनं वीर्यं भावनायां च सा पुनः ॥ १५६ ॥**
**ध्याने तदपि चोच्चारे करणे सोऽपि तद् ध्वनौ।**
**स स्थानकल्पने बाह्यमिति क्रममुपाश्रयेत् ॥ १५७ ॥**

'अकिञ्चिच्चिन्तनं' शांभवः । 'भावना' शाक्तः । सेति भावना । तदिति करणं । स्थानकल्पन इति षष्ठादाह्निकात् प्रभृति वक्ष्यमाणे । एवं पूर्वं पूर्वमुत्तरत्रोत्तरत्र वीर्यमिति पाठक्रममपहाय—

'यो हि यस्माद् गुणोत्कृष्टः स तस्मादूर्ध्वमिष्यते ।'
(मा०वि० २।६०)

इत्यादिनीत्यार्थक्रमावलम्बनेनान्यथैवं निर्देशः कृतः—इति बलीयस्त्वादयमेव क्रमः समाश्रयणीय इत्यर्थः ॥ १५७ ॥

ननु यद्येवं तत् किमनेनैव क्रमेणोपेयप्राप्तिर्भवेदुतान्यथापि ?—इत्याशङ्क्याह—

---

द्वारा उपायविधि का क्रम दिखाया गया ॥ -१५५-१५६- ॥

प्रश्न—आगम में भी उच्चार आदि का इसी क्रम से पाठ है तो यहाँ उसका उल्लङ्घन करके ध्यान को पहले रखते हुए इनका निर्देश क्यों किया गया ?—यह शङ्का कर कहते हैं—

भावना = (शाक्तोपाय) की अपेक्षा अकिञ्चित्चिन्तन (= शाम्भवोपाय), और वह (= भावना) ध्यान (= आणवोपाय) की अपेक्षा, और वह (= आणवोपाय) उच्चार की अपेक्षा, वह (= उच्चार) भी करण की अपेक्षा और वह (= करण) ध्वनि की अपेक्षा और वह (= ध्वनि) स्थानकल्पना की अपेक्षा क्रमशः बलवत्तर हैं । इसलिये बाह्य क्रम को अपनाना चाहिए ॥ -१५६-१५७ ॥

अकिञ्चित्चिन्तन = शाम्भवोपाय, भावना = शाक्तोपाय । सा = भावना । तत् = करण । स्थानकल्पना जो कि छठें आह्निक से आगे कही जायगी । इस प्रकार पूर्व-पूर्व उत्तरोत्तर की अपेक्षा बलवत्तर हैं इसलिए पाठक्रम का त्याग कर

"जो जिसकी अपेक्षा गुणों में उत्कृष्ट है वह उससे ऊपर माना जाता है ।" (मा. वि. २।६०)

इत्यादि नीति के द्वारा अर्थक्रम के अवलम्बन के कारण दूसरे प्रकार से निर्देश किया गया—इसलिए बलवत्तर होने के कारण इसी क्रम को अपनाना चाहिए ॥ १५७ ॥

**लङ्घनेन परो योगी मन्दबुद्धिः क्रमेण तु ।**

'पर' इति तीव्रशक्तिपातानुविद्धः । योगीति, परतत्त्वैक्यभाग्भवेदित्यर्थः ॥

ननु पूर्वं पूर्वमुत्तरस्योत्तरस्य वीर्यमित्युक्तेन किं स्यात् ?--इत्याशङ्क्याह—

**वीर्यं विना यथा षण्ठस्तस्याप्यस्त्यथ वा बलम्।**
**मृतदेह इवेयं स्याद् बाह्यान्तःपरिकल्पना ॥ १५८ ॥**

यथा पुंस्त्वापादकं वीर्यं विना पुरुषोऽपि 'षण्ठः' स्वकर्मण्यकिञ्चित्करः, अथवा तस्यापि चेष्टाद्यन्यथानुपपत्त्या किञ्चिद्वीर्यमस्ति—इत्यत्यन्तं जडप्रायत्वात् यथा शवशरीरमकिञ्चित्करम्, एवं स्थानकल्पनादिरूपा बाह्यान्तरुपायकल्पनापि निर्वीर्या सत्यकिञ्चित्करयेव भवेदित्यर्थः ॥ १५८ ॥

इदानीमाह्निकार्थमेव श्लोकस्य प्रथमार्धेनोपसंहरति—

**इत्याणवेऽनुत्तरताभ्युपायः प्रोक्तो नयः स्पष्टपथेन बाह्यः ।**

---

प्रश्न—यदि ऐसा है तो क्या इसी क्रम से उपेय की प्राप्ति भी होती है या दूसरे प्रकार से भी ?—यह शङ्का कर कहते हैं—

उत्कृष्ट योगी दूसरे क्रम से (= क्रम का उल्लङ्घन करके भी) भी (किन्तु) मन्दबुद्धि वाला (योगी) क्रम से (प्राप्त करता है) ॥ १५८- ॥

पर = तीव्र शक्तिपात वाला । योगी, परतत्त्व के साथ एकता वाला हो जाता है ।

प्रश्न—पूर्व-पूर्व उत्तरोत्तर की अपेक्षा बलवत्तर है—यह कहने से क्या (लाभ) ? ......यह शङ्का कर कहते हैं—

जिस प्रकार पौरूष का आधान करने वाले वीर्य के बिना पुरुष नपुंसक होता है; अथवा उसके पास भी (कुछ न कुछ) बल होता है (इसलिए) यह बाह्य अन्तर की कल्पना मानो मरे हुए शरीर के बारे में होती हैं ॥ -१५८ ॥

जिस प्रकार पुरुषत्व को लाने वाले वीर्य के बिना पुरुष भी नपुंसक अर्थात् अपने कर्म को करने में असमर्थ रहता है अथवा चेष्टा आदि की दूसरी तरह सिद्धि नहीं हो सकती इसलिसे (उसमें) कुछ वीर्य हैं ऐसा मान लेना चाहियें किन्तु अत्यन्त जड होने से जैसे मृत शरीर कुछ नहीं करता उसी प्रकार स्थान की कल्पना इत्यादि बाहरी और भीतरी उपाय की कल्पना वीर्यहीन होकर कुछ नही करेगी ॥ १५८ ॥

अब इस आह्निक के विषय का आधे श्लोक के द्वारा उपसंहार करते है—

बाह्यो नय इति उच्चारादि, इति शिवम् ॥

गुरुवरचरणप्रसादप्रध्वस्तसमस्तदुर्विकल्पौघः ।
विवरणमेतदरचयज्जयरथ इति पञ्चमाह्निके कश्चित् ॥

**॥ इति श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तविरचिते श्रीतन्त्रालोके श्रीजयरथविरचितविवेकाभिख्यव्याख्योपेते आणवोपाय-प्रकाशनं नाम पञ्चममाह्निकं समाप्तम् ॥ ५ ॥**

---

इस प्रकार आणवोपाय में अनुत्तरोपाय नामक बाह्य मार्ग स्पष्ट रूप से कहा गया ।

बाह्य नय = उच्चार आदि ।

**॥ इस प्रकार श्रीमदाचार्यअभिनवगुप्तपादविरचित श्रीतन्त्रालोक के पञ्चम आह्निक की डॉ॰ राधेश्याम चतुर्वेदी कृत 'ज्ञानवती' हिन्दी टीका सम्पूर्ण हुई ॥ ५ ॥**

॥ इति शिवम् ॥

**॥ इस प्रकार आचार्यश्रीजयरथकृत श्रीतन्त्रालोक के पञ्चम आह्निक की 'विवेक' नामक व्याख्या की डॉ॰ राधेश्याम चतुर्वेदी कृत 'ज्ञानवती' हिन्दी टीका सम्पूर्ण हुई ॥ ५ ॥**

# षष्ठमाह्निकम्

* विवेक *

कवलयितुं किल कालं कलयति यो व्यायतास्यतां सततम् ।
जयति स सुजयः साक्षात्संसारपराकृतौ सजयः ॥

इदानीमाणवोपायस्यैवाङ्गभूतमुच्चारादिप्रमेयचतुष्टयानन्तरोद्दिष्टं स्थानकल्पनाख्यं परमं प्रमेयं द्वितीयार्धेनावतारयितुमुपक्रमते—

**स्थानप्रकल्पाख्यतया स्फुटस्तु बाह्योऽभ्युपायः प्रविविच्यतेऽथ ॥ १ ॥**

अथशब्दोऽधिकारे । तेनेतः प्रभृत्याद्वादशाह्निकं यत्किंचिदुच्यते तत्सर्वं स्थानकल्पनाधिकारेण, इति पञ्चदशाह्निकात्प्रभृति पुनरेतदेव बाह्यस्थण्डिल-मण्डलाद्यधिकृत्याभिधीयते—इत्याग्रन्थपरिसमाप्तेः प्राधान्यात् स्थानकल्पनस्यैव सकलोऽयं प्रपञ्च इति ॥ १ ॥

---

* ज्ञानवती *

काल को निगलने के लिए जो मुख को खोलते हैं, संसार के विनाश के विषय में जयशील साक्षात् सुन्दर जयरूप वह (परमेश्वर) सदा सर्वोत्कृष्ट हैं ।

अब आणवोपाय की ही अङ्गभूत, उच्चार आदि चार प्रमेय के बाद नामित स्थानकल्पना नामक परमप्रमेय की (श्लोक के) उत्तरार्द्ध के द्वारा अवतारणा करने का उपक्रम करते हैं—

अब स्थानप्रकल्पना नाम से स्पष्ट बाह्य उपाय का विवेचन किया जा रहा है ॥ १ ॥

अथ शब्द प्रारम्भ अर्थ में (प्रयुक्त है) । इसलिए यहाँ से लेकर बारहवें आह्निक तक जो कुछ कहा जायगा वह सब स्थानकल्पनापूर्वक । पन्द्रहवें आह्निक से फिर यही (= स्थानकल्पना) बाह्य स्थण्डिल मण्डल आदि को विषय बनाकर वर्णित होगी । इस प्रकार ग्रन्थ की समाप्ति तक प्रधान होने के कारण यह सारा प्रपञ्च स्थानकल्पना का ही हैं ॥ १ ॥

तदेवाह—

**स्थानभेदस्त्रिधा प्रोक्तः प्राणे देहे बहिस्तथा ।**

एषामपि भेदान्तराणि सन्ति—इत्याह—

**प्राणश्च पञ्चधा देहे द्विधा बाह्यान्तरत्वतः ॥ २ ॥**
**मण्डलं स्थण्डिलं पात्रमक्षसूत्रं सपुस्तकम् ।**
**लिङ्गं तूरं पटः पुस्तं प्रतिमा मूर्तिरेव च ॥ ३ ॥**
**इत्येकादशधा बाह्यं पुनस्तद् बहुधा भवेत् ।**

'पुस्तं' लेपादिनिर्मिताकृतिः । मूर्तिर्गुर्वादिसंबन्धिनी । तदित्यानन्तर्याद् बाह्यं, पुनरित्येकादशविधत्वेऽपि । बहुधेति मण्डलादीनामप्येकशूलत्रित्रिशूलादिक्रमेण नानात्वात् ॥ ३ ॥

एवं स्वरूपतः स्थानभेदमभिधाय तद्गतं विधिमप्युपदेष्टुं प्रतिजानीते—

**तत्र प्राणाश्रयं तावद्विधानमुपदिश्यते ॥ ४ ॥**

तदेवाह—

---

वही कहते हैं—

स्थानभेद तीन प्रकार का कहा गया है—प्राण में, देह में, और बाहर ॥ २- ॥

इनके अवान्तर भेद भी हैं—यह कहते हैं—

प्राण पाँच प्रकार का है । देह दो प्रकार का है—बाह्य और आभ्यन्तर। मण्डल, स्थण्डिल, पात्र, अक्षमाला, पुस्तक, लिङ्ग, तूर, पट, पुस्त, प्रतिमा और मूर्त्ति ये ग्यारह प्रकार के बाह्य है । पुनः वह बहुत प्रकार का है ॥ -२-४- ॥

पुस्त = लेप आदि से निर्मित आकृति । मूर्त्ति—गुरु आदि से सम्बद्ध । तद् पद से अव्यवहितपूर्व होने के कारण बाह्य (का ग्रहण करना चाहिए) । पुनः (का तात्पर्य है) ग्यारह भेद होने पर भी । बहुधा का अर्थ हैं—एकशूल द्विशूल त्रिशूल आदि क्रम से अनेक होने के कारण ॥ २ ॥

इस प्रकार स्थानभेद का स्वरूपवर्णन कर उसमें वर्त्तमान विधि का उपदेश करने के लिए प्रतिज्ञा करते हैं—

प्राण जिसका आश्रय है (उस) विधान का उपदेश किया जा रहा हैं ॥ -४ ॥

वही कहते हैं—

**अध्वा समस्त एवायं षड्विधोऽप्यतिविस्तृतः ।**
**यो वक्ष्यते स एकत्र प्राणे तावत्प्रतिष्ठितः ॥ ५ ॥**

वक्ष्यत इति भुवनाध्वप्रकाशनादौ । 'प्राण' इति सामान्यस्पन्दनात्मनि । यदुक्तम्—

'षड्विधाध्वविभागस्तु प्राणैकत्र यथा स्थितः ।'
(स्व०तं० ४।२३२)

इति । विशिष्टे पुनः पदमन्त्रवर्णात्मा त्रिविध एव । यद्वक्ष्यति

'षड्विधादध्वनः प्राच्यं यदेतत्त्रितयं पुनः ।
एष एव स कालाध्वा प्राणे स्पष्टं प्रतिष्ठितः ॥'
(तं०आ० ६।३७) इति ॥ ५ ॥

तदेवोपपादयति—

**अध्वनः कलनं यत्तत्क्रमाक्रमतया स्थितम् ।**
**क्रमाक्रमौ हि चित्रैककलना भावगोचरे ॥ ६ ॥**

नन्वेतत्क्रमाक्रमात्मतयैव कस्मात्स्थितमित्याशङ्क्याह—'क्रमेत्यादि' । इह द्विधैव भावानामवभासः क्रमेणाक्रमेण च; तत्र क्रमेण यथा कार्यकारणादौ, अक्रमेण यथा

---

यह समस्त अध्वा छः प्रकार का होते हुए भी बहुत विस्तृत है जो कि कहा जायगा । वह एक जगह प्राण में प्रतिष्ठित हैं ॥ ५ ॥

कहा जायगा—भुवन अध्वा के वर्णन आदि में । प्राण में = सामान्य स्पन्दन रूप (प्राण) में । जैसा कि कहा गया है—

"छः प्रकार का अध्वविभाग तो प्राण में एक जगह स्थित हैं ।" (स्व. तं. ४।२३२)

विशेष रूप में पद मन्त्र और वर्ण रूप तीन ही प्रकार का है । जो कि कहेंगे—जो यह तीन हैं वह छः प्रकार के अध्वा की अपेक्षा पूर्ववर्त्ती है । यह वह कालाध्वा है जो प्राण में स्पष्टरूप से प्रतिष्ठित हैं । (तं. आ. ६।३७) ॥ ५ ॥

उसी को बतलाते हैं—

अध्वा का जो आकलन वह क्रम और अक्रम रूप में स्थित हैं । ये क्रम और अक्रम चित्र के दर्शन में स्पष्ट होते हैं । पदार्थों के विषय में (भी ऐसा समझना चाहिये) ॥ ६ ॥

प्रश्न—यह क्रम और अक्रम रूप में ही क्यों स्थित हैं?—यह शङ्का कर कहते हैं—क्रमाक्रम इत्यादि । पदार्थों का ज्ञान दो प्रकार से होता है—क्रम से और बिना

चित्रज्ञानादौ । स च चित्रे यदैकस्यैवैकदैव च कंचित्पूर्वकालभाविनं समानकाल-भाविनं च भावमपेक्ष्य क्रमेणाक्रमेण चावभासः—इति । तद्या नाम भावानामेवं 'कलना' परिच्छित्तिः स एव क्रमाक्रमात्मा इति ॥ ६ ॥

ननु सर्वमिदं जगत्संविल्लग्नमेवावभासतेऽन्यथा ह्यस्य भानमेव न भवेत्, संविदि च नित्यत्वात्कालयोगो नास्ति, इति कथमसौ तदनुषक्तस्य भावजातस्यापि स्यात् ?—इत्याशङ्क्याह—

**क्रमाक्रमात्मा कालश्च परः संविदि वर्तते ।**

नन्वेवं 'क्रमाक्रमकथातीतं संवित्तत्त्वं सुनिर्मलम्' इत्याद्युक्तं व्याहन्येत, सौगतमतान्तःपातश्च स्यात्—इत्याशङ्क्याह—

**काली नाम परा शक्तिः सैव देवस्य गीयते ॥ ७ ॥**

यन्नाम परस्य प्रकाशस्य कालेन योगः सास्य 'शक्तिः' स्वेच्छावभासितस्य प्रमातृप्रमेयाद्यात्मनो जगतस्तत्तद्रूपतया कलने सामर्थ्यं न पुनः स्वात्मनि कश्चिद-क्रमः क्रमो वा इति न ह्यग्नेर्दाहशक्तियोगे स्वात्मनि स्फोटाद्याविर्भावः ॥ ७ ॥

---

क्रम के । उनमें क्रम से (ज्ञान) जैसे कार्य कारण आदि में । अक्रम से जैसे-चित्र के ज्ञान आदि में । चित्र में एक का एक ही बार कभी पूर्वकालभावी कभी समानकाल भावी भाव की अपेक्षा क्रम से और अक्रम से अवभास होता है । तो जो भावों की इस प्रकार की कलना = परिच्छित्ति (= ज्ञान) होता है वही क्रम और अक्रमरूप काल है ॥ ६ ॥

प्रश्न—यह सब जगत् संविद् से युक्त होकर ही भासित होता है अन्यथा इसका भान ही नहीं होगा, और नित्य होने के कारण संविद् में काल का योग है नहीं तो उससे संलग्न पदार्थसमूह का वह (= कालयोग) कैसे होगा?—यह शङ्का कर कहते हैं—

क्रम और अक्रम रूप पर काल संविद् मे स्फुरित होता है ॥ ७- ॥

प्रश्न—ऐसा होने पर स्वच्छ निर्मल संवित्तत्त्व "क्रम और अक्रम की कथा से परे है ।"—इत्यादि कथन का व्याघात हो जायगा और बौद्धमत आ पड़ेगा?—यह शङ्का कर कहते हैं—

परमेश्वर की वही परा शक्ति काल नाम से कही जाती है ॥ -७ ॥

परप्रकाश का जो काल के साथ योग है वही इस (= परप्रकाश) की शक्ति है; (वही) अपनी इच्छा से अवभासित प्रमातृ प्रमेय आदि रूप को भिन्न-भिन्न रूप में रचने का सामर्थ्य है । (उस) आत्मा में कोई क्रम या अक्रम नहीं हैं । अग्नि का दाहशक्ति के साथ योग होने पर उस अग्नि में स्फोट आदि नहीं उत्पन्न होता ॥ ७ ॥

तदाह—

**सैव संविद् बहिः स्वात्मगर्भीभूतौ क्रमाक्रमौ ।**
**स्फुटयन्ती प्ररोहेण प्राणवृत्तिरिति स्थिता ॥ ८ ॥**

सैव कालशक्तियोगिनी संवित्स्वाविभागेनावस्थितौ क्रमाक्रमौ बहिः प्ररूढतयावभासयन्ती प्राणवृत्तिरिति स्थिता, प्राणनात्मतया प्रस्फुरितेत्यर्थः ॥ ८ ॥

ननु कथं नामेयं प्राणवृत्त्यात्मना प्रस्फुरिता—इत्याशङ्क्याह—

**संविन्मात्रं हि यच्छुद्धं प्रकाशपरमार्थकम् ।**
**तन्मेयमात्मनः प्रोज्झ्य विविक्तं भासते नभः ॥ ९ ॥**

यन्नाम हीदं प्रमातृप्रमेयात्मनो विश्वस्य स्वाविभागेनैवावभासनात्प्रकाशपरमार्थकम्, अत एव तदारूषणाया अभावाच्छुद्धं संविन्मात्रं तत्स्वस्वातन्त्र्यात् स्वात्मन्यपूर्णत्वावबिभासयिषया स्वाविभागेनावस्थितं विश्वात्म 'मेयं' आत्मनः सकाशात् 'प्रोज्झ्य' पृथक्कृत्य 'विश्वस्मादुत्तीर्णोऽहम्' इत्यामृश्य 'विविक्तं नभोऽवभासते' सकलभावशून्यत्वान्निरावरणरूपतया प्रस्फुरतीत्यर्थः ॥ ९ ॥

---

वही कहते हैं—

वही संविद् अपने से अभिन्न क्रम और अक्रम को प्ररोह के साथ बाहर प्रकट करती हुई प्राणवृत्ति के रूप में रहती हैं ॥ ८ ॥

वही = कालशक्ति वाली संवित् अपने से अविभक्तरूप में स्थित क्रम और अक्रम को बाहर स्पष्टतया अवभासित करती हुई प्राणवृत्ति के रूप में स्थित है = प्राणन के रूप में प्रस्फुरित हैं ॥ ८ ॥

प्रश्न—यह प्राणवृत्ति के रूप में क्यों स्फुरित हैं ?—यह शङ्का कर कहते हैं—

जो प्रकाश रूप परम स्वभाव वाला शुद्ध संविद् मात्र हैं वह मेय (= विश्व) को अपने से अलग कर पृथक् हुआ, आकाश के समान (= शून्य) भासित होता है ॥ ९ ॥

जो यह, प्रमातृ प्रमेय रूप विश्व को अपने से अभिन्न रूप में अवभासित करने से प्रकाशरूप परम स्वभाव वाला (है) इसलिए उस (= विश्व) के स्पर्श के अभाव के कारण शुद्ध संविन्मात्र है । वह अपने स्वातन्त्र्यवश अपने में अपूर्णता को अवभासित करने की इच्छा से अपने से अपृथक् रूप में स्थित विश्वरूप मेय को अपने से अलग करके । 'मैं विश्व से परे हूँ,' ऐसा आमर्श कर विविक्त हुआ आकाशवत् भासित होता है अर्थात् सकल भावों से शून्य होने के कारण निरावरण रूप में प्रस्फुरित होता है ॥ ९ ॥

अत एवाह—

**तदेव शून्यरूपत्वं संविदः परिगीयते ।**

'शून्यरूपत्वम्' इति शून्यप्रमातृत्वमित्यर्थः । शून्यत्वं चास्य सर्वस्य संवेद्यस्य संक्षयात् न तु संविदोऽपि, तथात्वे हि निखिलमिदमनेलमूकप्रायं स्यात् । यदुक्तम्—

'अशून्यं शून्यमित्युक्तं शून्यं चाभाव उच्यते ।
अभावः स समुद्दिष्टो यत्र भावाः क्षयं गताः ॥'

(स्व० ४।२९१) इति ।

'सर्वालम्बनधर्मैश्च सर्वसत्त्वैरशेषतः ।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः ॥' इति च ॥

एतच्च परमुपेयमितो बाह्यानामित्याह—

**नेति नेति विमर्शेन योगिनां सा परा दशा ॥ १० ॥**

सेयं—

'न भावो नापि चाभावो मध्यमाप्रतिपत्तितः ।'

---

इसीलिए कहते हैं—

वही संविद् की शून्यरूपता कही जाती है ॥ १०- ॥

शून्यरूपता = शून्यप्रमातृता । इस समस्त संवेद्य का क्षय होने से, न कि संविद् का भी (क्षय होने से) शून्यता है । क्योंकि वैसा पर यह सब अनेल (= अवर्णनीय) मूकप्राय हो जायेगा । जैसा कि कहा गया है—

"अशून्य को शून्य कहा गया है । और शून्य अभाव को कहा जाता है । अभाव उसे कहा गया है जहाँ भाव नाश को प्राप्त हो गये होते हैं ।" (स्व. तं. ४।२९१)

और

"(शून्य का तात्पर्य है) सभी आलम्बन धर्मों से, सभी सत्त्वों से और सभी क्लेशों तथा वासनाओं से पूर्णतः शून्य, न कि परमार्थतः शून्य ॥ ९ ॥

और यह इससे बाहर रहने वालों के लिए अन्तिम लक्ष्य है—यह कहते हैं—

वह नहीं हैं-नहीं है—इस प्रकार के विमर्श के द्वारा (ज्ञाप्य) योगियों की परा दशा है ॥ -१० ॥

सा यह—

'न भाव है और न अभाव है किन्तु मध्यमा प्रतिपत्ति (= भावात्मक एवं

इत्याद्युक्तयुक्त्या भावाभावविषयेण नेति नेति परामर्शद्वयेन मध्यमपदावेश-शालिनां 'योगिनां' 'परा' शून्यातिशून्यरूपा 'दशा' विश्रान्तिस्थानमित्यर्थः । यदाहुः—

'शून्यतावस्थितः पश्चात्संवेदनविवर्जितः ।
निर्वाणः कृष्णवर्त्मेव निरुपाख्यो भवत्यसौ ॥' इति ॥ १० ॥

स एव च शून्यप्रमाता बहिर्मुखीभवन्प्राणप्रमातृतामासादयति—इत्याह—

**स एव खात्मा मेयेऽस्मिन्भेदिते स्वीक्रियोन्मुखः ।**
**पतन्समुच्छलत्त्वेन प्राणस्पन्दोर्मिसंज्ञितः ॥ ११ ॥**

स एव च 'खात्मा' शून्यप्रमाता—

'....................अभिलाषो मलोऽत्र तु ।' (स्व०तं० ४-१०४)

इत्याद्युक्तेरपूर्णम्मन्यतात्मकाणवमलयोगात्साकाङ्क्षतया पुनस्तत्स्वीकरणोन्मुखः सन् स्वस्मात् 'भेदिते' पृथक्कृतेऽस्मिन् नीलसुखादिरूपे 'मेये समुच्छलत्त्वेन पतन्' बहिर्मुखीभवन् प्राणादिशब्दव्यपदेश्यो भवेदित्यर्थः । किंचिच्चलनात्मनः स्वविमर्श-रूपस्य स्पन्दनस्यैवायमाद्यः प्रसरः—इत्युपचारात्तच्छब्दव्यपदेश्यो न तु स एवायं,

---

अभावात्मक दोनों सत्त के विसर्जन) से, इत्यादि कही गई युक्ति से भाव और अभाव विषय वाले नेति-नेति इस दो परामर्श से (ज्ञाप्य) मध्यमपद के आवेश वाले योगियों की (यह) परा = शून्यातिशून्य रूप वाली दशा = विश्रामस्थान है । जैसा कि कहते हैं—शून्यता में स्थित और बाद के संवेदनो से रहित यह बुझी हुयी अग्नि के समान निरूपारव्य (अवक्तव्य) हो जाता है ॥ १० ॥

और यही शून्य प्रमाता बहिर्मुख होने पर प्राण प्रमाता बन जाता है—यह कहते हैं—

वही शून्यप्रमाता जब स्वीकार की ओर उन्मुख होता है तब पृथक् किए गए इस मेय के विषय में उच्छलत्ता के कारण गिरता हुआ प्राण, स्पन्द ऊर्मि संज्ञा वाला हो जाता है ॥ ११ ॥

वही खात्मा = शून्य प्रमाता

'यहाँ इच्छा ही मल है ।' (स्व.तं. ४।१०४)

इत्यादि उक्ति के द्वारा अपूर्णमन्यता रूप आणवमल से संपृक्त होने पर साकाङ्क्ष होने के कारण पुनः उसको स्वीकार करने की ओर उन्मुख होता हुआ, अपने से भेदित = अलग किए गए, इस घट सुख आदि रूप मेय के विषय में समुच्छलत्ता के कारण गिरता हुआ = बहिर्मुख होता हुआ प्राण आदि शब्दों से व्यवहार्य होता है । कुछ चलने वाला स्वविमर्श रूप स्पन्दन का ही यह प्रथम प्रसार है—इस कारण गौणरूप में उस शब्द के द्वारा व्यवहार्य होता है न कि वही यह है

तस्य शून्यप्रमात्रुल्लासादप्यूर्ध्वभावात् । एवमूर्मिशब्दादावुत्तरत्रापि ज्ञेयम् ॥ ११ ॥

यदभिप्रायेणैव भट्टश्रीकल्लटादयोऽप्येवमूचुः—इत्याह—

**तेनाहुः किल संवित्प्राक्प्राणे परिणता तथा ।**
**अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ॥ १२ ॥**

यद्यपि शून्यतावभासनपुरःसरं संवित्प्राणरूपतया परिस्फुरिता तथापि तदवभासनेऽस्या न कश्चिद्रूपान्तरोपग्रहः—इत्युक्तं 'प्राक् संवित्प्राणे परिणता' इति। तैरप्येतन्निर्मूलमेव नोक्तम्—इत्यागमोऽपि संवादितः 'अन्तःकरणेत्यादिना' । अन्तःकरणानां 'तत्त्वं' सारभूता बुद्धिस्तस्य बुद्धिप्रमातुरित्यर्थः । तेन बुद्धिप्रमातुरित्यर्थः । तेन बुद्धिप्रमातुः पूर्वं प्राणोल्लासः—इति सिद्धम् । अन्यथा कथं स तस्याश्रयः स्यात् ॥ १२ ॥

एवमयमेव परस्याः संविदः प्रथमः परिस्पन्दः—इति तदभेदवृत्त्यैव सर्वत्रास्य व्यवहारः—इत्याह—

**इयं सा प्राणनाशक्तिरान्तरोद्योगदोहदा ।**
**स्पन्दः स्फुरत्ता विश्रान्तिर्जीवो हृत्प्रतिभा मता ॥ १३ ॥**

'आन्तर' आद्यो योऽसौ 'उद्योग' उद्यन्तृतात्मा परिस्पन्दस्तत्र 'दोहदो'ऽभिलाषो

---

(इस प्रकार), क्योंकि शून्य प्रमाता के उल्लास के बाद उसकी सत्ता होती है । इसी प्रकार बाद वाले ऊर्मि आदि शब्दों के बारे में भी जानना चाहिए ॥ ११ ॥

इसी अभिप्राय से भट्ट कल्लट आदि ने भी ऐसा कहा है—यह कहते हैं—

इसलिए कहते हैं कि संवित् पहले प्राणरूप में परिणत हई । (आगम भी हैं कि)—वायु अन्तःकरणों के तत्त्व की आश्रयता को प्राप्त हुई ॥१२॥

यद्यपि पहले शून्य रूप में अवभासन होने पर संवित् प्राण के रूप में स्फुरित हुई तथापि उस (= शून्यता के) अवभासन मे इसका कोई रूपान्तर नहीं हुआ—इसलिए कहा गया कि 'संवित् पहले प्राणरूप में परिणत हुई' । उसे (विद्वान्) ने भी इसे बिना प्रमाण के नहीं कहा । एतदर्थ—'अन्तःकरण' इत्यादि के द्वारा आगम भी साथ में कहा गया । अन्तःकरणों का तत्त्व = सारभूत = बुद्धि उसका अर्थात् बुद्धिप्रमाता का । इसलिए बुद्धिप्रमाता के पूर्व प्राण का उल्लास होता है । अन्यथा वह (प्राणवायु) कैसे उस (= अन्तःकरण तत्त्व) का आश्रय होगा ॥ १२ ॥

इस प्रकार यही पर संविद् का प्रथम स्पन्द है इसलिए उससे अभिन्न रूप में ही सर्वत्र इसका व्यवहार होता है—यह कहते हैं—

वह यह प्राणन शक्ति (जो कि) भीतरी परिस्पन्द के अभिलाष वाली है, स्पन्द, स्फुरत्ता, विश्रान्ति, जीव, हृदय और प्रतिभा कही गई है ॥१३॥

यस्याः सा तदेकनिष्ठेत्यर्थः ॥ १३ ॥

नन्वेवमुल्लसिताया अस्याः किं प्रयोजनम् ?—इत्याशङ्क्याह—

**सा प्राणवृत्तिः प्राणाद्यै रूपैः पञ्चभिरात्मसात् ।**
**देहं यत्कुरुते संवित्पूर्णस्तेनैष भासते ॥ १४ ॥**

सेयं सामान्यपरिस्पन्दात्मा प्राणवृत्तिः, पञ्चभिः प्राणापानाद्यै रूपैर्यत्तदन्तर्बहिष्करणाद्याक्रान्तं पाञ्चभौतिकं 'देहमात्मसात्कुरुते' व्याप्यावतिष्ठते तेनैष देहो घटादिवत्संवेद्यत्वेऽपि संवित्पूर्णो भासते संवेत्तृतया प्रथत इत्यर्थः । अत एव मूढानामयं भ्रमो यच्चैतन्यविशिष्टात्कायादन्यः कश्चिन्नास्ति इति । यदुक्तम्—

'चैतन्यखचितात्कायान्नात्मान्योऽस्तीति मन्वते ।' इति ॥ १४ ॥

तदाह—

**प्राणनावृत्तितादात्म्यसंवित्खचितदेहजाम् ।**
**चेष्टां पश्यन्त्यतो मुग्धा नास्त्यन्यदिति मन्वते ॥ १५ ॥**

'मुग्धा' इति देहात्मनोर्विवेकमजानानाः । अयमेषां भावः—भूतान्येव हि

---

आन्तर = पहला, जो यह उद्योग = उद्यम रूप परिस्पन्द, उस विषय में दोहद = अभिलाषा, है जिसकी, वह अर्थात् इसी एक इच्छा वाली ॥ १३ ॥

प्रश्न—इस प्रकार उल्लासित इस (= प्राणशक्ति) का क्या प्रयोजन है ?—यह शङ्का कर कहते हैं—

वह प्राणवृत्ति पाँच प्राण आदि रूपों से देह को जो आत्मसात् करती है उससे यह (देह) संवित्पूर्ण भासित होता है ॥ १४ ॥

यह सामान्य परिस्पन्द रूप प्राणवृत्ति पाँच = प्राण अपान आदि रूपों के द्वारा जो भीतरी एवं बाहरी इन्द्रिय आदि से आक्रान्त पञ्चभौतिक शरीर को आत्मसात् करता है = व्याप्त करके स्थित रहता है, उससे यह देह घट आदि के समान वेद्य होते हुए भी संवित् से परिपूर्ण भासित होता है अर्थात् ज्ञाता के रूप मे प्रसिद्ध होता है । इसलिए मूर्खों को यह भ्रम होता है कि चैतन्य विशिष्ट शरीर से अन्य कोई नहीं हैं । जैसा कि कहा गया है—

चैतन्यविशिष्ट शरीर से भिन्न आत्मा नहीं है—ऐसा (चार्वाक लोग) मानते हैं ॥ १४ ॥

वह कहते हैं—

मूर्ख लोग प्राणन वृत्ति के साथ तादात्म्य को प्राप्त संवित् से युक्त देह से उत्पन्न चेष्टा को देखते हैं इसलिए दूसरा नहीं हैं—ऐसा मानते हैं ॥ १५ ॥

मृदाद्यवस्थायामचेतनान्यपि सुराकारतया परिणता गुडपिष्टादय इव मदशक्तिं, शरीराकारपरिणतानि चैतन्यं प्रतिपद्यन्ते, कालान्तरे च परिणामविशेषभाक्त्वाच्च तच्छून्यतामुपगच्छन्ति, तावन्तं च कालं चैतन्यानपायात्स्मृत्यनुसन्धानादिव्यवहार-निपुणतया चेष्टन्ते—इति किमन्येन तदतिरिक्तेनात्मनेति ॥ १५ ॥

एतदधिशयाना एव 'चार्वाका' इत्युच्यन्ते—इत्याह—

**तामेव बालमूर्खस्त्रीप्रायवेदितृसंश्रिताम् ।**
**मतिं प्रमाणीकुर्वन्तश्चार्वाकास्तत्त्वदर्शिनः ॥ १६ ॥**

तामेव मतिमिति, 'चैतन्यविशिष्टः कायः पुरुषः' इत्याद्युक्त्या चैतन्यखचितो देह एवात्मा न पुनस्तदतिरिक्तः कश्चित्—इत्येवंरूपाम् । बालादिसंश्रयेणास्या महाजनानुपसेव्यत्वं दर्शितम् । प्रमाणीकुर्वन्त इति, देहादूर्ध्वमपि यदि कश्चित्त-दतिरिक्त आत्मा संभवेत्तस्य पूर्वशरीरमपहाय शरीरान्तरमधितिष्ठत एतच्छरीर-शैशवादिदशानुभूतार्थस्मरणवत् पूर्वपूर्वशरीरानुभूतार्थस्मरणमपि भवेत् । न हि तस्य शरीरभेदेऽपि नित्यत्वात्स्मरणविशेषे कारणं किंचिदुत्पश्यामो येनेह जन्मन्येवानुभूतं

---

मुग्ध = शरीर और आत्मा के भेद को न जानने वाले । उनका यह विचार है—महाभूत ही मिट्टी आदि की अवस्था में जड़ रहते हुए भी, जैसे गुड जौ आदि सुरा के आकार में परिणत होने पर मद शक्ति को, उसी प्रकार शरीर के आकार में परिणत हो कर चैतन्य को प्राप्त होते हैं और कालान्तर में विशिष्ट परिणाम के कारण उस (= चैतन्य) से शून्य हो जाते हैं । उतने काल तक चैतन्य के नष्ट न होने से स्मृति अनुसन्धान आदि व्यवहार मे निपुण के समान चेष्टा करते हैं—इस प्रकार उससे (= पञ्चमहाभूत से) अतिरिक्त आत्मा (को मानने) से क्या लाभ? ॥ १५ ॥

इसको मानने वाले ही चार्वाक कहे जाते हैं—यह कहते हैं—

**बालक मूर्ख और स्त्री के सदृश ज्ञाताओं में रहने वाली इसी बुद्धि को प्रमाण मानने वाले तत्त्वदर्शी चार्वाक हैं ॥ १६ ॥**

उसी बुद्धि को 'चैतन्य से व्याप्त शरीर ही आत्मा है' इत्यादि उक्ति के द्वारा चैतन्य से युक्त शरीर ही आत्मा है उससे भिन्न कोई नहीं—इस प्रकार की (बुद्धि)। बाल आदि के द्वारा माने जाने से इस (बुद्धि) का वृद्ध लोगों के द्वारा न स्वीकृत होना सङ्केतित है । प्रमाण मानते हुए यदि शरीर के आगे भी कोई उससे भिन्न आत्मा संभव होता तो, जैसे इस शरीर में शैशव आदि अवस्था में अनुभूत विषयों का स्मरण होता है उसी प्रकार पूर्व शरीर को छोड़कर दूसरी शरीर धारण करने वाला वह पहले-पहले शरीरों मे अनुभूत विषयों का स्मरण करता । शरीर भिन्न होने पर भी उसके नित्य होने के कारण विशिष्ट संस्मरण होने में हम कोई कारण नहीं देखते जिससे (वह) इस जन्म मे ही अनुभूत (पदार्थ) का स्मरण करता है

स्मरति नान्यजन्मानुभूतम्—इति तस्मादूर्ध्वमन्यः कश्चिन्नात्मास्तीत्येव युक्तम् । यच्छ्रुतिरपि—

'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु-
विनश्यति न प्रेत्य संज्ञास्ति' (बृ०आ०उ० ४।५।१३)

इति । अतश्च परलोकादिचिन्तामपास्य यावज्जीवं सुखमेवासितव्यम्—इत्येषां तत्त्वमित्युक्तं 'तत्त्वदर्शिन' इति । यदाहुः—

'यावज्जीवं सुखं जीवेन्नास्ति मृत्युरगोचरः ।
भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः ॥' इति ॥ १६ ॥

नन्वेवं तत्त्वमनुशीलयतामेषां किं स्यात् ?—इत्याशङ्क्याह—

**तेषां तथा भावना चेद्दार्ढ्यमेति निरन्तरम् ।**
**तद्देहभङ्गे सुप्ताः स्युरातादृग्वासनाक्षयात् ॥ १७ ॥**

'सुप्ता' इति अपवेद्यप्रलयाकलप्राया इत्यर्थः ॥ १७ ॥

तद्वासनाक्षये त्वेषां किं भवेत् ?—इत्याशङ्क्याह—

---

और दूसरे जन्म में अनुभूत का नहीं । इसलिए उससे ऊपर कोई आत्मा नाम की चीज नहीं हैं यही ठीक हैं । श्रुति भी है—

विज्ञानघन ही इन महाभूतों से उठकर उन्हीं में लीन हो जाता है । इसलिए मरने के बाद संज्ञा नहीं हैं । (बृ. उ. ४।५।१३)

इसलिए परलोक आदि की चिन्ता को छोड़कर जीवनपर्यन्त सुख से रहना चाहिए—यही इनका तत्त्व है । इसलिए कहा गया—तत्त्वदर्शी लोग । जैसा कि कहा है—

जीवनपर्यन्त सुख से जीना चाहिये । मृत्यु नहीं आएगी ऐसा नहीं है । भस्म हुए और शान्त (शरीर) का पुनः आगमन कैसा ॥ १६ ॥

प्रश्न—इस प्रकार तत्त्व का अनुशीलन करने वाले इन लोगों का क्या होता है?—यह शङ्का कर कहते हैं—

यह उनकी उस प्रकार की भावना निरन्तर पुष्ट होती गई तो उस शरीर के मर जाने के बाद उस प्रकार की वासना के नष्ट होने तक वे सुप्त रहेंगे ॥ १७ ॥

सोए रहेंगे—अपवेद्य प्रलयाकल के समान ॥ १७ ॥

प्रश्न—उस वासना का क्षय होने पर इनका क्या होता है ?—यह शङ्का कर कहते हैं—

**तद्वासनाक्षये त्वेषामक्षीणं वासनान्तरम् ।**
**बुद्धं कुतश्चित्संसूते विचित्रां फलसम्पदम् ॥ १८ ॥**

नन्वेषां सांख्यादिभिरपि साम्यं यत्तेषामप्येवंप्रायैव मुक्तिः, पुनरपि तत्तद्वासनानुसारं विचित्रफलोपभोगस्योदयात् । यद्वक्ष्यति—

'सांख्यवेदादिसंसिद्धाञ्छ्रीकण्ठस्तदहर्मुखे ।
सृजत्येव पुनस्तेन न सम्यङ्मुक्तिरीदृशी ॥'

(तं० ६।१५३) इति ।

तत्सर्वत्रास्यैव कथमवरतया निर्देशः । यदाहुः—'चार्वाकास्तु वराकाः प्रतिक्षेप्तव्या एव कः क्षुद्रतर्कस्य तदीयस्येह गणनावसरः' इति । तत्किमेतत् ?—इत्याशङ्क्याह—

**अदार्ढ्यशङ्कनात्प्राच्यवासनातादवस्थ्यतः ।**
**अन्यकर्तव्यशैथिल्यात्संभाव्यानुशयत्वतः ॥ १९ ॥**
**अतद्रूढान्यजनताकर्तव्यपरिलोपनात् ।**
**नास्तिक्यवासनामाहुः पापात्पापीयसीमिमाम् ॥ २० ॥**

यदप्यस्मदपेक्षया दर्शनान्तराणां तुल्यमेव पापत्वं तथापि नास्तिक्यवासनाया-

---

उस वासना का क्षय होने पर दूसरी वासनायें जो कि क्षीण नहीं हुई हैं, कहीं से जाग कर विचित्र फलों को उत्पन्न करती हैं ॥ १८ ॥

प्रश्न—इनकी सांख्य आदि से भी समानता है क्योंकि उनकी भी मुक्ति लगभग ऐसी ही है । क्योंकि बार-बार भिन्न-भिन्न वासनाओं के अनुसार विचित्र फलों के उपभोग का उदय होता है । जैसा कि कहेंगे—

"सांख्य वेद आदि के मार्गों के द्वारा सिद्धि को प्राप्त लोगों की, भगवान् अनन्तनाथ दिन के प्रारम्भ में पुनः सृष्टि करते ही हैं । इसलिए उनकी इस प्रकार की पूर्ण मुक्ति नहीं हैं" ॥ १८ ॥ (तं. आ. ६।१५३)

तो फिर उसी का ही सबसे निकृष्ट रूप में क्यों निर्देश किया गया । जैसा कि कहते हैं—बेचारे चार्वाक तो खण्डन करने योग्य हैं ही । उसके क्षुद्र तर्क की गणना का यहाँ कहाँ अवसर हैं ? तो यह क्या है ?—यह शङ्का कर कहते हैं—

**दृढ़ता की शङ्का न होने से, प्राचीन वासना के उसी रूप में रहने से, दूसरे कर्त्तव्यों के कारण (इसके) शिथिल होने पर सम्भावित पश्चात्ताप से, रूढ अन्य (दर्शनों के अनुयायी) जनसमूह के कर्त्तव्य का लोप न होने से, अन्य पापी (दर्शनों) की अपेक्षा, इस नास्तिक वासना को अधिक पापवाली कहा गया है ॥ १९-२० ॥**

स्ततोऽप्यतिशयेन पापत्वं, यतः 'प्राच्या' अनिषेध्यत्वात्पूर्वभाविनी येयमास्तिक्य-वासना तस्यास्तादवस्थ्यं । नहि नास्तिक्यवासनाया दार्ढ्येन प्ररोहोऽस्ति येनैतदुपरमो भवेन्निर्मूलत्वेनादार्ढ्यस्यात्राशङ्क्यमानत्वात् । यथा परं ब्रह्म मूलत्वेना-वलम्ब्य प्रपञ्चो मिथ्या—इत्याद्युच्यमानं दार्ढ्येन प्ररोहमियान्नैवमेतत्; आत्मनो हि नास्तित्वे किमन्यदवशिष्यते यन्नामाजडं मूलभूतमधिकृत्य सर्वमिदं सुव्यवस्थितं स्यात्; जडानामेव च परिणामो भवेदिति न चेतनत्वेनासौ युज्यते—इत्यन्यैर्बहूक्तमिति तत एवावधार्यम् । अत एवास्तिक्यवासनायास्तादवस्थ्येन 'अन्येषां' दर्शनान्तरस्थानाम् 'अग्निहोत्रं जुहुयात्', 'न हिंस्यात्सर्वभूतानि' इत्याद्यात्मना विधिनिषेधरूपेण 'कर्तव्येन' शैथिल्यमस्या जायते । यदात्मनोऽस्तित्वे यदि कैश्चित्पारलौकिकं किंचिदनुष्ठीयते तद्यावद्दूरे आस्ताम्; आत्मनः पुनर्नास्तित्वे-ऽप्यन्यैः कुशलप्रवृत्तिरकुशलविरतिश्च क्रियते—इत्यत्र निमित्तं किंचित्संभवेत्, अन्यथा सर्व एव किमेवं कुर्युः । अस्माकं च किंचिदपि कर्तव्यं नास्ति—इत्यस्थान एवास्माभिर्भ्रान्तं, किमिदं व्यामूढैरिवासितम्—इत्येवमात्मा पश्चात्तापोऽप्यत्र संभावनीयस्तस्मिन्नुत्पन्ने सति सुखमेव न्यायोपन्यासकदर्थनां परिहृत्य—

'सन्दिग्धेऽपि परे लोके त्याज्यमेवाशुभं बुधैः ।

---

यद्यपि हमारी अपेक्षा अन्य दर्शनों का पापी होना समान ही है तो भी नास्तिक्यवासना उन से भी अधिक पापवाली है । क्योंकि प्राच्य = निषेध्य न होने के कारण पहले वर्त्तमान जो यह आस्तिक्यवासना है वह उसी प्रकार रहती है; नास्तिक्य वासना प्रबलतर रूप में नहीं उत्पन्न होती जिससे यह (आस्तिक्य वासना) शान्त हो जाय क्योंकि (नास्तिक्यवासना के) निर्मूल होने के कारण यहाँ अदृढता की आशङ्का होती हैं । जिस प्रकार परम ब्रह्म को आधार मान कर (यह) प्रपञ्च मिथ्या है—इत्यादि वचन दृढ़तापूर्वक उद्भूत होता है वैसा यह नहीं है । आत्मा के न रहने पर दूसरा और क्या बचेगा जिस चेतन आधार को मान कर इस सबकी सुव्यवस्था होगी । जडों का ही परिणाम होता है इसलिए इस (= जड़) को चेतन नहीं कहा जा सकता ऐसा दूसरे लोगों ने बहुत कहा है—इसलिए वहीं से समझ लेना चाहिए। इसलिए आस्तिक्यवासना के तदवस्थ रहने से, अन्य = दूसरे दर्शनों के अनुयायियों, का 'अग्निहोत्र करना चाहिए ।' 'सब प्राणियों की हिंसा नहीं करनी चाहिए ।' इत्यादि विधिनिषेधरूप कर्त्तव्य से इस =(नास्तिक्य भावना) की शिथिलता हो जाती हैं । आत्मा के होने पर यदि कुछ लोग कुछ पारलौकिक अनुष्ठान करते हैं तो वह तो दूर की बात रही आत्मा के न होने पर भी दूसरे लोग उत्कृष्ट कार्य में प्रवृत्ति और अनुत्कृष्ट कार्य से निवृत्ति करते हैं—तो यहाँ कुछ कारण अवश्य होना चाहिए अन्यथा सभी लोग ऐसा क्यों न करने लगें । हमारा तो कोई कर्त्तव्य ही नहीं हैं फिर हम लोग गलत जगह घूम रहें हैं । (हम) मूर्खों ने क्या कर डाला—इत्यादि रूप पश्चात्ताप भी यहाँ सम्भव हैं । उसके उत्पन्न होने पर आसानी से न्यायपूर्वक प्राप्त निन्दा को छोड़कर –

यदि नास्ति ततः किं स्यादस्ति चेन्नास्तिको हतः ॥'

इत्यादिना मित्रसंमतेनाप्युपदेशेन तस्यामास्तिक्यवासनाया रूढयान्यया दर्शनान्तरस्थया जनतयावश्यमेवास्याः परिलोपः कार्यः—इति ॥ २० ॥

तदेवमत्र प्रसक्तानुप्रसक्तिकया परदर्शनकथा मा प्रसाङ्क्षीत् इति प्रकृतमेवानुसरति—

**अलमप्रस्तुतेनाथ प्रकृतं प्रविविच्यते ।**

तदेवाह—

**यावान्समस्त एवायमध्वा प्राणे प्रतिष्ठितः ॥ २१ ॥**
**द्विधा च सोऽध्वा क्रियया मूर्त्या च प्रविभज्यते ।**

द्विधेति देशकालभेदेन । तत्र क्रियया कालाध्वा प्रविभज्यते मूर्त्या च देशाध्वा । यदुक्तम्—

'मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ ।
क्रियावैचित्र्यनिर्भासात्कालक्रममपीश्वरः ॥'

(ई० प्र० २।१।५) इति ॥ २१ ॥

---

"पर लोक के सन्दिग्ध होने पर भी विद्वान् को चाहिए कि (वह) अशुभ (कार्यों) का त्याग कर दे । यदि (परलोक) नहीं है तो क्या होगा (= कोई नुकसान नहीं) और यदि है तो नास्तिक तो मारा गया ।"

इत्यादि मित्रसम्मत उपदेश के द्वारा आस्तिक्यवासना के उत्पन्न होने पर, रूढ अन्य = दूसरे दर्शनों में आस्था रखने वाली जनता, के द्वारा अवश्य ही इस (= नास्तिकवासना) का लोप कर दिया जायगा ॥ २० ॥

तो इस प्रकार यहाँ प्रसङ्गानुप्रसङ्ग के द्वारा दूसरे दर्शनों का वर्णन न आ पड़े इसलिए प्रस्तुत का ही अनुसरण करते हैं—

अप्रस्तुत का कथन समाप्त कर अब प्रस्तुत का विवेचन करते हैं ॥ २१- ॥

वही कहते हैं—

"यह जितना समस्त अध्वा प्राण में प्रतिष्ठित है वह अध्वा क्रिया और मूर्त्ति के द्वारा दो प्रकार से विभक्त होता है ॥ -२१-२२- ॥

दो प्रकार का—देश और काल के भेद से । उनमें क्रिया के द्वारा कालाध्वा का विभाग होता है और मूर्त्ति के द्वारा देशाध्वा का । जैसा कि कहा गया है—

"यह ईश्वर मूर्त्ति की विचित्रता से देशक्रम का आभास कराता है और क्रिया वैचित्र्य के निर्भास से काल क्रम का" ॥ २१ ॥ (ई. प्र. २।१।५)

ननु—

'अध्वा समस्त एवायं चिन्मात्रे संप्रतिष्ठितः ।
यत्तत्र नहि विश्रान्तं तन्नभःकुसुमायते ॥' (तं० ८।३)

इत्यादिवक्ष्यमाणनीत्यास्य संविदि प्रतिष्ठितत्वं युक्तं न जडात्मनि प्राणे ?—इत्याशङ्क्याह—

**प्राण एव शिखा श्रीमत्त्रिशिरस्युदिता हि सा ॥ २२ ॥**
**बद्धा यागादिकाले तु निष्कलत्वाच्छिवात्मिका ।**

'शिखा परिमिता शक्तिर्भैरवस्य तु कथ्यते ।
क्रियाशक्तिरिति ख्याता...................... ॥' इति ॥ २२ ॥

ननु को नामास्या बन्धो येन यागादौ निष्कलत्वाच्छिवात्मिकेयं स्यात् ?—इत्याशङ्क्याह—

**यतोऽहोरात्रमध्येऽस्याश्चतुर्विंशतिधा गतिः ॥ २३ ॥**
**प्राणविक्षेपरन्ध्राख्यशतैश्चित्रफलप्रदा ।**

यत्षष्टिघटिकासंख्याकस्य बाह्यस्याहोरात्रस्य मध्येऽस्याः प्राणरूपायाः पारमेश्वर्याः क्रियाशक्तेः प्राणचाराणां रन्ध्राख्यैर्द्वारसंख्याकैर्नवभिः शतैरुपलक्षिता,

---

प्रश्न—"यह सभी अध्वा चिन्मात्र में प्रतिष्ठित हैं । जो उसमें प्रतिष्ठित नहीं है वह आकाशकुसुम की भाँति हैं ।" (तं. आ. ८।३)

इत्यादि आगे कही जाने वाली नीति के अनुसार इसकी संविद् में प्रतिष्ठा उचित है न कि जडस्वरूप प्राण में ?—यह शङ्का कर कहते हैं—

प्राण ही शिखा है । त्रिशिरोभैरव में उसे बद्ध कहा गया है । याग आदि के समय निष्कल होने से (वह) शिवस्वरूपिणी होती है ॥ -२२-२३- ॥

"भैरव की परिमित शक्ति शिखा कही जाती है । वह क्रियाशक्ति (के नाम से) प्रसिद्ध है । ..............." ॥ २२ ॥

प्रश्न—उसका बन्धन क्या है जिसके कारण याग आदि में निष्कल होने के कारण यह शिवात्मिका होती है ?—यह शङ्का कर कहते हैं—

क्योंकि दिन और रात्रि के बीच में इसकी चौबीस प्रकार की गति होती है । (इसलिए) प्राणविक्षेपों के रन्ध्र = छिद्र = नव, शत = सौ = ९०० के द्वारा उपलक्षित (वह) विचित्र फल देने वाली है ॥ -२३-२४- ॥

साठ घड़ी संख्या वाले बाह्य अहोरात्र के बीच इस प्राणरूपा पारमेश्वरी क्रिया—शक्ति के प्राणचारों के रन्ध्र नामक = द्वार संख्या वाले = नव सौ के द्वारा

अत एव चतुर्विंशतिभिः संक्रान्तिलक्षणैः प्रकारैरैहिकामुत्रिकभेदाच्चित्रफलप्रदा गतिरूर्ध्वाधरवाहलक्षणश्चारो भवेदित्यर्थः । अयमत्राभिप्रायः—इह खलु सर्वप्राणिनां—

'मनोऽप्यन्यत्र निक्षिप्तं चक्षुरन्यत्र पातितम् ।
तथा प्रवर्तते प्राणस्त्वयत्नादेव सर्वदा ॥' (स्व०तं० ७।५७)

इत्याद्युक्त्या स्वरसत एव मध्यमः प्राणो वहति—इति बाह्येनाहोरात्रेण—

'षट्शतानि वरारोहे सहस्राण्येकविंशतिः ।
अहोरात्रेण बाह्येन अध्यात्मं तु सुराधिपे ॥' (स्व०तं० ७।५३)

इत्याद्युक्त्यान्तः सषट्शता सहस्रैकविंशतिः प्राणचाराणां भवेत् । तत्र प्रतिघटिकं—

'शतानि त्रीण्यहोरात्राः षष्टिरेव तथाधिकाः ।
वर्षमेतत्समाख्यातं बाह्ये वैघटिका च सा ॥' (स्व०तं० ७।५१)

इत्याद्युक्त्या प्राणचाराणां सषष्टिस्त्रिशती—इति सार्धेन घटिकाद्वयेन नवशतानि भवन्ति, स एव च संक्रान्तीनां प्रत्येकमुदयः । यदुक्तम्—

---

उपलक्षित, इसलिए २४ संक्रान्तिलक्षण वाले प्रकारों से इस संसार वाले और पारलौकिक भेद से विचित्र फल देने वाली गति = ऊपर नीचे चलने वाला चार =(सञ्चरण) होता है । यहाँ यह अभिप्राय हैं—

इस (संसार) में सभी प्राणियों का—

"मन को भी दूसरी जगह डाल दिया गया; आँख को अन्यत्र गिरा दिया गया तो भी प्राण बिना प्रयास के सर्वदा चलता रहता है ।" (स्व. तं. ७।५७)

इत्यादि उक्ति के द्वारा मध्यम प्राण स्वाभविक रूप से चलता है—इसलिए बाह्य अहोरात्र के द्वारा

"हे सुन्दर आरोहवाली ! देवताओं की रानी ! बाह्य दिनरात्रि के द्वारा इक्कीस हजार छः सौ (२१६००) और अध्यात्म (= शरीर के अन्दर भी उतना ही प्राणसञ्चार होता है) ।" (स्व० तं. ६।५३)

इत्यादि उक्ति के द्वारा भीतर २१६०० बार प्राण का सञ्चार होता है । उसमें एक घड़ी में—

"साठ अधिक तीन सौ (= ३६०) दिनों का एक वर्ष कहा गया है । और बाह्य रूप में वह एक घड़ी है ।" (स्व० तं. ७।५१)

इत्यादि उक्ति के द्वारा ३६० प्राणचार को आधे सहित दो घडी़ (= २।१।२ घड़ी) से (गुणा करने पर) ९०० प्राणसञ्चार होते हैं । और यही (काल) संक्रान्तियों में प्रत्येक का उदय (काल) है । जैसा कि कहा गया है—

'चतुर्विंशतिसंक्रान्त्यः समधातोः स्वभावतः ।
शतानि नव वै हंस एकामेकां वहेत्सदा ॥'
(स्व०तं० ७।१६८) इति ।

सार्धं च घटिकाद्वयं चतुर्विंशतिधा गुणितं षष्टिर्घटिका भवन्ति—इत्यहोरात्रमध्ये तत्संख्याकानामुदयः । यदुक्तम्—

'बाह्ये चैव त्वहोरात्रे अध्यात्मं तु वरानने ।
चतुर्विंशतिसंक्रान्तीः प्राणहंसस्तु संक्रमेत् ॥
अहनि द्वादश प्रोक्ता रात्रौ वै द्वादश स्मृताः ।'
(स्व०तं० ७।१६६) इति ।

यद्यपीयन्तः प्राणचारा अहोरात्रमध्ये भवन्ति—इत्येतावदत्र वक्तव्यं, तथापि तथात्वे तेषां गणनामात्रं प्रदर्शितं भवेत् न तु तत्तद्विचित्रफलोदयनिमित्तत्वमपीत्येवमुक्तम् ॥ २३ ॥

नन्वेवंविधः शिखाया बन्धः—इति वक्तुं प्रस्तुते किमिदमप्रस्तुतमभिधीयते यत्प्राणचाराणामियती गतिरिति । नैतत्, अयमेव हि शिखाबन्धो यत्प्राणशक्तेः प्रतिचारमादिमध्यान्तेष्ववधानेन पुनः पुनः परामर्शनं नाम । यदभिप्रायेणैव—

---

"सम धातु वाले (= वात पित्त श्लेष्मा इन तीन धातुओं के उचित मात्रा मे वर्त्तमान रहने से स्वस्थ शरीर वाले व्यक्ति) की स्वभावतः चौबीस संक्रान्तियाँ होती हैं । (यह) हंस एक-एक संक्रान्ति में ९०० (प्राणचारों) का वहन करता है ॥" (स्व० तं. ७।१६८)

ढाई घड़ी को २४ बार गुणा करने पर ६० घड़ियाँ होती है । इसलिये एक दिन रात्रि में उतनी संख्याओं वाले प्राणों का उदय होता है । जैसा कि कहा गया है—

"हे सुन्दर मुख वाली ! बाहर दिनरात में और शरीर के अन्दर प्राण हंस चौबीस संक्रान्तियों का संक्रमण करता है । दिन में बारह और रात्रि में बारह (संक्रान्तियां) कही गयी है ॥" (स्व. तं. २३।१।२)

यद्यपि दिनरात्रि के बीच इतने प्राणचार होते हैं—इतना ही यहाँ कहना है तो भी वैसा होने पर उनकी गणनामात्र यहाँ दिखलायी जानी चाहिये न कि भिन्न-भिन्न विचित्रफलों के उदय की कारणता; इसलिये ऐसा कहा गया ॥ २३ ॥

प्रश्न—इस प्रकार शिखा का बन्धन होता है—ऐसा कहने के लिये प्रस्तुत होने पर यह अप्रस्तुत क्यों कहा जा रहा है कि प्राणचारों की इतनी गति है? उत्तर—ऐसा नहीं है । यही शिखाबन्ध है कि प्राणशक्ति का, हर एक सञ्चार के आदि मध्य और अन्त में निरन्तर बार-बार परामर्श करना । इसी अभिप्राय से—

'षट् शातानि दिवा रात्रौ सहस्राण्येकविंशति: ।
जपो देव्या: समुद्दिष्ट: सुलभो दुर्लभो जडै: ॥'

(वि० भै० १५६)

इत्याद्यन्यत्रोक्तं, तदाह—

**क्षपा शशी तथापानो नाद एकत्र तिष्ठति ॥ २४ ॥**
**जीवादित्यो न चोद्गच्छेत्तुट्यर्धं सान्ध्यमीदृशम् ।**
**ऊर्ध्ववक्त्रो रविश्चन्द्रोऽधोमुखो वह्निरन्तरे ॥ २५ ॥**
**माध्याह्निकी मोक्षदा स्याद् व्योममध्यस्थितो रवि: ।**
**अनन्तमितसारो हि जन्तुचक्रप्रबोधक: ॥ २६ ॥**
**बिन्दु: प्राणो ह्यहश्चैव रविरेकत्र तिष्ठति ।**
**महासन्ध्या तृतीया तु सुप्रशान्तात्मिका स्थिता ॥ २७ ॥**

यदात्रैकत्र वामपार्श्वे द्वादशान्ताद्धृदन्तं चरन्क्षपाशशी तिष्ठति हृदये निवृत्तगतिर्भवति प्राणादित्यश्च ततो नोद्गच्छति तदेदृशमपानीयमन्त्यं तुट्यर्धं सान्ध्यं वक्ष्यमाणनीत्योद्गच्छत्प्राणार्काद्यतुट्यर्धसंमीलनया स चतुर्भागाङ्गुलद्वय-प्रमाणप्राणचाररूपा प्राभातिकी सन्ध्या भवेदित्यर्थ: । यदुक्तं तत्र—

---

"दिनरात में देवी का २१६०० जप योगी लोगों के लिये सुलभ (होते हुए) जड़ लोगों के द्वारा दुर्लभ है ।" (वि. मै. १२६)

इत्यादि दूसरे (ग्रन्थ) में कहा गया है । वही कहते हैं—

(जब) रात्रि, चन्द्रमा, अपान और नाद एक जगह रहते हैं तथा प्राणादित्य उदित नहीं होता (तो वह) तुटि का आधा भाग ऐसी (प्रभातकालीन) सन्ध्या होती है । जब सूर्य ऊर्ध्वमुख और चन्द्रमा अधोमुख होता है तथा अग्नि (दोनों के) बीच में रहता है तब मोक्षदायिनी मध्याह्न सन्ध्या होती है । क्योंकि (उस समय) अक्षीणतत्त्व वाला सूर्य जो कि जन्तुसमूह का उद्बोधक है, आकाश के मध्य में स्थित रहता है । जब बिन्दु प्राण दिन और सूर्य एक स्थान में होते हैं तो वह तीसरी सुप्रशान्तरूपा महासन्ध्या होती है ॥ -२४-२७ ॥

जब एकत्र = बायीं ओर, द्वादशान्त से हृदय तक चलता हुआ अपान रूपी चन्द्रमा स्थिर हो जाता है = हृदय में (पहुँच कर) गतिशून्य हो जाता है तथा प्राण आदित्य उस स्थान से ऊपर नहीं चलता तब इस प्रकार का = अपान से सम्बद्ध अन्तिम आधा तुटि वाला, सान्ध्य = आगे कही जाने वाली रीति से ऊपर उठते हुए प्राणादित्य के प्रथम तुट्यर्ध को मिश्रित करने से सवा दो अंगुल प्रमाण वाले प्राण का सञ्चार रूप प्रभात कालीन सन्ध्या होती है । जैसा कि वहाँ कहा गया है—

संहर्ता न पुनः स्रष्टा तद्धि ब्रह्मादीनामेव हि पूर्वमुक्तं, कालतत्त्वराडिति कालतत्त्वाधिपः श्रीकण्ठः । यदुक्तम्—

'एकवीरः शिखोदश्च श्रीकण्ठः कालमाश्रितः ।'

(मा०वि० ५।२७) इति ।

श्रीकण्ठ इत्यव्यक्तस्थः । एकत्रेति त्रिष्वपि योज्यम् । तल्लय इति श्रीकण्ठ-कर्तृकः संहारः । यद्वा त्रिष्वपि पृथिव्यादिषु स्थानेषु परापररूपता- मधिशयानः श्रीकण्ठनाथ एककः सृष्टिसंहारकारकः । यदुक्तम्—

'श्रीकण्ठ एव परया मूर्त्या कालाग्निरुच्यते ।' इति ।

तथा

'त्रिष्वेव संस्थितो रुद्रः कालरूपी महेश्वरः ।' इति ।

'शक्त्यन्ते' इति शुद्धाध्वनि । तदुक्तम्—

'तदूर्ध्वे शुद्धमध्वानं यावच्छक्त्यन्तगोचरम् ।
तत्सर्वं संहरेद् घोरमघोरो घोरनाशनः ॥' इति ॥ १७२ ॥

न केवलं शक्त्यन्तं प्रलयस्यैव महत्त्वं यावत्सृष्टेरपीत्याह—

---

सृष्टिकर्त्ता भी हैं ॥ १७१-१७२ ॥

संहर्त्ता न कि सृष्टिकर्त्ता क्योंकि वह (स्रष्ट्टत्त्व) तो पहले ही ब्रह्म आदि का कह दिया गया है । कालतत्त्वराट् = कालतत्त्व का राजा श्रीकण्ठ । जैसा कि कहा गया है—

"एक वीर शिखण्डीश और श्रीकण्ठ काल तत्त्व में रहते हैं ।" (मा. वि. ५।२७)

श्रीकण्ठ = अव्यक्त में रहने वाला । 'एकत्र' इस (पद) को तीनो में जोड़ना चाहिए । तल्लयः = श्रीकण्ठ के द्वारा किया गया संहार अथवा तीनों पृथिवी आदि स्थानों में पर अपर रूपता को धारण करने वाले श्रीकण्ठनाथ अकेले ही सृष्टि और संहार करने वाले हैं । जैसा कि कहा गया—

"श्रीकण्ठ ही परमूर्त्ति के रूप मे कालाग्नि कहे जाते हैं ।" तथा

"तीनों (अण्ड कटाहों) में रुद्र कालरूपी महेश्वर (के रूप में) स्थित हैं ।"

शक्यन्त = शुद्ध अध्वा में । वही कहा गया है—

"उसके ऊपर शक्तिपर्यन्त जो शुद्ध अध्वा है उस समस्त घोर का संहार घोरनाशक अघोर करते हैं" ॥ १७२ ॥

शक्तिपर्यन्त केवल प्रलय का ही महत्त्व नहीं हैं, सृष्टि का भी है—यह कहते हैं—

**तत्सृष्टौ सृष्टिसंहारा निःसंख्या जगतां यतः।**
**अन्तर्भूतास्ततः शाक्ती महासृष्टिरुदाहृता ॥ १७३ ॥**

ननु पृथिव्यादितत्त्वप्रलये यैव तन्निवासिनामणूनां व्यवस्था सैव किं तत्त्वेश्वरणां न वा ?—इत्याशङ्क्याह—

**लये ब्रह्मा हरी रुद्रशतान्यष्टकपञ्चकम् ।**
**इत्यन्योन्यं क्रमाद्यान्ति लयं मायान्तकेऽध्वनि॥ १७४ ॥**
**मायातत्त्वलये त्वेते प्रयान्ति परमं पदम् ।**

शुद्धाध्वव्यवस्थितानां पुनः किं परमं पदम् ?—इत्याशङ्क्याह—

**मायोर्ध्वे ये सिताध्वस्थास्तेषां परशिवे लयः ॥ १७५ ॥**
**तत्राप्यौपाधिकाद्भेदाल्लये भेदं परे विदुः ।**

तत्रापीति, परशिवे । परे विदुरिति, न पुनरस्माकमिदं मतमित्याशयः ॥ १७५ ॥

नन्वेवमपवृक्तेषु पुनः सृष्टौ तत्र केषामधिकारः ?—इत्याशङ्क्याह—

**एवं तात्त्वेश्वरे वर्गे लीने सृष्टौ पुनः परे ॥ १७६ ॥**

---

क्योंकि उस (शक्ति) की सृष्टि में संसार के असंख्य सृष्टिसंहार अन्तर्भूत हैं इसलिए शक्तिसृष्टि महासृष्टि कही गई है ॥ १७३ ॥

प्रश्न—पृथिवी आदि तत्त्वों के प्रलय होने पर उनमें रहने वाले जीवों की जो व्यवस्था होती है वही क्या उन तत्त्वों के ईश्वरों की भी होती हैं या नहीं?—यह शङ्का कर कहते हैं—

प्रलय होने पर ब्रह्मा विष्णु और १४० रुद्र ये सब अन्योऽन्य क्रम से माया अन्त वाले अध्वा में लय को प्राप्त होते हैं और माया तत्त्व का लय होने पर ये परम पद को प्राप्त होते हैं ॥ -१७४-१७५- ॥

शुद्ध अध्वा में रहने वालों का परम पद क्या है ?—यह शङ्का कर कहते हैं—

माया से ऊपर जो शुद्ध अध्वा में रहने वाले हैं उनका परम शिव में लय हो जाता है । उसमें भी औपाधिक भेद से लय होने पर दूसरे लोग भेद मानते हैं ॥ -१७५-१७६- ॥

वहाँ भी = परमशिव में भी । दूसरे लोग मानते हैं । हमारा यह मत नहीं हैं—यह आशय हैं ॥ १७५ ॥

प्रश्न—इस प्रकार अपवर्ग को प्राप्त हो जाने पर फिर सृष्टि के विषय में किसका अधिकार होता है?—यह शङ्का कर कहते हैं—

**तत्साधकाः शिवेष्टा वा तत्स्थानमधिशेरते ।**

तत्साधका इति—

'लोकधर्मिणमारोप्य मते भुवनभर्तरि ।'

इत्यादिना निरूपिताश्चर्यादिक्रमेण प्रेप्सिततत्तद्भुवनैश्वर्याः । शिवेष्टा इति, तदिच्छामात्रानुगृहीताः ॥ १७६ ॥

नन्वेवमप्येषां ब्रह्मादिशब्दप्रवृत्तौ किं निमित्तम् ?—इत्याशङ्क्याह—

**ब्राह्मी नाम परस्येव शक्तिस्तां यत्र पातयेत् ॥ १७७ ॥**
**स ब्रह्मा विष्णुरुद्राद्या वैष्णव्यादेरतः क्रमात् ।**

'अत' इति शक्तेः । तदुक्तम्—

'ब्राह्मी च वैष्णवी शक्तिरधिकारपदं गता ।
यं चाधितिष्ठत्यात्मानं तत्संज्ञां स प्रपद्यते ॥
तदाधिकारं कुरुते इच्छया परमात्मनः ।'

(स्व०तं० ११।२६५) इति ॥ १७७ ॥

ननु ब्राह्मी नाम यदि शिवस्यैव शक्तिस्तत्कथमसावन्यं यायाद्येनायं ब्रह्मेत्यु-

---

इस प्रकार जब तत्त्वेश्वरवर्ग परतत्त्व में लीन हो जाता है तब पुनः सृष्टि होने पर उसके साधक या शिव को इष्ट (जीव) उस स्थान का ग्रहण करते हैं ॥ -१७६-१७७- ॥

उसके साधक—

"स्वीकृत भुवनभर्त्ता के पद पर लोकधर्मी को आरोपित कर" इत्यादि के द्वारा निरूपित चर्या आदि के क्रम से ईप्सित उन-उन भुवनों के ऐश्वर्य वाले । शिवेष्ट = उन (= शिव) की इच्छा मात्र से अनुगृहीत ॥ १७६ ॥

ऐसा होने पर भी इनको ब्रह्म आदि शब्द से पुकारे जाने में क्या हेतु है ?—यह शङ्का कर कहते हैं—

ब्राह्मी नामक परमेश्वर की शक्ति हैं । (वह परमेश्वर) उस (शक्ति) को जहाँ गिरा देता है वह ब्रह्म (हो जाते हैं) । उसी क्रम से वैष्णवी आदि शक्ति से विष्णु रुद्र आदि (होते हैं) ॥ -१७७-१७८- ॥

अतः = शक्ति से । वही कहा गया है—

"ब्राह्मी और वैष्णवी शक्ति अधिकार को प्राप्त होकर जिस आत्मा पर अधिष्ठित होती है वह (आत्मा) उस (= ब्रह्मा, विष्णु) संज्ञा को प्राप्त होता है । तब परमात्मा की इच्छा से वह अपने अधिकार (का प्रयोग) करता है" ॥ १७७ ॥ (स्व. तं. ११।२६५)

च्यते, न ह्यन्यदीयधर्मस्यान्यत्रान्वयः संभवेत् ?—इत्याशङ्क्याह—

**शक्तिमन्तं विहायान्यं शक्तिः किं याति नेदृशम्॥ १७८ ॥**
**छादितप्रथिताशेषशक्तिरेकः शिवस्तथा ।**

न ह्येतच्छिवलक्षणं शक्तिमन्तं विहायान्यं ब्रह्मादिलक्षणं शक्तिर्याति' इत्येवंविधमुक्तं, किं त्वनन्तशक्तिखचितत्वेऽपि कांचिच्छक्तिं प्रच्छाद्य कांचिच्च प्रकटीकृत्यैक एव शिवस्तथा ब्रह्मविष्ण्वाद्यात्मनावभासत इति ॥ १७८ ॥

ननु प्राणस्य परं तत्त्वं प्रत्युपायत्वमस्तीति प्रागुपक्रान्तं तत्तदनभिधाय तदाश्रयेण सृष्टिसंहारादीनामेव स्वरूपमुच्यते—इति किमेतत् ?—इत्याशङ्क्याह—

**एवं विसृष्टिप्रलयाः प्राण एकत्र निष्ठिताः ॥ १७९ ॥**
**सोऽपि संविदि संविच्च चिन्मात्रे ज्ञेयवर्जिते ।**
**चिन्मात्रमेव देवी च सा परा परमेश्वरी ॥ १८० ॥**
**अष्टात्रिंशं च तत्तत्त्वं हृदयं तत्परापरम् ।**

संविदीति, तत्तन्नीलाद्याभाससंभिन्नायां परिमितात्मरूपायाम् । चिन्मात्रमेव चाष्टात्रिंशं तत्त्वमित्येतदग्र एवोपपादयिष्यते—इति नेहायस्तम् । तत्स्थितमेवास्य

---

प्रश्न—ब्राह्मी यदि शिव की ही शक्ति है तो यह दूसरे के पास क्यों जाती है जिससे कि यह ब्रह्मा कहलाते हैं । दूसरे के धर्म का दूसरे से सम्बन्ध सम्भव नहीं होता ?—यह शङ्का कर कहते हैं—

शक्तिमान् को छोड़कर शक्ति दूसरे के पास क्यों जाती हैं?—ऐसा नहीं हैं । एक शिव ही (अपनी) शक्ति को (कहीं) छादित (और कहीं) प्रकट कर उस प्रकार (रहता है) ॥ -१७८-१७९- ॥

यह शिवलक्षण वाले शक्तिमान् को छोड़कर दूसरे ब्रह्मालक्षण वाले शक्तिमान् के पास जाती हैं—ऐसा नहीं कहा गया है । किन्तु अनन्त शक्ति से युक्त होने पर भी किसी शक्ति को छिपा कर और किसी को प्रकट कर एक ही शिव उस प्रकार = ब्रह्मा विष्णु आदि के रूप में भासता है ॥ १७८ ॥

प्रश्न—प्राण परतत्त्व (की प्राप्ति) का उपाय है ऐसा पहले प्रारम्भ किया गया। अब उसको न कहकर उसके आधार पर सृष्टि संहार आदि का ही स्वरूप कहा जा रहा है—यह क्या है ?—यह शङ्का कर कहते हैं—

इस प्रकार सृष्टि और प्रलय प्राण में एक जगह प्रतिष्ठित हैं । वह (= प्राण) भी संविद् में और संवित् ज्ञेयरहित चिन्मात्र में निष्ठित हैं । वह परा पारमेश्वरी देवी चिन्मात्र ही हैं । वह अड़तीसवाँ तत्त्व है और वही परात्पर हृदय भी है ॥ -१७९-१८१- ॥

संविद् में = भिन्न-भिन्न घट आदि आभासों से संभिन्न परिमित आत्मरूपा में ।

चिन्मात्रविश्रान्तत्वं यद्वशादेवात्र नालिकादिषष्ट्यब्दोदयान्तं लयोदययोर्वैचित्र्य-मिति ॥ १८० ॥

तदाह—

**तेन संवित्त्वमेवैतत्स्पन्दमानं स्वभावतः ॥ १८१ ॥**
**लयोदया इति प्राणे षष्ट्यब्दोदयकीर्तनम् ।**

संवित्त्वमिति—ये नाम लयोदयास्तत्संवित्स्वातन्त्र्यम्—इत्येवं संविदधीनमेव सर्वमेतत्कालीयं वैचित्र्यं, न पुनरस्वाधीनं किञ्चिद्रूपं बहिरस्तीत्युक्तं स्यात् ॥ १८१ ॥

अत आह—

**इच्छामात्रप्रतिष्ठेयं क्रियावैचित्र्यचर्चना ॥ १८२ ॥**
**कालशक्तिस्ततो बाह्ये नैतस्या नियतं वपुः ।**

नैतस्या नियतं वपुरिति, तथात्वे हि यत्रैकचषकोदयस्यत्रैवाब्दोदयः कथं भवेदिति भावः ॥ १८२ ॥

ननु कथमतिपरिमितस्यापि कालांशस्य वैतत्येनावभासो भवेत् ?—

---

चिन्मात्र ही ३८ तत्त्व हैं यह आगे सिद्ध किया जायगा—इसलिए यहाँ नहीं कहा गया। इसलिए इसका चिन्मात्र में विश्रान्त होना सिद्ध हो गया जिस कारण ही यहाँ नाडी से लेकर ६० वर्ष के उदय तक लय और उदय का वैचित्र्य हैं ॥ १८० ॥

उसी को कहते हैं—

इसलिए स्वभावतः स्पन्दमान यह संवित् ही प्राण का लय और उदय है इसलिए प्राण में साठ वर्ष के उदय का कथन (किया गया) ॥ -१८१-१८२- ॥

संवित्त्व—जो लय और उदय हैं वह संवित् का स्वातन्त्र्य ही है । इस प्रकार यह सब काल का वैचित्र्य संविद् के ही अधीन है । स्वाधीन कुछ बाहर है ही नहीं ऐसा कहना चाहिये ॥ १८१ ॥

इसलिए कहते हैं—

यह क्रियावैचित्र्य की चर्चा (परमेश्वर की) इच्छा के ऊपर प्रतिष्ठित है । वही बाहर काल शक्ति है । इस कारण इसका स्वरूप निश्चित नहीं है ॥ -१८२-१८३- ॥

इसका स्वरूप निश्चित नहीं है क्योकि वैसा होने पर जहाँ एक चषक का उदय होता है वही एक वर्ष का उदय कैसे होगा ?—यह तात्पर्य है ॥ १८२ ॥

इत्याशङ्क्याह—

**स्वप्नस्वप्ने तथा स्वप्ने सुप्ते सङ्कल्पगोचरे ॥ १८३ ॥**
**समाधौ विश्वसंहारसृष्टिक्रमविवेचने ।**
**मितोऽपि किल कालांशो विततत्वेन भासते ॥ १८४ ॥**

यत्राद्यां स्वाप्नीमेव दशां जाग्रद्दशात्वेन परिकल्प्य द्वितीयां स्वप्नत्वेन कश्चिदभिमन्यते स स्वप्नस्वप्न उच्चते । एवं स्वप्ने क्षणेनैव हरिश्चन्द्रस्येवानेककालिकोऽप्यनुभवोऽभवदिति युक्तमुक्तं—'मितेऽपि काले वैतत्येनावभासः' इति । 'सुप्ते' इति सुषुप्तदशायाम्; तत्र हि क्षणमात्रमपि मोहादौ 'चिरस्य गाढमूढोऽहमासम्' इत्याद्यभिमानोदयः । 'सङ्कल्पगोचरे' इति स्वतन्त्रविकल्पादौ; तत्र हि क्षणेनैव कल्पपरिकल्पनमपि शक्यम् । 'समाधौ' इति विश्वसाक्षात्कारात्मनि । विश्वसंहारसृष्टिक्रमस्य 'विवेचने' समनन्तरोक्तकालीयप्रमेयसङ्कलनाबुद्धावित्यर्थः ।

एतच्च कालीयं वैतत्यं स्वपरदृष्टत्वेनापि वैचित्र्यमियात्—इत्याह—

**प्रमात्रभेदे भेदेऽथ चित्रो विततिमाप्यसौ ।**

---

प्रश्न—अत्यन्त सीमित कालांश का भी विस्तार के साथ अवभास कैसे होता है ?—यह शङ्का कर कहते हैं—

जाग्रत, स्वप्न, सुषुप्ति, सङ्कल्प के विषय, समाधि एवं विश्व के संहार और सृष्टि क्रम के विवेचन में सीमित भी कालांश विस्तृत रूप में भासित होता है ॥ -१८३-१८४ ॥

जहाँ पहली स्वप्न वाली दशा को ही जाग्रत दशा के रूप में मानकर दूसरी को स्वप्न मानते हैं तो वह जाग्रत दशा स्वप्नस्वप्न कहलाती हैं । इस प्रकार स्वप्न में एक क्षण में राजा हरिश्चन्द्र (की स्वप्नकालीन घटना) के समान अनेककालिक अनुभव हुआ इसलिए ठीक कहा गया 'सीमित काल में व्यापक आभास होता है ।' सुप्त में = सुषुप्तिदशा में ।

उसमें एक क्षण के लिए भी मोह आदि के समय 'बहुत देर तक (मैं) गम्भीर रूप से मूढ था' ऐसा अभिमान उत्पन्न होता है । सङ्कल्प गोचर में = स्वतन्त्र विकल्प आदि में । उस स्थिति में एक क्षण के द्वारा एक कला की भी परिकल्पना सम्भव हैं। समाधि में—विश्वसाक्षात्काररूप वाली । विश्वसंहार और सृष्टि के क्रम के विवेचन में = अव्यवहितपूर्व कहे गए कालिक प्रमेय की सङ्कलना वाली बुद्धि में ॥ १८३ ॥

यह कालिक वैचित्र्य अपने और दूसरे के द्वारा दृष्ट होने से भी विचित्र हो जाता है—यह कहते हैं—

यह विस्तार प्रमाता के अभेद और भेद होने पर भी विचित्र हो जाता है ॥ १८५- ॥

अनेनैतत्स्वप्नादावनुभूतम्—इति प्रमात्रन्तरैकीकारेण विततिम्नोऽवभासः; मयैवैतदसाधारण्येनानुभूतम्—इति वा ॥

इदानीं प्राणीयमेव कालविभागमपानेऽप्यतिदिशति—

**एवं प्राणे यथा कालः क्रियावैचित्र्यशक्तिजः ॥ १८५ ॥**
**तथापानेऽपि हृदयान्मूलपीठविसर्पिणी ।**

यद्यपि द्वादशान्ताद्धृदन्तमपाने कालवैचित्र्यमुक्तं तथापि हृदयान्मत्तगन्धपर्यन्तं प्रसरणेऽस्यैव प्राधान्यमित्येवमुक्तम् । तदुक्तम्—

'अपानस्यापि सञ्चारे सर्पितेयं सुविस्तृता ।
गुदं यावत्ततो वायुरधस्तादुपयाति हि ॥' इति ॥ १८५ ॥

नन्वत्रापि प्राणवत्कालवैचित्र्यं किं सञ्चेत्यते न वा ?—इत्याशङ्क्याह—

**मूलाभिधमहापीठसङ्कोचप्रविकासयोः ॥ १८६ ॥**
**ब्रह्माद्यनाश्रितान्तानां चिनुते सृष्टिसंहृती ।**

'रासभी वडवा यद्वत्' (तं० ५।५८) इत्यादिप्रागुक्तयुक्त्या जन्माधारोदितायाः

---

इससे (यह अर्थ निकलता है कि) स्वप्न आदि में क्षणमात्र में किया गया अनुभव भी दूसरे प्रमाताओं से तादात्म्य स्थापित कर विस्तार के साथ अवभासित हो सकता है । अथवा मैंने ही इसका असाधारण रूप से अनुभव किया ऐसा भी अनुभव होता है ॥ १८४ ॥

अब प्राणीय कालविभाग का ही अपान मे भी अतिदेश करते हैं—

इस प्रकार जैसे प्राण में काल क्रिया की वैचित्र्यशक्ति से उत्पन्न होता है उसी प्रकार हृदय से लेकर मूलाधार तक फैलने वाले अपान मे भी (वह उत्पन्न होता है) ॥ -१८५-१८६- ॥

यद्यपि द्वादशान्त से हृदय तक (वर्त्तमान) अपान में काल का वैचित्र्य कहा गया तथापि हृदय से गुदा तक फैलने में इसी की प्रधानता है—ऐसा कहा गया । वही कहा गया है—

अपान के भी सञ्चार में उसका यह विस्तृत फैलाव गुदापर्यन्त है । उसके बाद वायु नीचे जाती है ॥ १८५ ॥

प्रश्न—यहाँ भी प्राण के समान कालवैचित्र्य ज्ञात होता है या नहीं ?—यह शङ्का कर कहते हैं—

मूल आधार नामक महा पीठ वाली (शक्ति) के सङ्कोच और विकास सम्बन्धी, ब्रह्मा से लेकर अनाश्रित शिव पर्यन्त सृष्टि और संहार को (योगी) समझता है ॥ -१८६-१८७- ॥

शक्तेर्यौ सङ्कोचविकासौ तौ ब्रह्माद्यनाश्रितान्तस्य विश्वस्य सृष्टिसंहारादौ योगिनामनुभवसिद्धावित्युक्तं—'चिनुते सृष्टिसंहृती' इति ॥ १८६ ॥

ननु यद्येवं तत्सर्वत्र प्राणोदय एव प्राधान्येनैतत्कस्मान्निर्दिष्टम् ?—इत्याशङ्क्याह—

**शश्वद्यद्यप्यपानोऽयमित्थं वहति किंत्वसौ ॥ १८७ ॥**
**अवेद्ययत्नो यत्नेन योगिभिः समुपास्यते ।**

ननु यद्यत्र ब्रह्मादीनां कारणानां सृष्ट्यादि संभवेत् तत्कुत्र कस्यावस्थानम् ?—इत्याशङ्क्याह—

**हृत्कन्दानन्दसङ्कोचविकासद्वादशान्तगाः ॥ १८८ ॥**
**ब्रह्मादयोऽनाश्रितान्ताः सेव्यन्तेऽत्र सुयोगिभिः ।**

'द्वादशान्तः' शक्तेरुदयविश्रान्तिस्थानम् । सुयोगिभिरित्यन्तःप्राणे सावधानैर्न सामान्यैस्तेषामपानस्यावेद्ययत्नतया तत्सेवनस्य यत्नसाध्यत्वात् ॥ १८८ ॥

ननु व्यापकत्वादेषां स्वरसत एव सर्वत्रावस्थानं सिद्धमित्यत्र विशेषाभिधाने किं

---

'जिस प्रकार गदही या घोड़ी' (तं. आ. ५।५८) इत्यादि पहले कहे गए नियम के अनुसार जन्माधार में प्रकट हुई शक्ति का जो सङ्कोच और विकास वे दोनों ब्रह्म से लेकर अनाश्रित शिव पर्यन्त विश्व के सृष्टि संहार आदि योगियों के अनुभवसिद्ध हैं—यह 'सृष्टि और संहार का चयन करता है'—के द्वारा कहा गया ॥ १८६ ॥

प्रश्न—यदि ऐसा है तो सर्वत्र यह प्राण का उदय ही प्रधान रूप से क्यों कहा गया ?—यह शङ्का कर कहते हैं—

यद्यपि यह अपान इस प्रकार निरन्तर वहता है तो भी यह अवेद्य प्रयास वाला (अपान) योगियों के द्वारा प्रयत्नपूर्वक उपासित होता है ॥ -१८७-१८८- ॥

प्रश्न—यदि यहाँ (शरीर में) ब्रह्म आदि कारणों की सृष्टि सम्भव है तो किसकी कहाँ स्थिति है ?—यह शङ्का कर कहते हैं—

हृदय, कन्द, आनन्द, सङ्कोच, विकास और द्वादशान्त में रहने वाले ब्रह्मा से लेकर अनाश्रित शिव तक (सभी देवता) यहाँ सुयोगियों के द्वारा पूजित होते हैं ॥ -१८८-१८९- ॥

द्वादशान्त = शक्ति के उदय और विश्रान्ति का स्थान । सुयोगियों के द्वारा अर्थात् अन्तःप्राण में सावधान न कि सामान्य (योगियों) के द्वारा । क्योंकि अपान अवेद्य यत्न वाला होने पर उनके लिए उसका सेवन यत्नसाध्य होता है ॥ १८८॥

प्रश्न—व्यापक होने के कारण इनकी (= ब्रह्मा आदि की) स्थिति सर्वत्र

प्रयोजनम् ?—इत्याशङ्क्याह—

**एते च परमेशानशक्तित्वाद्विश्ववर्तिनः ॥ १८९ ॥**
**देहमप्यश्नुवानास्तत्कारणानीति कामिके ।**

तत्कारणानीति, तस्य देहस्य कारणानि तत्तदधिष्ठानद्वारेणोत्पत्तिनिमित्त-मित्यर्थः ॥ १८९ ॥

कामिकीयमेव ग्रन्थं पठति—

**बाल्ययौवनवृद्धत्वनिधनेषु पुनर्भवे ॥ १९० ॥**
**मुक्तौ च देहे ब्रह्माद्याः षडधिष्ठानकारिणः ।**

तद्बाल्ये ब्रह्मणोऽधिष्ठानकारित्वं, यावन्मुक्तावनाश्रितस्येति ॥ १९० ॥

नन्वस्मद्दर्शने मुक्तेः किमनाश्रिताधिष्ठानं युक्तम् ?—इत्याशङ्क्याह—

**तस्यान्ते तु परा देवी यत्र युक्तो न जायते ॥ १९१ ॥**
**अनेन ज्ञातमात्रेण दीक्षानुग्रहकृद्भवेत् ।**

अन्त इति, यदुक्तम्—

---

स्वभावतः सिद्ध है तो यहाँ विशेष कथन का क्या प्रयोजन है ?—यह शङ्का कर कहते हैं—

यह (ब्रह्मा आदि) परमेश्वर की शक्ति होने के कारण विश्वव्यापी होते हुए देह को भी धारण करने वाले हैं अतः उस (= देह) के कारण हैं—ऐसा कामिक में (कहा गया है) ॥ -१८९-१९०- ॥

उसके कारण = उस = देह के कारणभूत अर्थात् उन-उन के अधिष्ठान के द्वारा उत्पत्ति के कारण ॥ १८९ ॥

कामिकीय ग्रन्थ को ही पढ़ते हैं—

बचपन, युवावस्था, वृद्धत्व, मृत्यु, पुनर्जन्म और मुक्ति (के काल) में शरीर में ब्रह्मा आदि छह अधिष्ठातृ देव रहते हैं ॥ -१९०-१९१- ॥

इस प्रकार बचपन में (शरीर में) ब्रह्मा अधिष्ठान करते हैं और मुक्ति में अनाश्रित शिव ॥ १९० ॥

प्रश्न—हमारे दर्शन में मुक्ति को अनाश्रित के द्वारा अधिष्ठित होने को क्यों उचित (माना गया) ?—यह शङ्का कर कहते हैं—

उस (= अनाश्रित) के अन्त में तो परादेवी हैं जहाँ (शिष्य) गुरु के द्वारा नियोजित नहीं होता । इस (प्रक्रिया को गुरु के द्वारा) जान लेने मात्र से (योगी) दीक्षारूप अनुग्रह करने वाला हो जाता है ॥ -१९१-१९२- ॥

'षट्त्यागात्सप्तमे लयः ।' (स्व०तं० ४।२६७) इति ।

'युक्त'इत्यर्थाद् गुरुणा योजितः ॥ १९१ ॥

नन्वपानस्य कालवैचित्र्याभिधाने प्रक्रान्ते किमनेनोपदिष्टेन ?—इत्याशङ्क्याह—

**समस्तकारणोल्लासपदे सुविदिते यतः ॥ १९२ ॥**
**अकारणं शिवं विन्देद्यत्तद्विश्वस्य कारणम् ।**

हेये हि सुष्ठु ज्ञाते सुखमुपादेये विश्रान्तिर्भवेदिति भावः ॥ १९२ ॥

ननु प्राणक्रमेण 'द्वादशान्ते परः शिवः' इत्याद्युक्त्या तत्तत्कारणोल्लङ्घनेन तत्र शिवे विश्रान्तिः स्यादिह पुनः सा कुत्र यत्रैवं स्यात् ?—इत्याशङ्क्याह—

**अधोवक्त्रं त्विदं द्वैतकलङ्कैकान्तशातनम् ॥ १९३ ॥**
**क्षीयते तदुपासायां येनोर्ध्वाधरडम्बरः ।**

यत्र नामापानस्य विश्रान्तिस्तदिदं द्वैतकलङ्कापहम् 'अधोवक्त्रं' षष्ठस्रोतोरूपं

---

अन्त में । जैसा कि कहा गया है—

"छः १. ऊर्ध्व शून्य (शक्ति) २. अधः शून्य (हृदय) ३. मध्य शून्य (कण्ठ तालु आदि) ४. चतुर्थ शून्य (व्यापिनी) ५. पञ्चम शून्य (समना) और ६. षष्ठ शून्य (उन्मना) का त्याग करने पर सातवें (शून्य) में लय होता है ।" (स्व. तं. ४।२६७)

युक्त = गुरु के द्वारा लगाया गया ॥ १९१ ॥

प्रश्न—अपान के कालवैचित्र्य का कथन चल रहा था तो यह उपदेश क्यों (किया जा रहा है) ?—यह शङ्का कर कहते हैं—

**क्योंकि समस्त कारणों के उल्लासस्थानों को अच्छी तरह जान लेने पर, जो विश्व का कारण है उस कारणहीन शिव को (योगी) जान लेता है ॥ -१९२-१९३- ॥**

हेय के भली भाँति ज्ञात होने पर उपादेय में सरलता पूर्वक विश्रान्ति होती है—यह तात्पर्य है ॥ १९२ ॥

प्रश्न—प्राणक्रम के द्वारा 'द्वादशान्त में परम शिव रहते हैं' इत्यादि उक्ति के द्वारा उन-उन कारणों का उल्लङ्घन करने से उस शिव तत्त्व में विश्रान्ति होती है । यहाँ वह कहाँ होगी जहाँ ऐसा हो ?—यह शङ्का कर कहते हैं—

**यह द्वैतकलङ्क को पूर्णतः नष्ट करने वाला अधोवक्त्र है । जिसके द्वारा, उसकी उपासना करने पर, ऊर्ध्व और अधर का डम्बर (= आभास, दिखावा) नष्ट हो जाता है ॥ -१९३-१९४- ॥**

योगिनीवक्त्रमित्युच्यते; यतोऽयमद्वैतार्थोपदेशिनां रहस्यशास्त्राणामुदयो, येन द्वैतापहतत्वेन हेतुना तत्र विश्रान्तिभाजाम् 'ऊर्ध्वाधरडम्बरः' शाम्येत् चिदानन्दैकघनपरशिवैकात्म्यमुल्लसेदित्यर्थः ॥ १९३ ॥

नन्वत्रैवं विश्रान्तिः किं प्राणवत्तुट्यादिक्रमेणैव भवेदुतान्यथापि ? इत्याशङ्क्याह—

**अत्रापानोदये प्राग्वत्षष्ट्यब्दोदययोजनाम् ॥ १९४ ॥**
**यावत्कुर्वीत तुट्यादेर्युक्तांगुलविभागतः ।**

युक्तं तुट्यनुगुणमंगुलविभागमाश्रित्य तुट्यादेरारभ्य षष्ट्यब्दोदययोजनां यावत् प्राग्वदत्रापानोदयेऽर्थाद्योजनां कुर्वीत, येनैवं विश्रान्तिः स्यात् ॥ १९४ ॥

न केवलमेतदपाने यावत्समानेऽपि इत्याह—

**एवं समानेऽपि विधिः स हि हार्दीषु नाडिषु ॥ १९५ ॥**
**सञ्चरन्सर्वतोदिक्कं दशधैव विभाव्यते ।**

---

जहाँ अपान का अन्त होता है वह द्वैतकलङ्क को नष्ट करने वाला अधोवक्त्र = छठां स्रोत रूप योगिनीवक्त्र कहा जाता है । जहाँ से इस, अद्वैत तत्त्व का उपदेश करने वाले रहस्य शास्त्रों, का उदय होता है । जिस द्वैतनाशरूप हेतु के द्वारा उसमें विश्राम करने वालों का ऊर्ध्व और अधः डम्बर शान्त हो जाता है अर्थात् चिदानन्द एक घन परम शिव के साथ तादात्म्य का उल्लास होता है ॥ १९३ ॥

प्रश्न—यहाँ ऐसी विश्रान्ति क्या प्राण तुटि आदि के क्रम से होती है या दूसरी प्रकार की भी ?—यह शङ्का कर कहते हैं—

पहले की भाँति युक्त अंगुलविभाग के अनुसार तुटि से लेकर साठ वर्ष के उदय की योजना तक यहाँ अपान के उदय में करनी चाहिए ॥ -१९४-१९५- ॥

युक्त = तुटि के अनुकूल अंगुल विभाग के आधार पर तुटि से लेकर साठ वर्ष के उदय की योजना तक पहले (प्राण) के समान अपान के उदय में योजना करनी चाहिए जिससे इस प्रकार विश्रान्ति हो जाय ॥ १९४ ॥

यह केवल अपान में ही नहीं है समान में भी है—

यह कहते हैं—

समान में भी यह विधि है । वह (समान) हृदय की नाडियों में सर्वदिक सञ्चरण करता हुआ दश प्रकार का ही माना जाता है ॥ -१९५-१९६- ॥

हार्दीषु, हृदि तासामभिव्यक्तेः, वस्तुतस्त्वासां नाभेरुदयः । यदुक्तम्—

'नाभ्यधो मेढ्रकन्दे च स्थिता वै नाभिमध्यतः ।
तस्माद्विनिर्गता नाड्यस्तिर्यगूर्ध्वमधः प्रिये ॥
चक्रवत्संस्थितास्तत्र प्रधाना दश नाडयः ।'

(स्व०तं० ७।८) इति ।

समानस्यापि मुख्यया वृत्त्या नाभिरेव स्थानम् । यदुक्तम्—

'हृद्गुदे नाभिकण्ठे च सर्वसन्धौ तथैव च ।
प्राणाद्याः संस्थिता ह्येते....................... ॥'

(स्व०तं० ७।३०१) इति ॥ १९५ ॥

नन्वेवं व्यपदेशस्य किं निमित्तम् ?—इत्याशङ्क्याह—

**दश मुख्या महानाडीः पूरयन्नेष तद्गताः ॥ १९६ ॥**
**नाड्यन्तराश्रिता नाडीः क्रामन्देहे समस्थितिः ।**

मुख्या इति प्रधानाः । तदुक्तम्—

'इडा च पिङ्गला चैव सुषुम्ना च तृतीयिका ।
गान्धारी हस्तिजिह्वा च पूषा चैवार्यमा तथा ॥

---

हृदय वाली में—क्योंकि हृदय में ही उनकी अभिव्यक्ति होती है । वस्तुतः तो इन (= नाडियों) का उदय नाभि से होता है । जैसा कि कहा गया है—

"हे प्रिये ! नाभि के नीचे मेढ्र कन्द में स्थित नाड़ियाँ उस नाभिमध्य से तिर्यक् ऊपर और नीचे की और निकलती हैं । उनमें प्रधान दश नाडियाँ चक्र के समान स्थित हैं ।" (स्व. तं. ७।८)

समान का भी मुख्यरूप से नाभि ही स्थान हैं । जैसा कि कहा गया—

"हृदय, गुदा, नाभि, कण्ठ और सभी सन्धियों में ये प्राण आदि स्थित है.... ..............." ॥ १९५ ॥ (स्व. तं. ७।३०१)

प्रश्न—इस प्रकार के व्यवहार का क्या कारण है ?—यह शङ्का कर कहते हैं—

दश मुख्य महा नाड़ियों को पूरित करता हुआ यह (= समान वायु) उसमें वर्त्तमान अन्य नाड़ियों की आश्रित नाड़ियों को संक्रान्त करता हुआ सम रूप से स्थित है ॥ -१९६-१९७- ॥

मुख्य = प्रधान । वही कहा गया है—

"इडा, पिङ्गला, सुषुम्ना, गान्धारी, हस्तिजिह्वा, पूषा, अर्यमा, अलम्बुसा, कुहू और शङ्खिनी दशवी कही गई है । प्राण जिसमें होकर बहता है ऐसी ये दश

अलम्बुसा कुहूश्चैव शङ्खिनी दशमी स्मृता ।
एताः प्राणवहाः प्रोक्ताः प्रधाना दश नाडयः ॥'
(स्व०तं० ७।१६) इति ।

'तद्गताः' इति तद्भेदरूपद्वासप्ततिसहस्रसंख्याकाः । नाड्यन्तरेतितदुपभेद-रूपाणि । यदुक्तम्—

'द्वासप्ततिसहस्राणि नाड्यस्ताभ्यो विनिर्गताः ।
पुनर्विनिर्गताश्चान्या आभ्योऽप्यन्याः पुनः पुनः ॥'
(स्व०तं० ७।९) इति ।

अत एव देहे समननात्समाननामायमित्युक्तं 'समस्थितिः' इति ॥ १९६ ॥

ननु यदि नामायं दश नाडीराक्रम्य वर्तते तावतास्य किमायातं येन दशधात्वमुच्यते ?—इत्याशङ्क्याह—

**अष्टासु दिग्दलेष्वेष क्रामंस्तद्दिक्पतेः क्रमात् ॥ १९७ ॥**
**चेष्टितान्यनुकुर्वाणो रौद्रः सौम्यश्च भासते ।**

तद्दिक्पतेरिति, इन्द्रादेः । चेष्टितानीति, स्तम्भादिरूपाणि । रौद्रो याम्यादौ, सौम्यश्च वारुण्यादौ; अत एव पुंसां प्रतिक्षणं क्रोधहर्षाद्याविर्भावः । यदुक्तम्—

---

नाड़ियाँ प्रधान कही गई हैं ।'' (स्व. तं. ७।१६)

तद्गत = उनके भेदरूप बहत्तर हजार संख्या वाली । नाड्यन्तर = उनकी उपभेद रूप । जैसा कि कहा गया है—

''उनसे (= दशप्रधान नाडियों से) बहत्तर हजार नाड़ियाँ निकली हैं । पुनः इनसे बार-बार अन्य नाड़ियाँ भी निकली हैं ।'' (स्व. तं. ७!९)

इसलिए शरीर में समनन करने से यह (वायु) समान नाम वाला है । अतः कहा गया—समस्थिति ॥ १९६ ॥

प्रश्न—यदि यह (वायु) दश नाडियों को आक्रान्त कर के वर्त्तमान है तो इससे इसका क्या वैशिष्ट्य हो जाता है जिससे इसका दश प्रकार कहा जा रहा है ?—यह शङ्का कर कहते हैं—

आठ दिग्दलों में सञ्चरण करता हुआ यह उन-उन दिशाओं के स्वामी की चेष्टाओं का क्रमशः अनुकरण करता हुआ रौद्र और सौम्य प्रतीत होता है ॥ -१९७-१९८- ॥

उन-उन दिशापतियों की—इन्द्र आदि की । चेष्टित = स्तम्भन आदि रूप । रौद्र दक्षिण आदि में । सौम्य—पश्चिम आदि में । इसीलिए पुरुषों में प्रतिक्षण क्रोध और हर्ष आदि का अविर्भाव होता है । जैसा कि कहा गया है—

'पद्मस्याष्टदलस्येत्थं तन्मध्ये भोगभुक्सदा।
संस्थितः सर्वगोऽप्यस्मात्कारणात्सुप्रतीयते ॥
येनाशु विषयान्दृष्ट्वा विचारयति सादरम् ।
शोकः क्रोधो विषादो वा विस्मयस्ताप एव च ॥
हर्षो वाप्यथ संचिन्त्य हृदयेनैवं भाव्यते ।' इति ॥ १९७ ॥

एवमस्य सर्वत्र साम्येनावस्थानेऽपि मुख्यया वृत्त्या नाडीत्रय एव चारः— इत्याह—

**स एव नाडीत्रितये वामदक्षिणमध्यगे ॥ १९८ ॥**
**इन्द्वर्काग्निमये मुख्ये चरंस्तिष्ठत्यहर्निशम् ।**

नाडीत्रितये इति, इडापिङ्गलासुषुम्नात्मके । यदुक्तम्—

'दक्षिणे तु स्थितः सूर्यो वामे सोमो विराजते ।
पाके प्रकाशकत्वे च मध्यस्थश्चैव पावकः ॥' (स्व.तं. ७।५२)

इति यदुक्तम्—

'दशानां तु परं देवि नाडीत्रयमुदाहृतम् ।
बिन्दुनादात्मिके द्वे वै मध्ये शक्त्यात्मिका स्मृता॥' इति ।

नन्वत्र कथमसावहर्निशं चरन्नास्ते ?—इत्याशङ्क्याह—

---

"इस कारण सर्वत्र गमनशील भी (वह) इस प्रकार अष्टदल कमल के बीच भोग के भोक्ता (के रूप में) सदा स्थित प्रतीत होता है क्योंकि विषयों को देखकर शीघ्र सादर विचार करता है । शोक, क्रोध, विषाद, विस्मय, ताप अथवा हर्ष का चिन्तन कर हृदय से ही अनुभव करता है" ॥ १९७ ॥

इस प्रकार इसकी सर्वत्र समान रूप से स्थिति होने पर भी मुख्य रूप से तीन ही नाड़ियों में सञ्चार होता है—यह कहते हैं—

वह दिन रात वाम दक्षिण और मध्य, जो कि चन्द्र सूर्य और अग्निमय है, तीन मुख्य नाड़ियों में सञ्चरण करता हुआ स्थित है ॥ -१९८-१९९- ॥

तीन नाड़ियों में = इडा पिङ्गला और सुषुम्ना में । जैसा कि कहा गया है—

"दाहिनी ओर सूर्य बायीं ओर चन्द्र और पाक तथा प्रकाश करने वाला अग्नि मध्य में स्थित है ।" (स्व. तं. ७।५२)

जैसा कि कहा गया है—

"हे देवि ! दश नाड़ियों में तीन नाड़ियाँ प्रधान कही गई हैं । उनमें दो बिन्दु और नाद रूप हैं । मध्य में (वर्त्तमान सुषुम्ना नाडी) शक्तिरूप है ।"

**सार्धनालीद्वयं प्राणशतानि नव यत्स्थितम् ॥ १९९ ॥**
**तावद्वहन्नहोरात्रं चतुर्विंशतिधा चरेत् ।**

'षट्प्राणाश्चषकस्तेषां षष्टिर्नाली तथा तिथिः ।'

इत्याद्युक्त्या बाह्यायां घटिकायामन्तःप्राणचाराणां सषष्टिशतत्रयमुदियात्, इति बाह्येन सार्धेन घटिकाद्वयेन नवशतानि वहन् षष्टिघटिकात्म बाह्यमहोरात्रं चतुर्विंशतिभिः प्रकारैरर्थात् स एव समानश्चरेत्, येनात्र सषट्शतसहस्रैक-विंशत्यात्मकप्राणचाराश्रयेण चतुर्विंशतिः संक्रान्तीनामुदियात् । यदुक्तम्—

'चतुर्विंशतिसंक्रान्त्यः समधातोः स्वभावतः ।
शतानि नव वै हंस एकामेकां वहेत्सदा ॥'

(स्व.तं. ७।१६८) इति ।

'बाह्ये चैव त्वहोरात्रे अध्यात्मं तु वरानने ।
चतुर्विंशतिसंक्रान्तीः प्राणहंसस्तु संक्रमेत् ॥
अहनि द्वादश प्रोक्ता रात्रौ वै द्वादश स्मृताः ।'

(स्व०तं० ७।१६६) इति च ॥ १९९ ॥

एतदेव विभजते—

---

प्रश्न—यह (प्राण) दिन रात क्यों चलता रहता है ?—यह शङ्का कर कहते हैं—

(यह प्राण) ढाई घड़ी (= १ घंटा) में ९०० बार चलता है । एक दिन और रात्रि मिलाकर उसी प्रकार चलता हुआ २४ गुना (= २४ × ९०० = २१६००) बार चलता है ॥ -१९९-२००- ॥

"छ प्राण का एक चषक उन (चषकों) का साठ गुना एक नाडी फिर उसी प्रकार तिथि ।"

इत्यादि उक्ति के द्वारा बाहरी घटिका (= घड़ी) में ३६० प्राणचारों का उदय होता है । उस प्रकार बाध्य २॥ घटिका में ९०० बार चलता हुआ ६० घड़ी वाले एक दिन रात में २४ गुना वही समान वायु चलता है । जिससे इस (शरीर) में २१६०० प्राणचारों के आधार पर २४ संक्रान्तियों का उदय होता है । जैसा कि कहा गया है—

"समधातु (= स्वस्थ शरीर वाले मनुष्य) की स्वाभाविक रूप में २४ संक्रान्तियाँ होती हैं । एक-एक संक्रान्ति में (यह प्राणरूपी) हंस ९०० बार प्रवाहित होता है ।" (स्व. तं. ७।१६८)

"बाह्य दिन-रात और आध्यात्मिक (स्थिति) में हे वरानने ! यह प्राणहंस २४ संक्रान्तियाँ पार करता है । १२ संक्रान्तियाँ दिन में और बारह रात्रि में कही गई हैं" ॥ १९९ ॥ (स्व. तं. ७।१६६)

**विषुवद्वासरे प्रातः सांशां नालीं स मध्यगः॥ २०० ॥**
**वामेतरोदक्सव्यान्यैर्यावत्संक्रान्तिपञ्चकम् ।**
**एवं क्षीणासु पादोनचतुर्दशसु नालिषु ॥ २०१ ॥**
**मध्याह्ने दक्षविषुवन्नवप्राणशतीं वहेत् ।**
**दक्षोदगन्योदग्दक्षैः पुनः संक्रान्तिपञ्चकम् ॥ २०२ ॥**
**नवासुशतमेकैकं ततो विषुवदुत्तरम् ।**
**पञ्चके पञ्चकेऽतीते संक्रान्तेर्विषुवद्बहिः॥ २०३ ॥**
**यद्वत्तथान्तः सङ्क्रान्तिर्नवप्राणशतानि सा।**

'विषुवद्वासरे' रात्रिन्दिनसाम्यात्मनि मेषसंक्रान्तिदिने प्रातः सार्धशतचतुष्टयप्राण-चारात्मिकां सचतुर्भागां घटिकां मध्यगः सौषुम्नमार्गावस्थितः सन् स समान-स्तावद्वामेतरोदक्सव्यान्यैर्वामदक्षनाड्योः प्रत्येकं सार्धनालीद्वयं पञ्चधा गमागमैश्चरेत् यावद्वृषादिकन्यान्तं संक्रान्तिपञ्चकं भवेत्, येन सभागत्रयासु त्रयोदशसु घटिकासु व्यतीतासु मध्यनाड्यां मध्याह्नसमये दक्षविषुवत्तुलासंक्रान्तिर्नवप्राणशतीं वहेत्, सार्धघटिकाद्वयमुदियादित्यर्थः । ततोऽपि दक्षोदगन्योदग्दक्षैर्दक्षवामनाड्योः समानस्य

---

इसी का विभाग करते हैं—

मेष की संक्रान्ति के दिन प्रातःकाल में सांश नाड़ी में वह सुषुम्नावाही (प्राण) वाम और दक्षिण (नाडियों) में वाम (= उत्तर) फिर उत्तर (= दक्षिण) फिर उत्तर फिर सव्य (= दक्षिण) फिर अन्य (= उत्तर) इस प्रकार पाँच संक्रान्ति (२) + (२) करता है । इस प्रकार एक चौथाई कम चौदह (= १३।३।४) नाड़ियों में मध्याह्न में वह दक्षिण विषुवत् में ९०० बार चलता है । दक्षिण फिर उत्तर फिर अन्य (= दक्षिण) फिर उत्तर फिर दक्षिण के द्वारा पुनः पाँच संक्रान्ति करता है । इसके बाद विषुवत् के उत्तर में एक-एक में ९०० संक्रान्ति करता है । विषुवत् के बाहर पाँच-पाँच संक्रान्ति के बीत जाने पर जैसे (प्राण संक्रान्ति होती है) उसी प्रकार ९०० प्राणसंक्रान्ति भीतर भी होती हैं ॥ -२००-२०४- ॥

विषुवत् दिन में = जब रात और दिन बराबर होते है तब अर्थात् मेष की संक्रान्ति के दिन, प्रातः ४५० प्राणचारों वाली = चतुर्भागसहित (= १।१।४) घटिका तक, मध्यस्थ सुषुम्ना में स्थित हुआ वह = समान वायु, दक्षिण और वाम नाड़ियों में प्रत्येक में २।१।२ घड़ी तक पाँच गुना गमनागमन कर चलता रहता है। वृष से कन्या तक पॉच संक्रान्तियाँ होती है जिससे १३।३।४ घड़ियों के व्यतीत होने पर मध्य नाडी में मध्याह्न काल में दक्षिण विषुवत् = तुलासक्रान्ति । ९०० वाला यह प्राण ९०० बार चलता है अर्थात् २।१।२ घड़ी (उसमें) रहता है। उसके बाद दक्षिण वाम नाड़ियो में समान (प्राण) के पाँच बार गमागमन से

पञ्चधा गमागमैः पुनरेकैकं नवासुशतं प्रत्येकं सार्धनालीद्वयं वृश्चिकादिमीनान्तं सङ्क्रातिपञ्चकमुदेतीत्यर्थः । तदनन्तरं च मध्यनाड्यां सायमुत्तरं मेषसङ्क्रान्तिरूपं विषुवत् प्राग्वत्सार्धशतचतुष्टयप्राणचारात्म सचतुर्भागैकघटिकोदयं भवेद्येन त्रिंशद्-घटिकात्मनि दिने सङ्क्रान्तिद्वादशकमुदियात् । तत्र सङ्क्रान्तीनामेकादशकम-खण्डम्, एका तु सायंप्रातरर्धार्धिकया, तस्य चार्धद्वयस्य पक्षसन्धिवद्रात्रीयार्धद्वय-संमेलनेऽप्यखण्डत्वम्, इति सायंप्रातरुत्तरविषुवद्द्वयं मध्याह्नार्धरात्रयोश्च दक्षविषुवद्-द्वयमिति । यद्वक्ष्यति—

'रात्र्यन्तदिनपूर्वांशौ मध्याह्नो दिवसक्षयः ।
स शर्वर्युदयो मध्यमुदक्तो विषुतेदृशी ॥'

(तं० ६।२०५) इति ।

एतच्च दक्षविषुवद्दिनोदयाभिप्रायेण—

'दक्षिणादुत्तरं याति उत्तराद्दक्षिणं यदा ।
दक्षिणोत्तरसंक्रान्तिः सा चैवं संविधीयते ॥
दक्षिणस्यां यदा नाड्यां संक्रामेत्तु यदोत्तरम् ।
यावदर्धं तु तत्रस्थं मध्येनोत्तरतो वहेत् ॥
तावत्तु विषुवत्प्रोक्तमुत्तरं तूत्तरायणे ।
उत्तराद्दक्षिणायां तु संक्रामन्स वरानने ॥

---

पुनः एक-एक में ९०० के हिसाब से २।१।२ घड़ी तक की सीमा रखकर वृश्चिक से मीन तक पाँच संक्रान्तियाँ बनती हैं । उसके बाद मध्य नाड़ी में सायंकाल मेष की संक्रान्ति रूप विषुवत् पहले की भाँति ४५० प्राणचारात्मक १।१।४ घड़ी तक उदय होता है । इस प्रकार तीस घड़ी वाले दिन में १२ संक्रान्तियाँ उदित होती हैं। उनमें ११ संक्रान्तियाँ अखण्ड हैं और एक सांय और प्रातः आधी-आधी होती हैं । उन दोनों आधों को, पक्षसन्धि के समान, रात्रिकालीन दो आधों के साथ मिला देने पर वे भी अखण्ड हो जाती हैं । इस प्रकार सायं और प्रातः दो उत्तर विषुवत् और मध्याह्न और मध्य रात्रि में दो दक्षिण विषुवत् होते हैं । जैसा कि कहेंगे—

रात्रि का अन्त, दिन का पूर्वांश, मध्याह्न, सायं, रात्रि का उदय और (रात्रि का) मध्य इस प्रकार उत्तर विषुवत् से उदय होता है । (तं. आ. ६।२९६)

दक्षिण विषुवत् दिन के उदय के अभिप्राय से स्वच्छन्दतन्त्र में कहा गया है—

"जब (प्राण) दक्षिण से उत्तर और उत्तर से दक्षिण को जाता है तो इस प्रकार यह दक्षिणउत्तर संक्रान्ति होती हैं । जब दक्षिण नाड़ी में उत्तर की ओर संक्रमण करता है उसमें जितना आधा मध्य से उत्तर की ओर चलता है उतना उत्तरायण में उत्तर विषुवत् कहा गया है । हे वरानने ! उत्तर से दक्षिण में संक्रमण करता हुआ

यावदर्धं वहेत्तत्र अर्धं दक्षिणतो वहेत् ।
विषुवद्दक्षिणं तावद्दक्षिणायनजं प्रिये ॥' (स्व.तं. ७।१६३)

इत्यादि श्रीस्वच्छन्दशास्त्रेऽभिहितम् । न चान्तरपूर्व एवायं संक्रान्तीनामुदय इत्याह—'पञ्चक' इत्यादि । सङ्क्रान्तिरिति, विषुवद्रूपा । 'नवप्राणशतानि सा' इत्यनेन यथोक्तमेव मानं स्मारितम् ॥ २०३ ॥

एतदेवान्यत्राप्यतिदिशति—

**एवं रात्रावपीत्येवं विषुवद्दिवसात्समात् ॥ २०४ ॥**
**आरभ्याहर्निशावृद्धिह्राससङ्क्रान्तिगोऽप्यसौ ।**

इत्येवं बाह्येनाहोरात्रेण संक्रान्तिचतुर्विंशतेरुदयादि सर्वं समात् त्रिंशद्घटिका-द्विषुवद्दिवसादारभ्योक्तम्, अन्यथा ह्यहर्निशयोर्वृद्धिह्रासौ न स्यातां, येन संक्रान्तिष्वपि चयापचयाभ्याम् अहनि द्वादश संक्रान्तयो रात्रौ च, इत्येवं विभागनियमो नोक्त: स्यात् ॥ २०४ ॥

अत्र च विषुवत्संक्रान्तीनां विभागं स्फुटयति—

**रात्र्यन्तदिनपूर्वांशौ मध्याह्नो दिवसक्षय: ॥ २०५ ॥**

---

जितना आधा प्रवाहित होता है उसमें आधा दक्षिण से प्रवाहित होता है । हे प्रिये ! उतना दक्षिणायन वाला दक्षिण विषुवत् कहा जाता है ।'' (स्वं तं. ७।१६३ )

यह संक्रान्तियों का उदय आन्तर पूर्व नहीं है; इसलिए कहते हैं—'पञ्चक' इत्यादि। संक्रान्ति—विषुवत् रूपा । वह ९०० प्राणचार वाली होती है—इस (कथन) से पहले कहे गये परिमाण का स्मरण कराया गया ॥ २०३ ॥

इसी (विषय) को दूसरी जगह भी निर्दिष्ट करते हैं—

इसी प्रकार रात्रि में भी (प्राण सञ्चार होता है) । सम विषुवत् दिवस से आरम्भ कर दिन रात की वृद्धि और ह्रास में तथा संक्रान्ति में भी यह (समान वायु) चलता है ॥ -२०४-२०५- ॥

इस प्रकार बाह्य अहोरात्र के द्वारा २४ संक्रान्तियों का उदय आदि सब सम = ३० घड़ी वाले, विषुवत् दिवस से लेकर कहा गया । अन्यथा दिन और रात्रि के वृद्धि और ह्रास नहीं होंगे । संक्रान्तियों में भी उपचय और अपचय के द्वारा दिन में १२ और रात्रि में बारह संक्रान्तियाँ होती है—यह विभाग का नियम नहीं कहा गया होता ॥ २०४ ॥

यहाँ विषुवत्संक्रान्तियों का विभाग स्पष्ट करते हैं—

रात्रि का अन्त, दिन का पूर्वभाग, मध्याह्न, दिन का अन्त, रात्रि का प्रारम्भ और (रात्रि का) मध्य, ऐसा उत्तर से विषुवत् का उदय

**स शर्वर्युदयो मध्यमुदक्तो विषुतेदृशी ।**

मध्यमित्यर्थाच्छर्वर्याः । 'उदक्तः' इति उत्तराद्विषुवत आरभ्येत्यर्थः । यदुक्तम्—

'पूर्वाह्णे विषुवत्त्वेकं मध्याह्ने तु द्वितीयकम् ।
तृतीयं चापराह्णे वै अर्धरात्रे चतुर्थकम् ॥
चतुर्धा विषुवत्प्रोक्तमहोरात्रेण मुक्तिदम् ॥'
(स्व.तं. ७।१६७) इति ॥ २०५ ॥

नान्वासां चतसृणां संक्रान्तीनामेवं व्यपदेशे किं निमित्तम् ?—इत्याशङ्क्याह—

**व्याप्तौ विषेर्यतो वृत्तिः साम्यं च व्याप्तिरुच्यते ॥ २०६ ॥**
**तदर्हति च यः कालो विषुवत्तदिहोदितः ।**

वृत्तिरिति, 'विष्लृ व्याप्तौ' इति पाठात् । 'अर्हति' इत्यर्हेऽर्थे वतेः प्रयोगात् ॥ २०६ ॥

ननु विषुवत्संक्रान्तौ यद्येवं नियमस्तत्तदितरासु का व्यवस्था ?—इत्याशङ्क्याह—

**विषुवत्प्रभृति ह्रासवृद्धी ये दिनरात्रिगे ॥ २०७ ॥**

---

होता है ॥ -२०५-२०६ ॥

मध्य—अर्थात् रात्रि का (मध्य) । उदक्तः—उत्तर विषुवत् से आरम्भ करके । जैसा कि कहा गया—

"पूर्वाह्ण में एक विषुवत्, मध्याह्न में दूसरा, अपराह्ण में तीसरा और अर्धरात्रि में चौथा एक दिन रात में मुक्ति को देने वाला यह चार प्रकार का विषुवत् कहा गया है" ॥ २०५ ॥ (स्व. तं. ७।१६७)

प्रश्न—इन चार संक्रान्तियों के ऐसे वर्णन (विषुवत् कहने) का क्या कारण है ?—यह शङ्का कर कहते हैं—

चूंकि 'विष्लृ' धातु की वृत्ति (= तात्पर्य) व्याप्ति है । और व्याप्ति साम्य को कहा जाता है । जो काल उसके योग्य होता है वह यहाँ विषुवत् कहा गया है ॥ -२०६-२०७- ॥

वृत्ति—'विष्लृ व्याप्तौ' ऐसा पाठ होने से । 'अर्हति' इस का अर्थ है कि योग्य अर्थ में 'वति' प्रत्यय का प्रयोग हुआ है ॥ २०६ ॥

प्रश्न—यदि विषुवत् संक्रान्ति के विषय में यह नियम है तो दूसरी (संक्रान्तियों) में क्या व्यवस्था है?—यह शङ्का कर कहते हैं—

विषुवत् से लेकर एक दिन और रात्रि में होने वाले जो ह्रास और

**तत्क्रमेणैव संक्रान्तिह्रासवृद्धी दिवानिशोः।**

तत्क्रमेणेति, रात्रिदिनवृद्धिह्रास्यपरिपाट्या तेन पञ्चत्रिंशद्घटिके दिने चतुर्दश संक्रान्तयः, पञ्चविंशतिघटिकायां रात्रौ दशेति ॥ २०७ ॥

तदेवोपसंहरति—

**इत्थं समानमरुतो वर्षद्वयविकल्पनम् ॥ २०८ ॥**
**चार एकत्र नह्यत्र श्वासप्रश्वासचर्चनम् ।**

वर्षद्वय इति, संक्रान्तिचतुर्विंशतेरुदयात् । एकत्रेति, न तु प्राग्वत्प्राणापानात्मनि चारद्वये ॥ २०८ ॥

ननु किमत्र वर्षद्वयमेवोदियादुतान्यदपि ?—इत्याशङ्क्याह—

**समानेऽपि तुटेः पूर्वं यावत्षष्ट्यब्दगोचरम् ॥ २०९ ॥**
**कालसंख्या सुसूक्ष्मैकचारगा गण्यते बुधैः ।**

सुसूक्ष्मत्वे हेतुः 'एकचारगा' इति । पूर्वं हि तुट्याद्युदयश्चारद्वये प्रोक्तः—इत्येतदपेक्षया तत्र स्थौल्यं संभाव्यमिति भावः ॥ २०९ ॥

---

वृद्धि हैं उसी क्रम से दिन और रात्रि में संक्रान्तियों के ह्रास और वृद्धि होते हैं ॥ -२०७-२०८- ॥

उसी क्रम से = रात्रि और दिन के वृद्धि और ह्रास की रीति से । इससे ३५ घड़ी वाले दिन में १४ संक्रान्तियाँ तथा २५ घड़ी वाली रात्रि में दश संक्रान्तियाँ होती हैं (क्योंकि २(१/२) घड़ी की एक संक्रान्ति होती है) ॥ २०७ ॥

उसी का उपसंहार करते हैं—

इस प्रकार समान वायु की दो वर्ष की कल्पना हैं । इसका सञ्चरण एक स्थान में होता है । यहाँ श्वास प्रश्वास की चर्चा नहीं है ॥ -२०८-२०९- ॥

दो वर्ष—२४ संक्रान्तियों का उदय होने से । एकत्र = न कि पहले की भांति प्राण अपान रूप दो सञ्चरणों में ॥ २०८ ॥

प्रश्न—यहाँ दो ही वर्षों का उदय होता है या अन्य का भी ?—यह शङ्का कर कहते हैं—

समान वायु में भी तुटि से पूर्व ६० वर्ष तक की गणना की जाती है । एक चार में होने वाली यह गणना अत्यन्त सूक्ष्म होने से विद्वानों के ही द्वारा गिनी जाती है ॥ -२०९-२१०- ॥

सुसूक्ष्मता में हेतु हैं—'एकचारगा' अर्थात् एकप्राणचार में रहने वाली । पहले

नन्वत्राप्येवं विभागेन कोऽर्थ ?—इत्याशङ्क्याह—

**संध्यापूर्वाह्नमध्याह्नमध्यरात्रादि यत्किल ॥ २१० ॥**
**अन्तःसंक्रान्तिगं ग्राह्यं तन्मुख्यं तत्फलोदितेः ।**

एतदुपसंहरन्नन्यदवतारयति—

**उक्तः समानगः काल उदाने तु निरूप्यते ॥ २११ ॥**

तदेवाह—

**प्राणव्याप्तौ यदुक्तं तदुदानेऽप्यत्र केवलम् ।**
**नासाशक्त्यन्तयोः स्थाने ब्रह्मरन्ध्रोर्ध्वधामनी ॥ २१२ ॥**
**तेनोदानेऽत्र हृदयान्मूर्धन्यद्वादशान्तगम् ।**
**तुट्यादिषष्ठिवर्षान्तं विश्वं काले विचारयेत् ॥ २१३ ॥**

यदि परमत्रानयोः प्राणोदानयोरियान्विशेषो यत्प्राणस्य ब्रह्मरन्ध्रवर्तिनासिक्यद्वादशान्तमुदयस्थानमस्य तु ऊर्ध्वधामवर्तिशक्तिद्वादशान्तमिति । तेनेति, शक्तिद्वादशान्तं यावदुदानव्याप्तेः ॥ २१३ ॥

---

तुटि आदि का उदय दो चारों में कहा गया—इसलिए इसकी अपेक्षा उसमें स्थूलता की संभावना है ॥ २०९ ॥

अन्यत्र भी इस प्रकार विभाग करने से क्या प्रयोजन ?—यह शङ्का कर कहते हैं—

सन्ध्या, पूर्वाह्न, मध्याह्न, मध्यरात्रि आदि जो कुछ है वह सब अन्तःसंक्रान्ति से सम्बद्ध समझना चाहिए । उसमें फल का उदय होने से वह मुख्य है ॥ -२१०-२११- ॥

इसका उपसंहार करते हुए दूसरे का उपक्रम करते हैं—

समान से सम्बद्ध काल का वर्णन कर दिया गया । उदान वाले (काल) का निरूपण किया जा रहा है ॥ -२११ ॥

वही कहते हैं—

प्राणव्याप्ति के विषय में जो कहा गया वही उदान के विषय मे भी है । यहाँ केवल नासाशक्त्यन्त के स्थान पर ब्रह्मरन्ध्र और ऊर्ध्व धाम (समझना चाहिए) । इसलिए यहाँ उदान में हृदय से लेकर मूर्धन्य द्वादशान्त तक तुटि से लेकर साठ वर्ष का सम्पूर्ण काल का विचार करना चाहिए ॥ २१२-२१३ ॥

यहाँ इन दोनों प्राण और उदान में इतना अन्तर है कि प्राण का उदयस्थान ब्रह्मरन्ध्र में वर्त्तमान नासिक्यद्वादशान्त है और इसका ऊर्ध्वधाम में रहने

नन्वेवं कालीयो विभागः किं व्याने संभवेन्न वा ?—इत्याशङ्क्याह—

**व्याने तु विश्वात्ममये व्यापके क्रमवर्जिते ।**
**सूक्ष्मसूक्ष्मोच्छलद्रूपमात्रः कालो व्यवस्थितः ॥ २१४ ॥**

सूक्ष्मसूक्ष्मेति, स्पन्दमात्रात्मेत्यर्थः । अत्रैव विश्वात्ममयत्वादिविशेषणद्वारेण हेतुत्रयम्; अत एव चास्य व्यापकत्वात्मना विशेषेणाननाद् व्यानत्वम् ॥ २१४ ॥

एषां च क्रमेण सृष्ट्यादिपञ्चकृत्यकारित्वमस्ति—इत्याह—

**सृष्टिः प्रविलयः स्थेमा संहारोऽनुग्रहो यतः ।**
**क्रमात्प्राणादिके काले तं तं तत्राश्रयेत्ततः ॥ २१५ ॥**

तं तमिति, प्राणादिकम् । तत्रेति, सृष्ट्यादिकारित्वे ॥ २१५ ॥

एवं प्राणे चारमानादि सर्वमभिधाय तदानन्तर्येणानुजोद्देशोद्दिष्टं वर्णोदयं वक्तुमुपक्रमते—

**प्राणचारेऽत्र यो वर्णपदमन्त्रोदयः स्थितः ।**
**यत्नजोऽयत्नजः सूक्ष्मः परः स्थूलः स कथ्यते ॥ २१६ ॥**

---

वाला शक्तिद्वादशान्त । इस कारण—शक्तिद्वादशान्त तक उदान की व्याप्ति होने से ॥ २१३ ॥

प्रश्न—इस प्रकार का कालसम्बन्धी विभाग व्यान में सम्भव है या नहीं ?—यह शङ्का कर कहते हैं—

विश्वात्ममय व्यापक और क्रमरहित व्यान में केवल सूक्ष्म-सूक्ष्म उच्छलत्तारूप काल व्यवस्थित है ॥ २१४ ॥

सूक्ष्म-सूक्ष्म = केवल स्पन्दरूप । यहीं विश्वात्ममयत्व आदि विशेषण के द्वारा तीन हेतु कहे गए हैं । और इसीलिये इसके व्यापक होने से विशेष रूप से अनन (= प्राणन) करने के कारण यह व्यान है ॥ २१४ ॥

ये (= पाँच प्रकार वाले वायु) क्रमशः सृष्टि आदि पाँच कृत्य करते हैं—

यह कहते हैं—चूँकि सृष्टि, निग्रह, स्थिति, संहार और अनुग्रह ये क्रमशः प्राण आदि के काल में होते हैं इसलिए वहाँ उस-उस का आश्रयण करना चाहिए ॥ २१५ ॥

उस-उस = प्राण आदि का । वहाँ = सृष्टि आदि करने में ॥ २१५ ॥

इस प्रकार प्राण में चारमान आदि सबका कथन कर उसके बाद अनुजोद्दिष्ट वर्ण का उदय कहना प्रारम्भ करते हैं—

इस प्राणचार में जो वर्ण पद मन्त्र का उदय स्थित है वह यत्नज

इह तावत्प्राणचारे वर्णानां पदानां मन्त्राणां चोदय इति स्थितम् । स तु द्विधा—स्वारसिकः प्रायत्निकश्चेति । तत्राद्यो वर्णानां, तेषां नैयत्येन सर्वत्रैवाविशेषात्; द्वितीयस्तु पदानां मन्त्राणां च । ते हि वर्णवदपरिगणितत्वादनियताः, इति योगीच्छानिबन्धन एवैषामुदयः । यो हि यस्याभिप्रेतो मन्त्रादिः स तस्योदयं कारयेत्; अतश्च परेच्छाधीनत्वादेषां प्रायत्निक एवोदयः, स च समनन्तराह्निके प्रतिपादयिष्यते । यद्वक्ष्यति—

'इत्ययत्नजमाख्यातं यत्नजं तु निगद्यते ।'

(तं० ७।२) इति ॥ २१६ ॥

इह पुनर्वर्णोदय एवायत्नजः परसूक्ष्मस्थूलात्मतया त्रिप्रकारोऽभिधीयते । तत्र परस्यापि वर्णोदयस्य तरतमभावेन द्वैविध्यमिति परतमं तदुदयमभिधातुमुपक्रमते—

**एको नादात्मको वर्णः सर्ववर्णाविभागवान् ।**
**सोऽनस्तमितरूपत्वादनाहत इहोदितः ॥ २१७ ॥**

इह खल्वेक एव सर्ववर्णसामान्यात्मा सततोच्चरद्रूपत्वादनाहतशब्दाभिधेयो नादात्मको वर्ण 'उदितः' सततमेवोदयमान आस्त इत्यर्थः ॥ २१७ ॥

---

अयत्नज, सूक्ष्म, पर और स्थूल कहा जाता है ॥ २१६ ॥

प्राणचार में वर्णों पदों और मन्त्रों का उदय होता है यह निश्चित है । वह दो प्रकार का होता है—स्वाभाविक और यत्नज । उनमें से पहला वर्णों का है क्योंकि वे नियत रूप से सर्वत्र समान है । दूसरा पदों और मन्त्रों का है । वे वर्ण के समान परिगणित न होने से अनियत है इसलिए इनका उदय कराता है । अतः दूसरे की इच्छा के अधीन होने से इनका उदय प्रायत्निक ही है । वह बाद वाले आह्निक में बतलाया जायगा । जैसा कि कहेंगे—

"यह अयत्नज कहा गया । अब यत्नज कहा जाता है" ॥ २१६ ॥ (तं. आ. ७।२)

यहाँ वर्ण का उदय ही अयत्नज है (जो कि) पर सूक्ष्म और स्थूल रूप से तीन प्रकार का कहा जाता है । उनमें पर वर्णोदय भी परतर और परतम भाव से दो प्रकार का है । इसलिए उसके परतम उदय को कहने के लिए उपक्रम करते हैं—

नादात्मक वर्ण एक है जिसमें सब वर्ण बिना विभाग के रहते हैं । वह अनस्तमित रूप वाला होने के कारण अनाहत रूप इस (जगत्) में सतत उदीयमान है ॥ २१७ ॥

सभी वर्णों का सामान्यरूप से निरन्तर उच्चरित होने के कारण अनाहत शब्द से कहा जाने वाला नादात्मक वर्ण एक और उदित = निरन्तर ही उदीयमान

स एव च परमुपेयः—इत्याह—

**स तु भैरवसद्भावो मातृसद्भाव एष सः ।**
**परा सैकाक्षरा देवी यत्र लीनं चराचरम् ॥ २१८ ॥**

द्वितीयं परतमपि एषामुदयमभिधातुमाह—

**ह्रस्वार्णत्रयमेकैकं रव्यंगुलमथेतरत् ।**
**प्रवेश इति षड्वर्णाः सूर्येन्दुपथगाः क्रमात् ॥ २१९ ॥**
**इकारोकारयोरादिसन्धौ संध्यक्षरद्वयम् ।**
**एओ इति प्रवेशे तु ऐऔ इतिद्वयं विदुः ॥ २२० ॥**
**षण्ठार्णानि प्रवेशे तु द्वादशान्तललाटयोः ।**
**गले हृदि च बिन्द्वर्णविसर्गौ परितः स्थितौ ॥ २२१ ॥**

'रव्यंगुलम्' इति द्वादशाङ्गुलम्; अत एवाकारादेर्ह्रस्वत्रयस्योदयात्प्राणवाहे षट्त्रिंशदंगुलानि भवन्ति । इतरदिति, दीर्घत्रयम् । षड्वर्णा इति, अकाराद्यु-कारान्ताः । क्रमादिति—सूर्यपथे ह्रस्वानां त्रयमिन्दुपथे च दीर्घाणामिति । आदि-

---

है ॥ २१७ ॥

और वही परम उपेय है—यह कहते हैं—

वही भैरवसद्भाव है वही यह मातृसद्भाव है । वही वह परा एकाक्षरा देवी है जहाँ चर और अचर लीन होता है ॥ २१८ ॥

इनके दूसरे परतर उदय को बतलाने के लिए कहते हैं—

तीन ह्रस्व वर्ण (= अ इ उ, में से) प्रत्येक रवि (= १२)—अंगुल (प्राणवाह वाला है) फिर (प्राण के) प्रवेश में दूसरे (= दीर्घ आ ई ऊ) भी १२ अंगुल प्राणवाह वाला है । इस प्रकार छ वर्ण (= अ इ उ आ ई ऊ,) क्रमशः सूर्य और चन्द्र मार्ग पर चलने वाले हैं । उकार या ईकार तथा उकार (या ऊकार वर्णों) की आदि (= अ आ) के साथ सन्धि होने पर ए ओ दो सन्ध्यक्षर बनते हैं । और प्रवेश में (= पुनः अ या आ के साथ युक्त होने पर) ऐ और औ ये दो (सन्ध्यक्षर) माने (गए) हैं । (प्राण के) प्रवेश में षण्ठ वर्ण (= ऋ और ऌ) द्वादशान्त और ललाट में (उदित होते हैं) बिन्दु वर्ण (= अनुस्वार) और विसर्ग कण्ठ और हृदय में चारो ओर स्थित हैं ॥ २१९-२२१ ॥

रव्यंगुल = बारह अंगुल । इसलिए अकार आदि तीन ह्रस्व वर्णों का उदय होने से प्राणवाह में ३६ अंगुल होते हैं । अन्य = तीन दीर्घ । छ वर्ण = अ से लेकर ऊ तक । क्रमशः = सूर्यपथ में तीन ह्रस्वों का और चन्द्रपथ में तीन दीर्घों

संधाविति, अकारेणाकारेण च 'संधौ' संधिकार्ये कृते सतीत्यर्थः । अस्यैव संध्यक्षरद्वयस्यादिसंधावितरत्संध्यक्षरद्वयम् । एषां च प्रत्येकमष्टादशांगुलमुदयो येन प्राणापानवाहयोर्व्याप्तिः सिद्ध्येत् । प्रवेश इति न तु निर्गमेऽपि । द्वादशान्तेति न तु समचतुर्भागकलनया, तेन द्वादशान्ते ऋकारः, इत्यादि क्रमः । 'परितः' इति सर्वतः । तेन प्राणे बिन्दोः षट्त्रिंशदङ्गुलात्मन्यभ्युदयो विसर्गस्य त्वपाने, द्वयोरपि बिन्दुनादात्मकत्वात् ॥ २२१ ॥

एतदेवान्यत्राप्यतिदिशति—

**कादिपञ्चकमाद्यस्य वर्णस्यान्तः सदोदितम्।**
**एवं सस्थानवर्णानामन्तः सा सार्णसन्ततिः ॥ २२२ ॥**

अन्तरिति, तेन यदेवाकारस्योदयस्थानं तदेव कवर्गस्येति । सस्थानवर्णानामितीकारादीनां सा सेति चवर्गादिका, तदिकारोदयस्थाने चवर्गस्य यकार-शकारयोश्चोदय इत्यादिक्रमः ॥ २२२ ॥

ननु सर्वत्रायं नियमः किं संभवेन्न वा ?—इत्याशङ्क्याह—

---

का (उदय होता है) । आदि सन्धि में = अकार और आकार के साथ सन्धि में = सन्धि कार्य किए जाने पर । इन्हीं दो सन्ध्यक्षरों की पुनः आदि दो अक्षरों के साथ सन्धि करने पर अन्य दो सन्ध्यक्षर (उदित होते हैं) । इनमें से प्रत्येक का अठारह अंगुल उदय होता है जिससे प्राणवाह और अपानवाह की व्याप्ति सिद्ध होती है । प्रवेश में—न कि निर्गम में भी । द्वादशान्त में—न कि समान चार भाग की गणना से । इससे द्वादशान्त में ऋकार (और ललाट में ऌकार) यह क्रम समझना चाहिए। परितः = सर्वतः । इसलिए ३६ अंगुल वाले प्राण में बिन्दु का उदय और अपान मे विसर्ग का (उदय) होता है । क्योंकि दोनों बिन्दु और नाद रूप हैं ॥ २२१ ॥

यही अन्यत्र भी बतलाते हैं—

क आदि पाँच (= क...ङ) आद्य वर्ण (= अ) के अन्दर सदा उदित हैं । इसी प्रकार सस्थान वर्णों (इ, ऋ, ऌ, उ) के भीतर वह-वह वर्ण सन्तति (= चवर्ग यश, टवर्ग र ष, तवर्ग लस, प वर्ग व) उदित होती है ॥ २२२ ॥

अन्तः—इस कारण जो अकार का उदय स्थान है वही कवर्ग का भी है । सस्थान वर्णों का = इकार आदि का । वह-वह = अवर्ग आदि । इस प्रकार इकार के उदयस्थान में चवर्ग यकार और शकार का उदय होता है—इत्यादि क्रम है ॥ २२२ ॥

यह नियम सर्वत्र सम्भव है या नहीं ?—यह शङ्का कर कहते हैं—

**हृद्येष प्राणरूपस्तु सकारो जीवनात्मकः ।**
**बिन्दुः प्रकाशो हार्णश्च पूरणात्मतया स्थितः ॥ २२३ ॥**

यद्यपि सस्थानतया सकारस्य दन्ता उदयस्थानं हकारस्य च कण्ठ-स्तथापि प्राणात्मजीवनरूपत्वात्सकारो हृद्युदेति हकारश्च प्रकाशात्मकत्वात्सर्वत इति ॥ २२३ ॥

एतदुपसंहरन्नन्यदवतारयति—

**उक्तः परोऽयमुदयो वर्णानां सूक्ष्म उच्यते ।**

सूक्ष्मश्च त्रिधेति । तत्र सूक्ष्मसूक्ष्मं तावदुदयमाह—

**प्रवेशे षोडशौन्मुख्ये रवयः षण्ठवर्जिताः ॥ २२४ ॥**
**तदेवेन्द्वर्कमत्रान्ये वर्णाः सूक्ष्मोदयस्त्वयम् ।**

षोडशेति, अपानवाहस्यानन्दप्राधान्यात्; अत एव परोदयेऽप्यपानवाह एव षण्ठवर्णानामुदय उक्तः । 'औन्मुख्ये' इति निर्गमे । तेनापाने प्रत्येकं सचतुर्भाग-मंगुलद्वयमुदयः प्राणे पुनरंगुलत्रयमिति । तदेव वर्णानां षोडशकं द्वादशकं वावलम्ब्यान्ये सस्थानाः कवर्गाद्या इन्द्वर्कप्राणापानविषये समुदयन्ति—इत्यत्र

---

यह प्राणरूप जीवनात्मक सकार हृदय में (उदित होता है) बिन्दुरूप ह वर्ण प्रकाशरूप होने से सर्वव्यापी रूप में स्थित हैं ॥ २२३ ॥

यद्यपि समानस्थानता के कारण स का उदयस्थान दन्त और हकार का (उदय-स्थान) कण्ठ है तथापि प्राणात्मक जीवन रूप होने के कारण सकार हृदय में उदित होता है और हकार प्रकाशात्मक होने से सर्वत्र ॥ २२३ ॥

इसका उपसंहार करते हुए दूसरे की अवतारणा करते हैं—

वर्णों का यह पर उदय कहा गया । अब सूक्ष्म कहा जा रहा है ॥ २२४- ॥

सूक्ष्म तीन प्रकार का होता है । उनमें से सूक्ष्म सूक्ष्म उदय को कहते हैं—

षण्ठ वर्णों को छोड़कर प्रवेश में सोलह और औन्मुख्य में रवि (= बारह, वर्ण उत्पन्न होते हैं) । वही चन्द्र और सूर्य है यहाँ अन्य वर्ण उदित होते हैं । यह सूक्ष्म उदय हैं ॥ -२२४-२२५- ॥

सोलह =अपानवाह के आनन्दप्रधान होने से । इस लिए पर उदय में भी अपानवाह में ही षण्ठ वर्णों का उदय कहा गया । औन्मुख्य में = निर्गम में । इस प्रकार अपान में प्रत्येक उदय २।१।४ अंगुल का है और प्राण में तीन अंगुल का। तो इस प्रकार सोलह या बारह वर्णों के आधार पर अन्य समानस्थान वाले कवर्ग आदि चन्द्र और सूर्य = प्राण और अपान के विषय में उदित होते हैं । इस प्रकार

सूक्ष्मेऽपि वर्णोदये सूक्ष्मोऽयमुदय इत्यर्थः ॥ २२४ ॥

एवं सूक्ष्मसूक्ष्मं वर्णोदयमभिधाय सूक्ष्मस्थूलमप्याह—

**कालोऽर्धमात्रः कादीनां त्रयस्त्रिंशत उच्यते ॥ २२५ ॥**
**मात्रा ह्रस्वाः पञ्च दीर्घाष्टकं द्विस्त्रिःप्लुतं तु लॄ ।**

दीर्घाष्टकमिति, संध्यक्षरैः सह । द्विरिति, द्विमात्रं, त्रिरिति त्रिमात्रं, दीर्घाणां च प्लुतत्वेऽपि तन्नोक्तं तस्योच्चारणापेक्षत्वात्; नह्येषां दीर्घत्ववत्प्लुतत्वमपि स्वाभाविकमिति भावः । एवं लॄकारस्यापि प्लुतत्वमेव स्वभावः—इति दीर्घत्वापरिगणनेन तदेवेहास्य प्राधान्येनोक्तमिति न कश्चिद्दोषः । तेन कादीनां त्रयस्त्रिंशदर्धमात्राः ह्रस्वानां दश, दीर्घाणां द्वात्रिंशत्, प्लुतस्य षडित्येकाशीतिरर्धमात्राणामिति ॥ २२५ ॥

नन्वेवं विभाजने किं प्रमाणम् ?—इत्याशङ्क्याह—

**एकाशीतिमिमामर्धमात्राणामाह नो गुरुः ॥ २२६ ॥**

तस्याप्येवमभिधाने क इवाशयः ?—इत्याशङ्क्याह—

---

यहाँ सूक्ष्म वर्णोदय में यह सूक्ष्म उदय है ॥ २२४ ॥

इस प्रकार सूक्ष्म-सूक्ष्म वर्णोदय का कथन कर अब सूक्ष्म-स्थूल को भी कहते हैं—

क् आदि ३३ वर्णों का काल आधी मात्रा वाला कहा जाता है । ह्रस्व मात्राएँ ५ हैं, आठ दीर्घ दो मात्राओं और प्लुत तीन मात्राओं का होता है। ॡ (दीर्घ नहीं होता वह प्लुत होता है ॥ -२२५-२२६- ॥

दीर्घ आठ होते हैं—सन्ध्यक्षरों के साथ । द्विः = दो मात्रा वाला । त्रिः = तीन मात्रा वाला । दीर्घ प्लुत भी होते हैं (किन्तु) यह नहीं कहा गया क्योंकि उनके (= प्लुत के) उच्चारण के लिए प्रयास करना पड़ता है । इनका प्लुतत्व दीर्घत्व के समान स्वाभाविक नहीं हैं । इसी प्रकार ॡकार का भी प्लुत ही स्वभाव है । इसलिए दीर्घत्व की गणना न कर उसी (= प्लुत) को यहाँ प्रधान रूप से कहा गया । इसलिए कोई दोष नहीं हैं । इस प्रकार क आदि ३३ अर्ध मात्रा वाले, ह्रस्व १०, दीर्घ ३२ और प्लुत ६ इस प्रकार ८१ अर्धमात्रायें होती हैं ॥ २२५ ॥

प्रश्न—इस प्रकार के विभाजन में क्या प्रमाण है ?—यह शङ्का कर कहते हैं—

हमारे गुरु ने अर्धमात्राओं की (संख्या) ८१ कही है ॥ -२२६ ॥

उन (= हमारे गुरु) के इस कथन में क्या तात्पर्य है ? यह शङ्का कर कहते

यद्वशाद्भगवानेकाशीतिकं मन्त्रमभ्यधात् ।

यद्वशादिति, अस्याः परस्या मन्त्रमातुरेकाशीतिमात्रासद्भावात् । एकाशीतिकमिति, तावत्संख्याकपदारब्धत्वात् ॥

ननु भगवतो व्योमव्याप्यभिधानेऽप्येतन्निमित्तमित्यत्र किं प्रमाणम् ?—इत्याशङ्कयाह—

**एकाशीतिपदा देवी शक्तिः प्रोक्ता शिवात्मिका॥ २२७ ॥**
**श्रीमातङ्गे तथा धर्मसङ्घातात्मा शिवो यतः ।**

शक्तिरिति, व्योमव्यापिरूपा । प्रोक्तेति श्रीमातङ्गे । यदुक्तम् तत्र—

'एकाशीतिपदा देवी या सा शक्तिः शिवात्मिका ।'

(म० तं० १।७।३१) इति ।

तथा

'मन्त्राश्च शक्तिगर्भस्थाः शक्तिर्वै पारमेश्वरी ।
कालानलान्तमध्वानं शिवाद् व्याप्तं यया मुने ॥
एकाशीतिदोपेता विद्यापादे मयोदिता ।' (म० तं०) इति ।

नन्वस्या व्योमव्यापिरूपिण्याः पारमेश्वर्याः शक्तेस्तत्तद्भृदादिमन्त्रात्मकत्वेऽपि

---

है—

जिस कारण भगवान् ने ८१ मन्त्रों को कहा ॥ २२७ ॥

जिस कारण—इस पर मन्त्रमातृ में ८१ मात्राएँ होने के कारण । एकाशीतिक—उतनी संख्या वाले पदों से आरब्ध होने के कारण ॥ २२७ ॥

प्रश्न—भगवान् के व्योमव्यापी कथन में भी यह कारण है—इसमें क्या प्रमाण है ?—यह शङ्का कर कहते हैं—

मातङ्ग तन्त्र में देवी शिवात्मिका शक्ति ८१ पदों वाली कही गई हैं । क्योंकि शिव उसी प्रकार के धर्मों का सङ्घात हैं ॥ -२२७-२२८- ॥

शक्ति—व्योमव्यापी रूप । कही गई है—मातङ्ग तन्त्र में । जैसा कि वहाँ कहा गया है—

"जो ८१ पदों वाली देवी है वह शिवात्मिका शक्ति है ।" (म. तं. १।७।३१) तथा

"हे मुनि ! मन्त्र शक्ति के गर्भ में रहते हैं और शक्ति परमेश्वर की हैं जिसके द्वारा शिव से लेकर कालपर्यन्त अध्वा व्याप्त है । ८१ पदों से युक्त वह मेरे द्वारा विद्यापाद में कही गई है ।" (म. तं.)

कथं शिवात्मकत्वमपि स्यात् ?—इत्याशङ्क्योक्तं—'तथेत्यादि' । यत्तथोक्तेन प्रकारेण धर्माणां

'पत्युर्धर्माः शक्तयस्तु..........................।' (म०तं० १।२०)

इत्याद्युक्त्या शक्तीनामेकाशीत्यात्मा यः सङ्घातस्तदात्मा शिवः—इति सामस्त्येनास्यास्तदात्मकत्वम् । तदुक्तं तत्र—

'एकत्रैव समस्तानि एकाशीतिपदानि तु ।
अष्टषष्ठ्यधिकं प्रोक्तं वर्णानां तु शतत्रयम् ॥
अर्चा तु देवदेवस्य समस्तव्यस्तरूपिणी ।' इति ।
'एकोऽपि वर्णो देवानां वाचकः परिकीर्तितः ।
सर्वेऽप्येकस्य युज्यन्ते यतस्ते विश्वमूर्तयः ॥' इति च ॥

न चैतदागमेनैव सिद्धं यावद्युक्तितोऽपि—इत्याह—

**तथा तथा परामर्शशक्तिचक्रेश्वरः प्रभुः ॥ २२८ ॥**
**स्थूलैकाशीतिपदजपरामर्शैर्विभाव्यते ।**

'शक्तिमतः खलु शक्तिरनन्या' इत्याद्युक्तयुक्त्या वस्तुतः सर्वशक्त्यविभिन्न-स्वभावोऽपि 'प्रभुः' परमेश्वरः शिवस्तत्तद्वर्णारब्धत्वात् स्थूलानि यान्येकाशीतिपदानि तज्जा ये प्रणवाद्याः परामर्शास्तैस्तथा तथा सर्वात्मानन्तादितया परामर्शो

---

प्रश्न—इस व्योमव्यापिनी पारमेश्वरी शक्ति के उन-उन हृदादि मन्त्रात्मक होने पर भी कैसे (वह) शिवात्मक भी होगी ? यह शङ्का कर कहा गया—'तथा इत्यादि' । तथा = उक्त प्रकार से धर्मों का—

"शक्तियाँ तो पति के धर्म है ।" (म. तं. १।२०)

इत्यादि उक्ति के द्वारा ८१ शक्तियों का जो सङ्घात है तदात्मक ही शिव हैं—इस प्रकार सम्पूर्णतया यह (शक्ति) तदात्मक है । वही वहाँ कहा गया है—

"८१ पद एक ही जगह सङ्घटित हैं । वर्ण ३६८ है । देवाधिदेव की पूजा समस्तव्यस्तरूपिणी है ।"

"एक भी वर्ण देवताओं का वाचक कहा गया है सभी एक के (वाचक) हो सकते हैं क्योंकि वे (एक-एक वर्ण) विश्वमूर्त्ति हैं" ॥

यह आगम से ही नहीं युक्ति से भी सिद्ध है—यह कहते हैं—

वह परमेश्वर स्थूल इक्यासी पदों से उत्पन्न परामर्शों के द्वारा उस-उस प्रकार से परामर्शशक्तिचक्र का ईश्वर समझा जाता है ॥ -२२८-२२९- ॥

शक्ति शक्तिमान् से अभिन्न है—इत्यादि उक्त युक्ति के द्वारा वस्तुतः सभी शक्तियों से अभिन्न स्वभाव वाला भी प्रभु = परमेश्वर शिव, भिन्न-भिन्न वर्णों से

यस्यैवंविधो यद्भृदादिशक्तिचक्रं तस्य 'ईश्वरः' संयोजनवियोजनकारी 'विभाव्यते' एवं यस्य ज्ञप्तिः क्रियते इत्यर्थः । अत एव चात्र सर्वात्मादीनां यावता परामर्शः सिद्ध्येत् तावत्येव पदत्वं, येनैकाशीतित्वं स्यात् ॥ २२८ ॥

तदाह—

**तत एव परामर्शो यावत्येकः समाप्यते ॥ २२९ ॥**
**तावत्तत्पदमुक्तं नो सुप्तिङ्नियमयन्त्रितम् ।**

नो सुप्तिङ्नियमः, तथात्वे हि

'नमः शिवायेति पदं षडर्णं प्रणवादिकम् ।'

इत्याद्युक्त्यैकत्वेऽप्यस्य पदस्य त्रिपदत्वमापतेदिति गणना विसंवदेत् ॥२२९॥

ननु यद्येवं तदेकाशीत्यर्धमात्रात्मिकेयमेव भगवती परा शक्तिरवस्थितेति किमनेनैतत्समव्याप्तिकेन व्योमव्यापिनोपदिष्टेन ?—इत्याशङ्क्याह—

**एकाशीतिपदोदारविमर्शक्रमबृंहितः ॥ २३० ॥**
**स्थूलोपायः परोपायस्त्वेष मात्राकृतो लयः ।**

---

आरब्ध होने के कारण स्थूल जो इक्यासी पद उनसे उत्पन्न जो प्रणव आदि परामर्श वे, उस-उस प्रकार सर्वात्म अनन्त आदि चक्र, उसका ईश्वर = संयोग वियोग करने वाला, जाना जाता है अर्थात् इस प्रकार जिसका ज्ञान किया जाता है । और इसीलिए यहाँ जितने से सर्वात्म आदि का परामर्श सिद्ध हो सके उतना ही पद है जिससे (वे) इक्यासी हैं ॥ २२८ ॥

वही कहते हैं—

इसीलिए जितने में एक परामर्श समाप्त होता है उतना वह (= एक) पद कहा गया है न कि सुप् और तिङ् से नियमित को पद कहते हैं ॥ -२२९-२३०- ॥

सुपतिङ् नियम नहीं है क्योंकि ऐसा होने पर—

"प्रणव आदि में है जिसके ऐसा ॐ नमः शिवाय पद छ वर्णों वाला है ।"

इत्यादि उक्ति से एक पद होने पर भी यह तीन पद हो जाएगा और गणना से विरोध हो जायेगा ॥ २२९ ॥

प्रश्न—यदि ऐसा है तो ८१ अर्ध मात्रा वाली यह भगवती पराशक्ति है ही फिर इसके समान व्याप्ति वाले व्योमव्यापी का उपदेश करने से क्या लाभ?—यह शङ्का कर कहते हैं—

इक्यासी पदों के उदार विमर्श के क्रम से बढ़ाया गया यह

'लयः' इति स्वात्ममात्रविश्रान्तिः । 'स्थूलोपायः' इत्यनेनोपदेश्यभेदादुपदेशस्यापि भेदः—इति प्रकाशितम् ॥ २३० ॥

एवमेतत्प्रसङ्गादभिधाय प्रकृतमेवानुसरति—

**अर्धमात्रा नव नव स्युश्चतुर्षु चतुर्षु यत् ॥ २३१ ॥**
**अंगुलेष्विति षट्त्रिंशत्येकाशीतिपदोदयः ।**

प्रत्यंगुलचतुष्टयं नवार्धमात्राः—इत्यंगुलषट्त्रिंशदात्मनि प्राणचारेऽर्धमात्राणामेकाशीतिरुदियात् ॥ २३१ ॥

आसां चोदये विभागान्तरमस्ति—इत्याह—

**अङ्गुले नवभागेन विभक्ते नवमांशकाः ॥ २३२ ॥**
**वेदा मात्रार्धमन्यत्तु द्विचतुःषड्गुणं त्रयम् ।**

एकैकस्मिन्नंगुले नवधा विभाजिते षट्त्रिंशतोअंगुलानां सचतुर्विंशतिशतत्रयं मानं भवेत् । भागानां तत्रैकैकस्यार्धमात्रात्मनो व्यञ्जनस्य चत्वारो नव भागा उदयस्थानमित्युक्तं 'नवमांशका वेदाः मात्रार्धम्' इति । अन्यत्पुनर्ह्रस्वदीर्घप्लुत-

---

स्थूल उपाय मात्रा के द्वारा किया गया लय (होने पर) परोपाय (हो जाता है) ॥ -२३०-२३१- ॥

लय = स्वात्ममात्र में विश्रान्ति । 'स्थूलोपाय' इस कथन के द्वारा उपदेश्य के भेद से उपदेश का भी भेद होता है—यह प्रकाशित किया गया ॥ २३० ॥

इस प्रकार प्रसङ्गवश यह कथन कर अब प्रस्तुत का अनुसरण करते हैं—

जो चार अंगुल के अन्तराल में ९-९ आधी मात्राएँ होने से (४ × ९) ३६ अर्धमात्राएँ होती हैं और इक्यासी पदों का उदय होता है ॥ -२३१-२३२- ॥

एक चतुरंगुल में ९ अर्धमात्राएँ—इस प्रकार ३६ अंगुल वाले प्राणचार में ८१ अर्धमात्राएँ उदित होगी ॥ २३१ ॥

इनके उदय में विभागन्तर भी है—यह कहते हैं—

एक अंगुल को नव भागों में विभक्त करने पर वेद (= ४) नवमांश = आधी मात्रा होती है । अन्य तीन (= ह्रस्व दीर्घ और प्लुत) दो, चार और छः गुना (नवमांश वाले) हैं ॥ -२३२-२३३- ॥

एक-एक अंगुल को नव भाग में बाँटने पर ३६ अंगुलों का ३२४ मान होता है । उनमें एक-एक भाग आधामात्रा का होता है । इस प्रकार व्यंज्जन का उदयस्थान चार नव भाग (= ४।९) है । वही कहा गया—'चार नवमांश आधा

लक्षणं त्रयं द्विचतुःषड्गुणं, ह्रस्वस्यैकमात्रत्वादष्टौ नव भागा उदयस्थानं, दीर्घस्य द्विमात्रत्वात्षोडश, प्लुतस्य त्रिमात्रत्वाच्चतुर्विंशतिः ॥

एतदेव सङ्कलयति—

**एवमङ्गुलरन्ध्रांशचतुष्कद्वयगं लघु ॥ २३३ ॥**
**दीर्घं प्लुतं क्रमाद् द्वित्रिगुणमर्धं ततोऽपि हल्।**

'रन्ध्रांशानां' नवभागानां 'चतुष्कद्वयम्' अष्टौ नवभागा इत्यर्थः । लघ्विति, ह्रस्वं 'ततो' लघोरपीत्यर्थः । तेन पञ्चानां ह्रस्वानां प्रत्येकमष्टसु भागेषूदयाच्चत्वारिंशन्नव नव भागा भवन्ति, दीर्घाणामष्टानां प्रत्येकं षोडशभागकलनया साष्टाविंशतिशतम् इति । प्लुतस्य चतुर्विंशतिस्त्रयस्त्रिंशतां हलां प्रत्येकं भागचतुष्टयकलनया द्वात्रिंशदधिकं शतमिति । यद्यप्येकाशीतेरर्धमात्राणां प्रत्येकमङ्गुलीयाश्चत्वारो नव भागा उदयस्थानमित्येव स्पष्टमभिधातव्यं, तथाप्येवमभिधानेऽयमाशयो यदादौ ह्रस्वानामुदयस्तदनन्तरं दीर्घाणां प्लुतस्य व्यञ्जनानां च, इति क्रमः प्रदर्शितो भवेदिति ॥ २३३ ॥

नन्वेतन्मध्ये क्षकारश्चेद् गण्यते तदा कियत्योऽर्धमात्रा अधिकीभवन्ति, तथात्वे

---

मात्रा वाले हैं' । और दूसरे ह्रस्व दीर्घ प्लुत स्वरूप तीन दो चार, और छः गुने (मान) वाले (उदय स्थान) हैं । ह्रस्व का, एक मात्रा होने से आठ नव भाग (= ८।९) उदय स्थान है, दीर्घ का, दो मात्रा होने के कारण सोलह नवमांश और प्लुत का चौबीस (नवमांश उदयस्थान हैं) ॥ २३२ ॥

इसी का संग्रह बतलाते हैं—

इस प्रकार एक अंगुल के रन्ध्रांश = नवमांश के चार का दो गुना (= ४×२।९) लघु होता है । दीर्घ और प्लुत क्रमशः दो और तीन गुना और उस (= लघु) का आधा हल् होता है ॥ -२३३-२३४- ॥

रन्ध्रांशों का = नव भागों का, चतुष्कद्वय = आठ नवभाग । लघु = ह्रस्व । उससे = लघु से । इस प्रकार पाँच ह्रस्वों में से प्रत्येक का आठ भागों में उदय होने से (८ × ५) = ४० नवभाग होता है । आठ दीर्घ (वर्णों) का प्रत्येक का सोलह भाग मानने पर (१६ × ८) = १२८ (नव भाग होते हैं) । प्लुत की २४ मात्रा, और तैंतीस हलों के प्रत्येक ४ भाग को जोड़ने से १३२ (नवमांश होते हैं) । यद्यपि इक्यासी अर्धमात्राओं का प्रत्येक ४।९ अंगुल उदयस्थान हैं—ऐसा स्पष्ट कहना चाहिए तो भी इस प्रकार के कथन में यह आशय है कि—पहले ह्रस्व (वर्णों) का उदय होता है उसके बाद दीर्घ प्लुत (वर्णों) और व्यञ्जनों का (उदय होता है)—ऐसा क्रम प्रदर्शित हो जाय ॥ २३३ ॥

प्रश्न—यदि इसके बीच में क्षकार की गणना की जाय तो कितनी अर्धमात्राएँ

वासां कथमुदयः ?—इत्याशङ्क्याह—

**क्षकारस्त्र्यर्धमात्रात्मा मात्रिकः स तथान्तरा ॥ २३४ ॥**
**विश्रान्तावर्धमात्रास्य तस्मिंस्तु कलिते सति ।**
**अङ्गुलार्धेऽद्रिभागेन त्वर्धमात्रा पुरा पुनः ॥ २३५ ॥**
**क्षकारः सर्वसंयोगग्रहणात्मा तु सर्वगः ।**
**सर्ववर्णोदयाद्यन्तसन्धिषूदयभाग्विभुः ॥ २३६ ॥**

कथमस्य त्र्यर्धमात्रात्मकत्वमित्याशङ्क्योक्तं—'मात्रिकः' इत्यादि । ककारसकारात्मकार्धमात्राद्वयारब्धत्वात् । अन्तरा विश्रान्ताविति, ककारान्तरमर्धमात्रीयं कालं विश्रम्य सकारस्योच्चारात् । 'कलिते' इत्येकाशीत्या, तेनार्धमात्राणां चतुरशीतिरिति । 'अद्रि' इति सप्त । अङ्गुलार्धे हि सप्तधा विभक्ते प्रत्यङ्गुलं चतुर्दश भागाः—इति षट्त्रिंशतोऽङ्गुलानां सचतुष्टयं शतपञ्चकं भागानां भवेत् । तेनार्धाङ्गुलीयेषु षट्सु सप्तभागेष्वर्धमात्रेति षट्त्रिंशदङ्गुलात्मनि प्राणचारे चतुरशीतेरर्धमात्राणामुदय इति । नन्वेवमेकाशीतिकलोदयपक्षे क्षकारस्य नास्त्येवोदयः-इत्युक्तं स्यादित्याशङ्क्याह—पुरेत्यादि । सर्वसंयोगग्रहणात्मेति, संयोगान्तलक्षणपरत्वात् ।

---

अधिक होंगी ? या वैसा होने पर इन (= अर्धमात्राओं) का कैसे उदय होगा ?—यह शङ्का कर कहते हैं—

क्षकार की तीन अर्धमात्राएँ हैं । वह बीच में एक (= ष्) मात्रिक हैं । बीच में विश्रान्ति होने पर इसकी आधी मात्रा होती है । उससे (= इक्यासी से) इसको जोड़ने पर (चौरासी मात्राएँ होती हैं) । आधे अंगुल को अद्रि (= सात) से भाग देने पर आधी मात्रा होती है । क्षकार सभी संयोग का ग्रहण रूप और सर्वत्र गमनशील हैं । (वह) विभु (होने के कारण) सभी वर्णों के उदय के आदि और अन्त की सन्धियों में उदय का भागी होता है ॥ -२३४-२३६ ॥

यह तीन अर्धमात्रा वाला कैसे है?—यह शङ्का कर कहा गया—मात्रिक इत्यादि । ककार एवं सकार रूप दो अर्ध मात्राओं से आरब्ध होने के कारण । (वह मात्रिक है) । अन्तरा = विश्रान्ति में । ककार के (उच्चारण के बाद) आधा मात्रा वाले काल तक विश्राम करने के बाद सकार का उच्चारण होता है । 'जोड़ने पर'—इक्यासी से । इस प्रकार चौरासी अर्धमात्राएँ हो जाती हैं । अद्रि = सात । आधा अंगुल को सात भाग करने पर एक अंगुल में चौदह भाग होगें—इस प्रकार ३६ अंगुल के ५०४ भाग होंगे । इससे आधी अंगुली वाले छः × सात (४२) भागों में आधी मात्रा होने से ३६ अंगुल वाले प्राणचार में ८४ अर्धमात्राओं का उदय होता है । प्रश्न—इस प्रकार ८१ कलाओं के उदय के पक्ष में क्षकार का उदय ही नहीं होगा—ऐसा कहना चाहिए था ?—यह शङ्का कर कहते हैं—पहले ।

यदुक्तं प्राक्—

'योनिरूपेण तस्यापि योगे क्षोभान्तरं विदुः ।
तन्निदर्शनयोगेन पञ्चाशत्तमवर्णता ॥'

(तं० ३।१८९) इति ।

अनुत्तरविसर्गानुप्राणितयोः ककारसकारयोः प्रत्याहारतयोपादाने निखिलस्य वर्णजातस्य गर्भीकारात् । अत एवायं सर्ववर्णानामादावन्ते परस्परं संमेलनात्मनि 'संधौ' चोदयभाक्सर्ववर्णानुस्यूततयोदियात्, यतोऽयं विभुः' व्यापक इत्यर्थः ॥ २३६ ॥

नन्वेवं वर्णोदयेनाभिहितेन कोऽर्थः ?—इत्याशङ्क्याह—

**इत्थं षट्त्रिंशके चारे वर्णानामुदयः फले ।**
**क्रूरे सौम्ये विलोमेन हादि यावदपश्चिमम् ॥ २३७ ॥**

'वर्णानाम्' इत्यकारादीनां, उदय इत्यर्थाद्धृदयाद्द्वादशान्तम् । 'क्रूरे' इति मुक्तिलक्षणे, 'सौम्ये' इति तत्तत्सिद्ध्यात्मनि भोगलक्षणे । 'विलोमेन' इत्यर्थादपानोदये । विलोममेवाह—'हादि यावदपश्चिमम्' इति । तदुक्तम्—

---

सर्वसंयोगग्रहणरूप—क्योंकि संयोगान्त लक्षणपरक हैं । जैसा कि पहले कहा गया है—

"उस (= क आदि) का भी योनि के रूप में योग होने पर दूसरा क्षोभी होता है । उस (दूसरे क्षोभ) के निदर्शन के कारण (क्षकार) पचासवाँ वर्ण होता है ।" (तं. आ. ३।१८१)

अनुत्तर और विसर्ग से अनुप्राणित ककार और सकारको प्रत्याहार के रूप में लेने पर समस्त वर्णसमूह के गर्भ में आ जाने से । इसीलिए यह (= क्षकार) सभी वर्णों के आदि और अन्त में परस्पर सम्मेलनस्वरूप सन्धि में उदय का भागी होता है = सभी वर्णों में अनुस्यूत होकर उदित होता है जिस कारण यह विभु = व्यापक हैं ॥ २३५-२३७ ॥

प्रश्न—इस प्रकार वर्णों के उदय के कथन से क्या लाभ?—यह शङ्का कर कहते हैं—

इस प्रकार (प्राण के) ३६ चार में वर्णो का उदय होता है । उसका फल क्रूर और सौम्य है । विलोम से (लेने पर) हकार से लेकर अपश्चिम (अन्त) तक (उदय होता है) ॥ २३७ ॥

**वर्णों का** = अकार आदि का । उदय—हृदय से लेकर द्वादशान्त तक । **क्रूर में** = मुक्ति लक्षण वाले में । **सौम्य में** = भिन्न-भिन्न सिद्धिस्वरूप भोगलक्षण वाले में । **विलोम से** = अर्थात् अपान का उदय होने पर । विलोम को ही कहते हैं—

'अधः प्रवहणे सिद्धिर्हृत्पद्मं यावदागतः ।
मुक्तिश्चैव भवेदूर्ध्वे परतत्त्वे तु सुव्रते ॥'
(स्व०तं० ७।५६) इति ।

वस्तुतस्त्वकारस्य हृद्युदयस्थानं, हकारस्य तु द्वादशान्त इति ॥ २३७ ॥

एवमेतदुपजीवनेनैव सूक्ष्मपरमपि वर्णानामुदयमाह—

**हृद्यकारो द्वादशान्ते हकारस्तदिदं विदुः ।**
**अहमात्मकमद्वैतं यः प्रकाशात्मविश्रमः ॥ २३८ ॥**

अद्वैतमिति, प्रत्याहारक्रमेणाशेषवर्णान्तःकारात् । प्रकाशेति, यदुक्तम्—

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ।'
(अ०प्र०सि० २२) इति ॥ २३८ ॥

एतच्चापानोदयेऽप्येतिदेष्टुमाह—

**शिवशक्त्यविभागेन मात्रैकाशीतिका त्वियम् ।**
**द्वासप्ततावङ्गुलेषु द्विगुणत्वेन संसरेत् ॥ २३९ ॥**

शिवशक्त्योरविभाग इति, बिन्दुनादात्मप्राणापानोभयमेलनायामित्यर्थः ।

---

ह से लेकर अन्तिम तक । वही कहा गया है—

"हे सुव्रते ! नीचे की ओर बहने में सिद्धिप्रद (जप) हृदयकमल तक आता है। ऊर्ध्व परतत्त्व में जप का प्रवाह होने से मुक्ति होती हैं ।" (स्व. तं. ७।५६)

वस्तुतः अकार का उदय स्थान हृदय है और हकार का द्वादशान्त ॥ २३७ ॥

इस प्रकार इसी के कारण वर्णो का सूक्ष्म और पर उदय भी कहते हैं—

हृदय में अकार और द्वादशान्त में हकार (का उदय होता है) । इसको अहमात्मक अद्वैत मानते हैं जो कि प्रकाश की आत्मविश्रान्ति है ॥ २३८॥

अद्वैत—प्रत्याहार के क्रम से सभी वर्णों को अन्तः (= स्वात्म में समाहित) कर लेने के कारण । प्रकाश—जैसा कि कहा गया है—

"प्रकाश की स्वरूप में विश्रान्ति अहंभाव कही गई हैं" ॥ २३८ ॥ (अ. प्र. सि. १।२२)

इसको अपान के उदय में भी अतिदिष्ट करने के लिए कहते हैं—

शिव और शक्ति का विभाग न होने से यह इक्यासी मात्रा बहत्तर अंगुल में दो गुने रूप में चलती हैं ॥ २३९ ॥

शिव शक्ति का अविभाग—बिन्दु नादात्मक प्राण अपान दोनों को मिलाने पर ।

एकाशीतिरित्युपलक्षणं, तेन चतुरशीतिरपि । द्विगुणत्वेनेति, षट्त्रिंशतोअंगुलानाम् ॥ २३९ ॥

एतदुपसंहरन्नन्यदवतारयति—

**उक्तः सूक्ष्मोदयस्त्रैधं द्विधोक्तस्तु परोदयः ।**
**अथ स्थूलोदयोऽर्णानां भण्यते गुरुणोदितः ॥ २४० ॥**

अथ इत्यानन्तर्ये । गुरुणोदित इति सर्वशेषः ॥

तत्र वर्गक्रमेण तावद्वर्णानां स्थूलमुदयमाह—

**एकैकमर्धप्रहरं दिने वर्गाष्टकोदयः ।**
**रात्रौ च ह्रासवृद्ध्यत्र केचिदाहुर्न केऽपि तु॥ २४१ ॥**

ह्रासवृद्धीति, बाह्यमहोरात्रमपेक्ष्यानपेक्ष्य वा ॥ २४१ ॥

तत्र बाह्याहोरात्रानपेक्षिमते साम्येनैवैषामुदयः—इत्याह—

**एष वर्गोदयो रात्रौ दिवा चाप्यर्धयामगः ।**

---

इक्यासी—यह उपलक्षण है । इससे चौरासी भी (समझना चाहिए) । दो गुने रूप में—छत्तीस अंगुलों का ॥ २३९ ॥

इसका उपसंहार करते हुए दूसरे (विषय) की अवतारणा करते हैं—

**सूक्ष्म** उदय तीन प्रकार का कहा गया । परोदय दो प्रकार का कहा **गया** । अब गुरु के द्वारा कहा गया वर्णों का स्थूल उदय कहा जा रहा **है** ॥ २४० ॥

अथ (शब्द) आनन्तर्य अर्थ में है ।'गुरु के द्वारा कहा गया'—इसे सबके अन्त में जोड़ना चाहिए ॥ २४० ॥

वर्ग के क्रम से वर्णों का स्थूल उदय बतलाते हैं—

दिन के एक-एक अर्ध प्रहर के हिसाब से आठ वर्गों का उदय होता है । रात्रि में ह्रास और वृद्धि को कुछ लोग मानते हैं कुछ लोग नहीं ॥ २४१ ॥

ह्रास और वृद्धि—बाह्य दिनरात्रि की अपेक्षा करके और अपेक्षा न करके ॥ २४१ ॥

उनमें से बाह्य अहोरात्र की अपेक्षा न करने वालों के मत में इनका उदय साम्यपूर्वक होता है—यह कहते हैं—

यह वर्ग का उदय रात्रि और दिन में आधे पहर के हिसाब से होता

'अर्धयामग' इति, प्रतिवर्गं सार्धचतुरङ्गुलमुदय इत्यर्थः ॥

एवं बाह्याहोरात्रानपेक्षिमतमभिधाय तदितरेषोमपि दर्शयति—

**प्राणत्रयोदशशती पञ्चाशदधिका च सा ॥ २४२ ॥**
**अध्यर्धा किल संक्रान्तिर्वर्गे वर्गे दिवानिशोः ।**

सेति प्राणचारीया सार्धत्रयोदशशती । 'अध्यर्धा' इति सार्धा, प्रतिसंक्रान्ति नवानां प्राणचारशतानामभिधानात् । तेन दिने द्वादशानां संक्रान्तीनामुदयः, इति साष्टशतं सहस्रदशकं प्राणचाराणां भवेत् । रात्रावप्येवं सषट्शतसहस्रैक-विंशतिः ॥ २४२ ॥

अहोरात्रमेलनायां पुनः प्रतिसंक्रान्तित्रयमेकैकस्य वर्गस्योदयः—इत्याह—

**तदैक्ये तूदयश्चारशतानां सप्तविंशतिः ॥ २४३ ॥**

एवं प्रागुक्तसंक्रान्तिद्वयवद् बाह्याहोरात्रह्रासवृद्ध्यनुसारं वर्गाष्टकोदयस्यापि ह्रासवृद्धी भवतः—इति सिद्धम्, अन्यथा प्रतिवर्गोदयं प्राणचाराणां नैयत्यं न

---

है ॥ २४२- ॥

आधे पहर के हिसाब से—प्रतिवर्ग ४।१।२ अंगुल उदय होता है ॥

इस प्रकार बाह्य अहोरात्र की अपेक्षा न रखने वाले मत को कह कर उससे भिन्न लोगों का भी (मत) दिखलाते हैं—

पचास अधिक तेरह सौ (= १३५०) प्राणचार—यह १।१।२ संक्रान्ति रात और दिन के एक-एक वर्ग में होती है ॥ -२४२-२४३- ॥

वह = प्राणचार वाली १३५० । अध्यर्धा = आधे के सहित प्रति संक्रान्ति = सार्धा; क्योंकि एक संक्रान्ति में ९०० प्राणचारों का उदय कहा जाता है । इस प्रकार दिन में १२ संक्रान्तियों का उदय होता है उससे १०८०० प्राणचारों का (उदय) होता है । रात्रि में भी इतना ही । इस प्रकार २१६०० (प्राणचार उदित होते हैं) ॥ २४२ ॥

दिन रात को मिला देने पर पुनः तीन-तीन संक्रान्ति के हिसाब से एक-एक वर्ग का उदय होता है—यह कहते हैं—

उनको एक कर देने पर २७०० प्राणचारों का उदय होता है ॥ -२४३ ॥

इस प्रकार पहले कही गई दो संक्रान्ति के समान बाह्य अहोरात्र के ह्रास और वृद्धि के अनुसार आठ वर्ग के उदय के भी ह्रास और वृद्धि होते हैं—यह सिद्ध हो गया । अन्यथा एक-एक वर्ग के उदय में प्राणचारों की निश्चितता नहीं

स्यात् ॥ २४३ ॥

ननु क्षकारेण सह नव वर्गाः—इति येषां मतं तत्रैषामुदये प्राणचाराणां कीदृग्विभागः ?—इत्याशङ्क्याह—

**नव वर्गांस्तु ये प्राहुस्तेषां प्राणशती रवीन् (विः) ॥**
**सत्रिभागैव संक्रान्तिर्वर्गे प्रत्येकमुच्यते ॥ २४४ ॥**
**अहर्निशं तदैक्ये तु शतानां श्रुतिचक्षुषी ।**

रवीनिति—द्वादश । सत्रिभागेति—प्राणशतत्रयस्याधिक्येनोपदानात् । तेन प्रतिवर्गं प्राणचाराणां शतद्वादशकम्—इति वर्गनवके साष्टशतं सहस्रदशकं भवेत् 'तदैक्ये' इत्यहर्निशमेलने । 'श्रुतिचक्षुषी' इति चतुर्विंशतिः ॥

एवं वर्णानां वर्गक्रमेण स्थूलमुदयमभिधाय क्रमान्तरेणाप्याह—

**स्थूलो वर्गोदयः सोऽयमथार्णोदय उच्यते ॥ २४५ ॥**

तदाह—

**एकैकवर्णे प्राणानां द्विशतं षोडशाधिकम् ।**
**बहिश्चषकषट्त्रिंशद्दिन इत्थं तथा निशि ॥ २४६ ॥**

---

होगी ॥ २४३ ॥

प्रश्न—क्षकार के साथ नव वर्ग होते हैं—ऐसा जिनका मत है वहाँ इनके उदय में प्राणचारों का कैसा विभाग होगा ?—यह शङ्का कर कहते हैं—

जो लोग नव वर्गों का कथन करते हैं उनके हिसाब से १२०० प्राण (= चार प्रतिवर्ग होता है) । रात और दिन में प्रत्येक वर्ग (९०० के) तीसरे भाग के (= प्रतिसंक्रान्ति) सहित (= १२००) संक्रान्ति प्रत्येक वर्ग में कही जाती है । उनको मिला देने पर श्रुति चक्षुष (चौबीस) सौ (प्राणचार) होते हैं ॥ २४४-२४५- ॥

रवीन् = बारह । त्रिभाग के सहित—तीन सौ प्राणचारों के अधिक होने से । इससे प्रतिवर्ग बारह सौ प्राणचार होते हैं । इस प्रकार नव वर्गों में १०८०० (प्राणचार) होते हैं । तदैक्य में = दिन और रात को मिला देने पर । श्रुतिचक्षुषी = चौबीस (सौ प्राणचार होते हैं) ॥ २४४ ॥

इन वर्णों का वर्गक्रम से स्थूल उदय कह कर क्रमान्तर से भी कहते हैं—

यह स्थूल वर्गोदय है । अब वर्ण का उदय कहा जाता है ॥ -२४५ ॥

वही कहते हैं—

एक-एक वर्ण (के उदय) में २१६ प्राणचार होते हैं । बाह्य दृष्टि से

चषकषट्त्रिंशदिति, प्रतिचषकं षण्णां प्राणचाराणामुदयात् । तेन पञ्चाशतो वर्णानां साष्टशतं सहस्रदशकं प्राणचाराणां स्यात् ॥ २४६ ॥

अत्र चोदये विशेषं दर्शयति—

**शतमष्टोत्तरं तत्र रौद्रं शाक्तमथोत्तरम् ।**
**यामलस्थितियोगे तु रुद्रशक्त्यविभागिता ॥ २४७ ॥**

'यामलस्थितियोगे' इत्युभयसंमेलनायाम् ॥ २४७ ॥

एतदेव चाहोरात्रसंमेलनायां द्विगुणी भवेत्—इत्याह—

**दिनरात्र्यविभागे तु दृग्वह्न्यब्ध्यसुचारणाः ।**
**सपञ्चमांशा नाडी च बहिर्वर्णोदयः स्मृतः ॥ २४८ ॥**

दृग्वह्न्यब्धिरिति, द्वात्रिंशदधिकं शतचतुष्टयम् 'असुचारणाः' इति प्राण-सञ्चारणाः । सपञ्चमांशा नाडीति, चषकषट्त्रिंशतो द्वैगुण्यात् ॥ २४८ ॥

एतदुपसंहरन्नन्यदतारयति—

**इति पञ्चाशिका सेयं वर्णानां परिचर्चिता ।**

---

३६ चषक दिन में तथा उतने ही रात्रि में (प्राणचार होते हैं) ॥ २४६ ॥

३६ चषक—प्रति चषक ६ प्राणचारों का उदय होने से ।

इस प्रकार (एक दि अर्थात् १२ घण्टों में) पचास वर्णों का १०८०० प्राणचार होता है ॥ २४६ ॥

इस उदय में विशेष दिखलाते हैं—

उसमें १०८ रौद्र उसके बाद शाक्त होता है । यामल स्थिति में रुद्र और शक्ति का विभाग नहीं रहता ॥ २४७ ॥

यामलस्थितियोग = दोनों को मिला देने पर ॥ २४७ ॥

यही अहोरात्र को मिला देने पर दूना हो जाता है—यह कहते हैं—

दिन रात को मिला देने पर दृक् (= २) वह्नि (= ३) अब्धि (= ४) (अर्थात् ४३२) संख्याक प्राणचार होता है । बाह्यरूप में वर्ण का उदय काल १।१।५ नाड़ी कहा गया है ॥ २४८ ॥

दृक् वह्नि अब्धि = ३२ अधिक ४ सौ; असुचारण = प्राणसञ्चार । सपञ्चमांशा नाडी = ३६ चषक को दो गुना करने से ॥ २४८ ॥

इसका उपसंहार करते हुए दूसरे की अवतारणा करते हैं—

इस प्रकार वर्णों की पञ्चाशिका (= ५० मातृकाओं) का वर्णन

**एकोनां ये तु तामाहुस्तन्मतं संप्रचक्ष्महे ॥ २४९ ॥**

तदाह—

**वेदाश्चाराः पञ्चमांशन्यूनं चारार्धमेकशः ।**
**वर्णेऽधिकं तद्द्विगुणमविभागे दिवानिशोः ॥ २५० ॥**

'वेदा'श्चत्वारः । पञ्चमांशेनार्थात्किंचिदंशेन 'न्यूनं' रहितम् । अधिकमिति, षोडशाधिकशतद्वयस्योपरीत्यर्थः । तेनैकोनपञ्चाशतो वर्णानां प्रत्येकं षोडशाधिकशतद्वयात्मकत्वात् चतुरशीतिशतपञ्चकाधिकं सहस्रदशकं प्राणचारा भवन्ति, अधिकैश्च प्रत्येकं चतुर्भिः सषण्णवतिशतम् । अनेन च चाराणां सार्धचतुर्विंशतेः किंचिदंशन्यूनं पञ्चभागं विंशति (?) साष्टशतं सहस्रदशकम् ॥ २५० ॥

एतदेवोपसंहरति—

**स्थूलो वर्णोदयः सोऽयं पुरा सूक्ष्मो निगद्यते ।**

सूक्ष्म इत्यर्थात्परोऽपि पुरा निगदित इत्यर्थः ॥ २५१ ॥

इदानीमाह्निकार्थमार्यायाः प्रथमार्धेनोपसंहरति—

**इति कालतत्त्वमुदितं शास्त्रमुखागमनिजानुभवसिद्धम् ।**

---

किया गया । जो लोग उसे उन्चास वाली मानते हैं, उनका मत कह रहे हैं ॥ २४९ ॥

उसे कहते हैं—

चार (प्राण) चार पञ्चमांश कम आधाचार एक वर्ण में अधिक होता है । दिन रात को मिला देने पर उसका दूना (अधिक होता है) ॥ २५०॥

वेद =चार । पञ्चमांश से अर्थात् थोड़े अंश से, न्यून = रहित । अधिक— २१६ के ऊपर । इस प्रकार ४९ वर्णों में से प्रत्येक के २१६ (प्राणचारा)त्मक होने से १०५८४ प्राणचार होते हैं । प्रत्येक के साथ ४ अधिक होने से १९६, और इससे २४।१।२ चारों का कुछ अंश न्यून पाँच भाग = १०८२० होता है ॥ २५० ॥

इसी का उपसंहार करते हैं—

यह स्थूल वर्णोदय हैं । सूक्ष्म पहले ही कहा गया ॥ २५१ ॥

सूक्ष्म—अर्थात् पर भी पहले कह दिया गया ॥ २५१ ॥

अब इस आह्निक का प्रतिपाद्य आर्या के पूर्वार्द्ध से समाप्त करते हैं—

इस प्रकार शास्त्रमुख के वचन तथा अपने अनुभव से सिद्ध काल

मुखागमेति—'शैवी मुखमिहोच्यते' (वि०भै० २० श्लोक)

इत्यादिन्यायेन परतत्त्वप्रवेशोपायत्वाद् गुरुस्तस्य 'आगमो' वचनमित्यर्थः । सिद्धमिति—

'यतः शास्त्रक्रमात्तज्ज्ञगुरुप्रज्ञानुशीलनात् ।
आत्मप्रत्ययितं ज्ञानं पूर्णत्वाद्भैरवायते ॥' (तं० ४।७७)
इत्याद्युक्तयुक्त्या पारिपूर्ण्येन लब्धसिद्धीति शिवम् ॥
प्राणापानसमाश्रयचारप्रविचारचातुरीनिष्ठः ।
षष्ठाह्निके वरिष्ठां विवृत्तिमिमां जयरथश्चक्रे ॥

**॥ इति श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तविरचिते श्रीतन्त्रालोके श्रीजयरथविरचितविवेकाभिख्यव्याख्योपेते कालतत्त्व-प्रकाशनं नाम षष्ठमाह्निकं समाप्तम् ॥ ६ ॥**

---

तत्त्व कहा गया ॥ २५२ ॥

**॥ इस प्रकार श्रीमदाचार्य अभिनवगुप्तपादविरचित श्रीतन्त्रालोक के षष्ठ आह्निक की डॉ० राधेश्यामचतुर्वेदीकृत 'ज्ञानवती' हिन्दी टीका सम्पूर्ण हुई ॥ ६ ॥**

मुखागम—'इस (शास्त्र) में शैवी मुख कहा जाता है ।' (वि. भै. २०)

इत्यादि न्याय के अनुसार परतत्त्व में प्रवेश के लिए उपाय होने से (यह) गुरु हैं उसका आगम = वचन ।

सिद्ध है—

''क्योंकि शास्त्र के अध्ययन के क्रम तथा उसके ज्ञानी गुरु की प्रज्ञा के अनुशीलन से आत्मा के (विषय में) निश्चित ज्ञान पूर्ण होने के कारण (साधक) भैरवरूप में स्फुरित होता है ।'' (तं. आ. ४।६६)

इत्यादि उक्त युक्ति से परिपूर्णता के द्वारा सिद्धि को प्राप्त ।

**॥ इस प्रकार आचार्यश्रीजयरथकृत श्रीतन्त्रालोक के षष्ठ आह्निक की 'विवेक' नामक व्याख्या की डॉ० राधेश्यामचतुर्वेदीकृत 'ज्ञानवती' हिन्दी टीका सम्पूर्ण हुई ॥ ६ ॥**

# सप्तममाह्निकम्

* विवेक *

तत्तन्मन्त्राभ्युदयप्रगुणीकृतचण्डभैरवावेशः ।
विद्रावितभवमुद्रो द्रढयतु भद्राणि जयरुद्रः ॥

इदानीं कालतत्त्वानुषक्तमेव द्वितीयार्धेन चक्रोदयं वक्तुमुपक्रमते—

**अथ परमरहस्योऽयं चक्राणां भण्यतेऽभ्युदयः ॥ १ ॥**

चक्राणामिति मन्त्राद्यात्मनाम् ॥ १ ॥

ननु सर्वमन्त्रसामान्यभूताया भगवत्या मातृकायाः समनन्तरमेवोदय उक्तः, तत्तद्विशेषरूपाणां मन्त्राद्यात्मनां चक्राणामप्युदयाभिधाने किं निमित्तम् ?— इत्याशङ्क्याह—

* ज्ञानवती *

भिन्न-भिन्न मन्त्रों के अभ्युदय के द्वारा कई गुना किए गए चण्ड भैरव के आवेश वाले, भव मुद्रा को हटाने वाले, जयरुद्र मङ्गल को पुष्ट करें ।

अब द्वितीय श्लोकार्ध से काल तत्त्व से सम्बद्ध चक्रोदय को कहने के लिए उपक्रम करते हैं—

अब परम रहस्यस्वरूप यह चक्रों का उदय कहा जा रहा है ॥ १ ॥

चक्रों का—मन्त्र आदि स्वरूप वाले (चक्रों का) ॥ १ ॥

प्रश्न—सभी मन्त्रों की सामान्यभूता भगवती मातृका का उदय अव्यवहित पूर्व में कहा गया, उन-उन विशेष रूप वाले मन्त्रात्मक चक्रों के भी उदय के कथन का क्या कारण है ?—यह शङ्का कर कहते हैं—

**इत्ययत्नजमाख्यात यत्नजं तु निगद्यते ।**

नन्वेतन्निगदनेन कोऽर्थः—इत्याशङ्क्याह—

**बीजपिण्डात्मकं सर्वं संविदः स्पन्दनात्मताम् ॥ २ ॥**
**विदधत्परसंवित्तावुपाय इति वर्णितम् ।**

सर्वमिदं बीजपिण्डात्मकं मन्त्रजातम् अर्थात्प्राणान्तरुदयत् संविदः स्पन्दनात्मतां शाक्तस्वरूपावेशं विदधत् परसंवित्तावुपायः पारम्पर्येण शाम्भवमपि रूपमाविशेत्,—इत्याणवोपाये वर्णतत्त्वान्तर्वर्णितं तन्नास्यानर्थक्यमित्यर्थः ॥ २ ॥

नन्विह मन्त्राणां प्राणान्तरेवमुदयः—इत्यभिधातु प्रक्रान्तं, स च यत्नजः, इति तत्र यत्ने क्रियमाणे तदेव सिद्धयेत् नान्यदिति कथमत्रैव परसंविदुपायत्वमप्येषां स्यात् ?—इत्याशङ्क्याह—

**यथारघट्टचक्राग्रघटीयन्त्रौघवाहनम् ॥ ३ ॥**
**एकानुसंधियत्नेन चित्रं यन्त्रोदयं भजेत् ।**
**एकानुसंधानबलाज्जाते मन्त्रोदयेऽनिशम् ॥ ४ ॥**

---

इस प्रकार अयत्नज (उदय) कहा गया । यत्नज का कथन किया जा रहा है ॥ २- ॥

प्रश्न—इसके कथन से क्या लाभ ?—यह शङ्का कर कहते हैं—

बीजपिण्डात्मक सम्पूर्ण (मन्त्रसमूह) संविद् की स्पन्दनात्मता का विधान करता हुआ पर संवित्ति के विषय में उपाय (बन जाता है) इस कारण (इसका) वर्णन (प्रस्तुत) है ॥ -२-३- ॥

यह सब बीजपिण्डात्मक मन्त्रसमूह अर्थात् प्राण के भीतर उदित होता हुआ संविद् की स्पन्दनात्मता = शाक्तस्वरूप आवेश का विधान करता हुआ परसंविद् के विषय में उपाय होता हुआ परम्परया शाम्भव रूप में भी आविष्ट होता है—इसलिए आणवोपाय में बीच में वर्णतत्त्व का वर्णन किया गया इसलिये यह निरर्थक नहीं है ॥ २ ॥

प्रश्न—मन्त्रों का प्राण के भीतर इस प्रकार उदय होता है—यह कहने के लिए उपक्रम हुआ और वह (= उदय) यत्नज है—इसलिए उस विषय में प्रयास किए जाने पर वही सिद्ध होगा दूसरा नहीं तो कैसे यहीं पर ये परसंवित् के उपाय भी हो जायेंगे ?—यह शङ्का कर कहते हैं—

जिस प्रकार रहट के चक्र के अग्र (भाग में लगा हुआ) घटी (= छोटी-छोटी बाल्टी) के समूह के द्वारा वाहन, एक से सम्बद्ध प्रयत्न के द्वारा विचित्र यन्त्र के उदय को प्राप्त होता है (उसी प्रकार) एक

**तन्मन्त्रदेवता यत्नात्तादात्म्येन प्रसीदति ।**

इहारघट्टवाहकस्य यन्त्रमात्रवाहनक्रियाविषयत्वात् एकेनैवानुसंधानेन अरघट्ट-चक्राग्रगतघटीसंबन्धिनो यन्त्रस्यौघेन नैरन्तर्येण वाहनं यथा 'चित्रं यन्त्रोदयं भजेत्' ऊर्ध्वाधोमुखरिक्तपूर्णघटीचक्रात्मना वैचित्र्येण निष्पत्तिमियात्, तथा साधकस्यानिशं मन्त्रोदयविषयेणैकेनैवानुसंधानेन न केवलमेतदुदय एव सिध्येत् यावत्तन्नान्तरीयक-तया प्रयत्नान्तरमन्तरेण एतन्मन्त्रदेवतापि तादात्म्येन प्रसीदतीति । इदमत्र तात्पर्यम्—यथा हि यन्त्रं वाहयन् अरघट्टवाहकस्तत्र वैचित्र्यान्तरमपि प्रयत्नान्तर-निरपेक्षमासादयेत्, एवं साधकोऽपि मन्त्रोदय एव प्रयतमानः परसंविदै-कात्म्यमिति । एवं चक्रोदयः परसंविदासादने निमित्तमित्यावश्याभिधेयः,—इत्युक्तं स्यात् ॥ ४ ॥

तदाह—

**खे रसैकाक्षि नित्योत्थे तदर्धं द्विकपिण्डके ॥ ५ ॥**
**त्रिके सप्त सहस्राणि द्विशतीत्युदयो मतः ।**
**चतुष्के तु सहस्राणि पञ्च चैव चतुःशती ॥ ६ ॥**

---

अनुसन्धान के बल से निरन्तर मन्त्र का उदय होने पर उस मन्त्र की देवता भी तादात्म्य के कारण बिना प्रयास के प्रसन्न हो जाती हैं ॥-३-५-॥

जैसे रहट चलाने वाले के केवल यन्त्र (= गोलचक्का) चलाने की क्रिया करने से एक ही अनुसन्धान से रहट के चक्के के अग्रभाग में लगी हुई बाल्टी से सम्बद्ध यन्त्र के समूह से निरन्तर वाहन, विचित्र यन्त्रोदय को प्राप्त होता है (अर्थात्) ऊपर नीचे मुख वाले खाली और भरी हुई बाल्टियों के चक्कर रूप वैचिच्य के साथ पूर्णता की प्राप्त होता है; उसी प्रकार रात दिन मन्त्रोदयविषयक एक अनुसन्धान से न केवल साधक मन्त्रोदय सिद्ध होता है बल्कि उसके नान्तरीयक होने के कारण अन्य प्रयास के बिना भी उस मन्त्र के देवता भी तादात्म्य के कारण प्रसन्न हो जाते हैं । यहाँ यह तात्पर्य है—जिस प्रकार रहट चलाने वाला मशीन को चलाता हुआ उसी में बिना अन्य प्रयास के दूसरा वैचित्र्य (= बाल्टी से पानी गिराना और फिर खाली बाल्टी को नीचे ले जाकर भरना) भी प्राप्त कर लेता है उसी प्रकार साधक भी मंत्र के उदय के विषय मे ही प्रयास करता हुआ पर संविद् के साथ एकात्मता को भी (प्राप्त कर लेता है) । इस प्रकार चक्र का उदय पर संविद् की प्राप्ति में निमित्त है—यह अवश्य कहना चाहिए—ऐसा कहना चाहिए था ॥ ४ ॥

वही कहते हैं—

नित्य उदित प्राण में २१६०० चार होते हैं । दो पिण्डवाले (= दो प्राणचारों की कालावधि को एक बना लेने पर पूरे दिन रात मे पूर्वोक्त २१६०० का) आधा (= १०८०० प्राणचार), तीन पिण्डवाले (प्राणचार

पञ्चार्णेऽब्धिसहस्राणि त्रिशती विंशतिस्तथा ।
षट्के सहस्रत्रितयं षट्शती चोदयो भवेत् ॥ ७ ॥
सप्तके त्रिसहस्रं तु षडशीत्यधिकं स्मृतम् ।
शतैस्तु सप्तविंशत्या वर्णाष्टकविकल्पिते ॥ ८ ॥
चतुर्विंशतिशत्या तु नवार्णेषूदयो भवेत् ।
अधिषष्ठ्येकविंशत्या शतानां दशवर्णके ॥ ९ ॥
एकान्नविंशतिशतं चतुःषष्ठिः शिवार्णके।
अष्टादश शतानि स्युरुदयो द्वादशार्णके ॥ १० ॥
त्रयोदशार्णे द्वाषष्ठ्या शतानि किल षोडश ।
त्रिचत्वारिंशता पञ्चदशेति भुवनार्णके ॥ ११ ॥
चतुर्दशशती खाब्धिः स्यात्पञ्चदशवर्णके ॥
त्रयोदशशती सार्धा षोडशार्णे तु कथ्यते ॥ १२ ॥
शतद्वादशिका सप्तदशार्णे सैकसप्ततिः ।
अष्टादशार्णे विज्ञेया शतद्वादशिका बुधैः ॥ १३ ॥
चतुर्विंशतिसंख्याके चक्रे नवशती भवेत् ।
सप्तावंशतिसंख्याते तूदयोऽष्टशतात्मकः ॥ १४ ॥
द्वात्रिंशके महाचक्रे षट्शती पञ्चसप्ततिः ।
द्विचतुर्विंशके चक्रे सार्धां शतचतुष्टयीम् ॥ १५ ॥
उदयं पिण्डयोगज्ञः पिण्डमन्त्रेषु लक्षयेत् ।
चतुष्पञ्चाशके चक्रे शतानां तु चतुष्टयम् ॥ १६ ॥

---

में) ७२०० उदय माना गया है । चार वाले में ५४००, पाँच वर्ण वाले में ४३२०; छ. वाले में ३६०० उदय होता है । सात (वर्ण) या पिण्ड वाले में ३०८६ (प्राणचार का उदय) कहा गया है । आठ वर्ण वाले में २७००; नव वर्ण वाले में २४०० (प्राणचार का) उदय होता है । दश वर्ण वाले में २१६०; ग्यारह वर्ण वाले में १९६४; बारह वर्ण वाले में १८०० उदय होते हैं । तेरह वर्ण वाले में १६६२; चौदह वर्ण वाले में १५४३; पन्द्रह वर्ण वाले में १४४०; सोलह वर्ण वाले में १३५० (उदय) कहा जाता है सत्रह वर्ण वाले में १२६१ अठारह वर्ण वाले में १२०० (उदय) विद्वानों को समझना चाहिए । चौबीस संख्या वाले चक्र में ९०० (प्राणचार) होता हैं । सत्ताईस संख्या वाले में ८०० उदंय (होता है) । बत्तीस संख्या वाले महाचक्र में ६७५; ४८ चक्र में ४५० (उदय समझना चाहिए) । पिण्डयोग को जानने वाला चौवन (वर्ण) वाले चक्र में पिण्ड मन्त्रों में ४०० उदय जाने । चौसठवें चक्र में ३३७।२।३, (उदय)

**सप्तत्रिंशत्सहार्धेन त्रिशत्यष्टाष्टके भवेत् ।**
**अर्धमर्धत्रिभागश्च षट्षष्ठिर्द्विशती भवेत् ॥ १७ ॥**
**एकाशीतिपदे चक्रे उदयः प्राणचारगः ।**
**चक्रे तु षण्णवत्याख्ये सपादा द्विशती भवेत् ॥ १८ ॥**
**अष्टोत्तरशते चक्रे द्विशतस्तूदयो भवेत् ।'**

खे इति द्वे शून्ये, रसाः षट्, अक्षीति द्वयं, नित्योत्थ इति स्वरसत एव हि सततं प्रवहतः प्राणस्य सषट्शतसहस्रैकविंशत्या (तिः) चाराणां भवेदिति भावः । एवमेकपिण्डात्मनो मन्त्रस्य प्रतिप्राणचारं तदानुगुण्यात् तत्संख्याक एवोदयः; तेन प्रतिप्राणचारमेकैकस्य पिण्डस्य वर्णस्य वोदयात् द्व्यादिपिण्डवर्णात्मनां मन्त्राणां नित्योदितप्राणाचारार्धत्रिभागक्रमेण न्यूनसंख्याक उदयः,—इत्याह—'तदर्धं द्विकपिण्डके' इति । तस्याः सषट्शतायाः सहस्रैकविंशतेरर्धं साष्टशतं सहस्रदशकम् । अत्र हि स्वारसिकप्राणचारद्वयकालस्यैकप्राणचारतयोदयस्य चिकीर्षितत्वं; 'जपः प्राणसमः कार्यः' इति हि सर्वत्राविशेषेणोद्घोष्यते, अत एवेह यत्नजत्वमुक्तम् । सप्त सहस्राणि द्विशतीति, स्वारसिकप्राणचारत्रयकालस्यैकप्राणचारतयोदयस्य कर्तुमभिप्रेतत्वात् । एवमुत्तरत्रापि अवसेयम् । अब्धीति चत्वारः । षडशीत्यधिकमिति भूम्ना, एवं हि चारद्वयमधिकं भवेत्, तेनात्र प्रतिचारं किंचिदंशन्यूनता कार्या येन गणनासाम्यं स्यात् । न चैतदस्माभिः स्वोत्प्रेक्षितमुक्तमिति साक्षादागम एव

---

होता है । इक्यासी (वर्ण) वाले चक्र में २६६।१।२ प्राणचारों का उदय (होता है) । छानवे (वर्ण) वाले चक्र में २२५ (प्राणचार) होता है । और १०८ (वर्ण) वाले चक्र में दो सौ उदय होता है ॥-५-१९- ॥

खे = दो शून्य, रस = छः अक्षि = दो । नित्योत्थ = स्वाभाविक रूप से निरन्तर प्रवहमान प्राण का २१६०० चार होता है । इस प्रकार एक पिण्ड रूप मन्त्र का प्रति प्राण और उसी के अनुसार उतनी संख्या वाला उदय होता है । इस प्रकार प्रत्येक प्राणचार में एक-एक पिण्ड अथवा वर्ण का उदय होने से दो (तीन) आदि पिण्ड या वर्ण वाले मन्त्रों का नित्योदित प्राणचारों के आधे या तिहाई के क्रम से कम संख्या वाला ही उदय होता है—यह कहते हैं—'दो पिण्ड वाले में उसका आधा' । उस २१६०० का आधा १०८०० । यहाँ स्वाभाविक दो प्राणचार के काल का एक प्राणचार के रूप में उदय चिकीर्षित है । "जप को प्राण के साथ करना चाहिए" यह सर्वत्र समान रूप से घोषित किया जाता है । इसलिए यहाँ यत्नजत्व कहा गया । ७२००—स्वाभाविक तीन प्राणचार के काल को एक प्राणचार के रूप में उदय का (काल) मानना वाञ्छित है—इस कारण । इसी प्रकार आगे भी समझ लेना चाहिए । अब्धि = ४ । छियासी अधिक यह अधिकता के कारण । इस प्रकार दो प्राणवाह अधिक हो जाता है । इसलिए यहाँ एक-एक चार में कुछ अंश में कमी करनी चाहिए जिससे गणना समान हो जाय । यह हमने

पठितः । अस्माभिरप्यत्र गणना विभज्य न दर्शिता ग्रन्थविस्तरभयादनुपयोगाच्च। अधिकषष्ठिरेकविंशतिशती तया दशवर्णग इत्युदयः । 'शिवाः' रुद्रा एकादश, चतुःषष्टिरिति भूम्ना, एवं हि चारचतुष्टयमधिकं भवेत् । द्वाषष्ट्येति भूम्ना, षण्णां प्राणचाराणामतिरेकात् । त्रिचत्वारिंशतेति भूम्ना, चारद्वयाधिक्यात् । पञ्चदशेति शतानि । भुवनेति चतुर्दश । खाब्धिरिति चत्वारिंशत् । सैकसप्ततिरिति भूम्ना चारसप्तकातिरेकात् । न चात्र संख्यायाः कश्चित्क्रमो विवक्षितः,—इत्येकोन-विंशादीनां चक्राणामन्तरानुपदेशे न कश्चिद्दोषो, यावता हि अत्र प्रतिप्राणचारमेकैकस्य चक्रस्योदये यत्नः कार्यः,—इत्यभिधित्सितं तच्चैवमपि सिद्ध्येदिति । 'द्विचतुर्विंशके' इत्यष्टाचत्वारिंशदात्मक इत्यर्थः । 'अष्टाष्टके' इति चतुःषष्ठ्यात्मके। सहार्धेनेति येनावशिष्टा द्वात्रिंशत्प्राणचारा भवन्ति । अर्धमिति अर्धत्रिभाग इति, येन सार्धाश्चत्वारिंशत्प्राणचारा भवेयुः सार्धास्त्रयोदश चेत्युभयथा चतुः-पञ्चाशदिति गणनासाम्यं स्यात् । तदुक्तं श्रीयोगिनीकौले—

'नित्योदिते सहस्राणि एकविंशच्छतानि षट् ।
द्विके दश सहस्राणि तथाष्टौ च शतानि तु ॥
त्रिके सप्त सहस्राणि द्विशतीत्युदयः स्मृतः ।
चतुष्के तु सहस्राणि पञ्च तुर्यशतानि तु ॥
पञ्चाक्षरे सहस्राणि चत्वारि त्रिशतोदयः ।
विंशाधिकः समाख्यातो ज्ञेयश्चोदयवाहिभिः ॥

---

अपनी बुद्धि से ही नहीं कहा है यह बतलाने के लिए साक्षात् आगम का ही कथन किया गया । हमने भी यहाँ गणना को बाँटकर नहीं दिखलाया क्योंकि ग्रन्थ बड़ा हो जायगा और उसका कोई उपयोग नहीं है । २१६०—इसके द्वारा दश वर्णों में वर्त्तमान प्राणचार का उदय होता है । शिव = रुद्र = ग्यारह । चौंसठ यह अधिकता के कारण । इस प्रकार चार प्राणवाह अधिक हो जाता है । पन्द्रह = पन्द्रह सौ । भुवन = १४ । रवाब्धि = ४० । ७१ यह अधिकता के कारण । क्योंकि सात प्राणवाह अधिक हैं। यहाँ संख्या का कोई क्रम विवक्षित नहीं है।—इसलिए इक्कीस आदि चक्रों का बीच में उपदेश न करने पर कोई दोष नहीं है । क्योंकि यहाँ प्रत्येक प्राणचार में एक-एक चक्र के उदय के विषय में प्रयास करना चाहिए—यह कहना चाहते हैं; वह बात ऐसे भी सिद्ध हो जाती है । दो चौबीस में = ४८ में । आठ अष्टक में = ६४ में । आधे के साथ—जिससे अवाशष्ट प्राणचार ३२ हो जाते हैं । आधा = तीन भाग का आधा, जिससे ४५० प्राणचार हो जाते हैं । आधे के साथ तेरह इस प्रकार दोनों तरह से ५४—यह गणना समान हो जाती है । योगिनीकौल में कहा गया है—

"नित्योदित (प्राणचार) में (संख्या) २१६०० है । दो वाले में १०८०० तीन में ७२०० उदय माना गया है । चार में ५४०० पञ्चाक्षर में ४३२०

षट्के तु त्रिसहस्राख्यः षट् शतान्तोदयः स्मृतः ।
सप्तके त्रिसहस्रं तु षडशीत्यधिकं स्मृतम् ॥'

इत्यादि ।

'अष्टोत्तरशते चक्रे मन्त्रपिण्डाक्षरात्मके ।
द्विशतात्मा पुनः प्रोक्त उदयः सर्वसिद्धिदः ॥'

इत्यन्तम् ॥ ५-१८ ॥

न चैतावतैव विरन्तव्यमित्याह—

**क्रमेणेत्थमिदं चक्रं षट्कृत्वो द्विगुणं यदा ॥ १९ ॥**
**ततोऽपि द्विगुणेऽष्टांशस्यार्धमध्यर्धमेककम् ।**
**ततोऽपि सूक्ष्मकुशलैरर्धार्धादिप्रकल्पने ॥ २० ॥**
**भागषोडशकस्थित्या सूक्ष्मश्चारोऽभिलक्ष्यते ।**

'इत्थं' वक्ष्यमाणेन प्रकारेणेदमष्टोत्तरशतात्मकं चक्रं क्रमेण षट्कृत्वो द्विगुणं प्रथमं षोडशाधिकशतद्वयात्मकं यावदन्ते सद्वादशशतनवकाधिकषट्सहस्रात्मकं यदा भवेत् तदा तस्मिन्नपि द्विगुणे सचतुर्विंशतिशताष्टकाधिकसहस्रत्रयोदशात्मके चक्रेऽध्यर्धमत्रेति कृत्वा सार्धमेककं प्राणस्य चरणमष्टांशस्यार्धं षोडशो भागश्चोदयो भवेदित्यर्थः । तदनन्तरमपि भागषोडशकस्थित्यार्धार्धादिकल्पने कृते सति 'सूक्ष्म-

---

(प्राणचार) उदयवादी लोगों के द्वारा ज्ञात होना चाहिए । छ में ३६०० उदय कहा गया है । सात में ३०८६ मानाा गया है ।" यहाँ से लेकर—

"१०८ मन्त्रपिण्डाक्षर वाले चक्र में, समस्त सिद्धियों को देने वाला २०० उदय कहा गया है ।"

यहाँ तक (प्राणचार की संख्या का कथन है ।) ॥ ५-१८ ॥

इतने से ही विराम नहीं करना चाहिए—यह कहते हैं—

इस प्रकार इस चक्र को क्रम से छ बार दो गुना (करते हैं) फिर उसका भी दो गुना करने पर अष्टांश का आधा फिर आधे में से एक-एक को उससे भी सूक्ष्म (गणना में) कुशल लोगों के द्वारा आधा-आधा बाँटने पर सोलह भाग वाली स्थिति के द्वारा सूक्ष्मचार समझा जाता है ॥ -१९-२१- ॥

इत्थम् = आगे कहे जाने वाले प्रकार से, यह १०८ चक्र क्रमशः छ बार दो गुना (होता है) पहला दो गुना २१६ और इस प्रकार अन्त में (द्रगुना करने पर) जब ६९१२ हो जाता है तब उसका भी दो गुना करने पर १३८२४ चक्र का उदय होने पर इसका आधा कर, प्राण का १।१।२ चरण अष्टांश का आधा =

कुशलैः' परधाराधिरूढैर्योगिभिः 'सूक्ष्मो'अतिपरिमितः प्राणीयश्चारांशोअ'भिलक्ष्यते' ज्ञायते इत्यर्थः । इदमत्र तात्पर्यम्—एवंकलनायां हि प्राणचारीयः षोडशो भागः सषट्शतपञ्चचत्वारिंशत्सहस्राधिकलक्षत्रयात्मनश्चक्रस्योदयः स्यात्; तस्याप्यर्धकल्पने सशतद्वयैकनवतिसहस्राधिकलक्षषट्कात्मनश्चक्रस्य द्वात्रिंशो भागः; तस्याप्येवं कल्पने सचतुःशतद्व्यशीतिसहस्राधिकत्रयोदशलक्षात्मनश्चक्रस्य चतुःषष्टितमो भागः, —इत्यन्तमेव परिमितः प्राणचारीयो भागो योगिनामभिलक्ष्यो भवतीति ॥१९-२०॥

नन्वेवमभिलक्षणेन योगिनां किं स्यात् ?—इत्याशङ्क्याह—

**एवं प्रयत्नसंरुद्धप्राणचारस्य योगिनः ॥ २१ ॥**
**क्रमेण प्राणचारस्य ग्रास एवोपजायते ।**

ग्रास इति विरुद्धतया पुनरनुदयात् ॥ अतोऽप्यस्य किं स्यात् ?—इत्याशङ्क्याह—

**प्राणग्रासक्रमावाप्तकालसङ्कर्षणस्थितिः ॥ २२ ॥**
**संविदेकैव पूर्णा स्याज्ज्ञानभेदव्यपोहनात् ।**

ज्ञानभेदापोहनमेवोपपादयति—

---

सोलहवाँ भाग उदयकाल होता है । उसके बाद भी सोलह भाग की स्थिति से आधा-आधा बाँटने पर सूक्ष्म कुशल = परधारा में अधिरूढ योगियों के द्वारा सूक्ष्म' = अति परिमित प्राणचारांश अभिलक्षित होता है = जाना जाता है । यहाँ यह तात्पर्य है—इस प्रकार गणना करने पर प्राणचार के सोलहवें भाग (२१६०० × १६ =) में ३४५६०० चक्रों का उदय होगा । उसकी भी अर्धकलना करने पर ६९१२०० वाले चक्र का बत्तीसवाँ भाग होता है । उसका भी आध करने पर १३८२४०० चक्र का चौसठवाँ भाग—इतने तक ही परिमित, प्राणचार का भाग योगियों का लक्ष्य होता है ॥ १९-२० ॥

प्रश्न—इस प्रकार के लक्ष्य से योगियों को क्या लाभ होता है?—यह शङ्का कर कहते हैं—

इस प्रकार प्रयत्नपूर्वक प्राणचार का निरोध करने वाले योगी का क्रमशः प्राणचार का ग्रास ही हो जाता है ॥ -२१-२२- ॥

ग्रास—विरूद्धरूप से पुनः (प्राणचार का) उदय न होने से ॥ २१ ॥

इससे भी इसका क्या होता है ?—यह शङ्का कर कहते है—

प्राण के ग्रास के द्वारा क्रमशः कालसङ्कर्षण की स्थिति को प्राप्त होने से एक पूर्ण संवित् उत्पन्न हो जाती है अर्थात् ज्ञान के भेद के हट जाने के कारण, (योगी के लिए) एक और ज्ञान का बोधक महाप्रकाश पूर्णता के साथ प्राप्त हो जाता है ॥ -२२-२३- ॥

**तथा हि प्राणचारस्य नवस्यानुदये सति ॥ २३ ॥**
**न कालभेदजनितो ज्ञानभेदः प्रकल्पते ।**

कालस्य हि साक्षात् प्राणोऽधिष्ठानमिति प्राणस्यानुदये कालोऽपि नोदियात्, इति तस्याभावात् तज्जनितोऽपि ज्ञानस्य भेदो न भवेत्,—इति युक्तमुक्तम्— 'एकैव पूर्णा संवित्स्यात्' इति ॥ २३ ॥

ननु प्राणग्रासक्रमेण कालस्यापि ग्रासो वृत्तः,—इति तदाहितश्चेत्संविदि भेदो नास्ति तज्ज्ञेयाहितो भविष्यति येनेदं नीलज्ञानमिदं पीतज्ञानमिति विभागः, इत्येतावतैव कथमेकत्वमस्याः सिद्ध्येत् ?—इत्याशङ्क्याह—

**संवेद्यभेदान्न ज्ञानं भिन्नं शिखरिवृत्तवत् ॥ २४ ॥**

नहि एकान्ततः संवेद्यभेदः संविदं भिन्द्यात् । एवं हि तत्तद्गृहाणां नामादिवेद्यभेदेऽपि कथमेकमेव नगरादिज्ञानं स्यादित्युक्तं 'शिखरिवृत्तवत्' इति । उन्नतप्रदेशावस्थितस्य हि पुंसस्तत्तदाभासमय एक एव प्रकाशो भवेदिति भावः । यदाहुः—

---

ज्ञानभेद के नाश को ही बतलाते हैं—

इस प्रकार नये प्राणचार का उदय न होने पर कालभेद के कारण उत्पन्न होने वाला ज्ञानभेद नहीं होता ॥ -२३-२४- ॥

प्राण काल का साक्षात् अधिष्ठान है । इसलिए प्राण का उदय न होने पर काल भी उदित नहीं होता—फलतः उसका अभाव होने के कारण तज्जनित ज्ञानभेद भी नहीं होता—इसलिये ठीक ही कहा गया है—'एक ही पूर्ण संवित् (उदित) होती है ॥ २३ ॥

प्रश्न—प्राणग्रास के क्रम से काल का भी ग्रास होता है । यदि संविद् में उसके द्वारा किया गया भेद नहीं है तो ज्ञेय के द्वारा (उत्पन्न) किया गया (भेद) होगा जिससे 'यह नील ज्ञान है', यह पीत ज्ञान है'—ऐसा विभाग होता है । तो इससे भी इस (= संवित्) की एकता कैसे सिद्ध होगी ?—यह शङ्का कर कहते हैं—

संवेद्य के भेद से ज्ञान भिन्न नहीं होता । जैसे कि पर्वत पर होने वाला (ज्ञान) ॥ -२४ ॥

ज्ञेय का भेद आवश्यक रूप से संविद् का भेद नहीं करता । ऐसा होने पर भिन्न-भिन्न गृहों का नाम आदि वेद्य (विषय) का भेद होने पर भी '(पर्वत के शिखर पर चढ़ कर देखने पर) एक ही नगर आदि' रूप वाला ज्ञान कैसे होगा? इसलिए कहा गया—शिखरिवृत्त के समान । ऊँचे प्रदेश (पर्वत आदि) में खड़े पुरुष को भिन्न-भिन्न आभास वाला एक ही प्रकाश होता है—यह तात्पर्य है । जैसा

'तस्मात्सत्यपि बाह्येऽर्थे धीरेकानेकवेदनात् ।
अनेकसदृशाकारा नानेकेव प्रसज्यते ॥' इति ।

तस्मादस्य काल एव भेदकः, स चातिसूक्ष्मक्षणात्माभिमतो येन ज्ञानस्योत्पादानन्तरं निरोधो भवेत् ॥ २४ ॥

तदाह—

**कालस्तु भेदकस्तस्य स तु सूक्ष्मः क्षणो मतः ।**

तुशब्दो हेतौ । स इति कालः ॥

ननु चास्य सौक्ष्म्ये कोऽवधिः ?—इत्याशङ्क्याह—

**सौक्ष्म्यस्य चावधिर्ज्ञानं यावत्तिष्ठति स क्षणः ॥ २५ ॥**

तेन नियतोभयान्तपरिच्छिन्ना ज्ञानीयैव सत्तास्य सत्तेत्यर्थः ॥ २५ ॥

नन्वस्य परोपाधिकः कस्मादेवं निर्देशः ?—इत्याशङ्क्याह—

**अन्यथा न स निर्वक्तुं निपुणैरपि पार्यते ।**

---

कि कहते हैं—

"इसलिए बाह्य अर्थ के रहने पर भी एक और अनेक ज्ञान के कारण अनेक सदृश आकार वाली (बुद्धि) अनेक नहीं होती ।"

इस कारण इस (= ज्ञान) का भेदक काल ही है । और वह अति सूक्ष्म क्षणस्वभाव वाला माना गया है जिससे ज्ञान की उत्पत्ति के बाद उसका निरोध हो जाता है ॥ २४ ॥

वही कहते हैं—

क्योंकि काल ही उसका भेदक है और वह सूक्ष्म क्षण माना गया है ॥ २५- ॥

(पहला) 'तु' शब्द हेतु अर्थ में है । वह = काल ॥

प्रश्न—इसकी सूक्ष्मता की सीमा क्या है ?—यह शङ्का कर कहते है—

(इसकी) सूक्ष्मता की सीमा ज्ञान है । जब तक (एक ज्ञान) रहता है वह क्षण (एक) ही होता है ॥ -२५ ॥

इससे नियत दोनों अन्तों से परिच्छिन्न ज्ञानसम्बन्धी सत्ता ही इस (= क्षण) की सत्ता है ॥ २५ ॥

प्रश्न—इसका ऐसा परोपाधिक निर्देश क्यों (किया गया) ?—यह शङ्का कर कहते हैं—

अन्यथेति 'अभेद्यो निरंशः काललवक्षणः' इत्यादिना साक्षाल्लक्षणेनेत्यर्थः । एवं हि उत्पादानन्तरं निरोध इत्येवमुच्यमाने तस्याद्यन्तौ कथितौ स्यातां तत्सद्भावे च मध्यमप्यवश्यसंभाव्यम्,—इत्यस्यादिमध्यावसानैस्त्र्यंशत्वमापतेदिति निरंशत्वेऽभिधित्सिते सांशत्वमभिहितं स्यात् । यदाहुः—

'यथान्तोऽस्ति क्षणस्यैवमादिर्मध्यं च चिन्त्यताम् ।
आत्मकत्वात्क्षणस्यैवं न लोकस्य क्षणे स्थितिः ॥'

इति । इत्थम्—

'आदिमध्यावसानानि चिन्त्यानि क्षणवत्पुनः ।'

इत्याद्युक्तयुक्त्यादिमध्यान्तरूपाणां तदंशानामप्येवंविचारे क्रियमाणे स एव पर्यनुयोगः,—इत्यनवस्थानात् न किंचित्सिद्ध्येत्,—इत्यतिनिपुणैरपि तस्य लक्षणं कर्तु न शक्यं, कृतं वा न प्रोहमियात् ॥

ननु यद्येवं तज्ज्ञानस्यापि कोऽवधिर्येनैतन्निरूपितं भवेत् ?—इत्याशङ्क्याह—

---

अन्यथा कुशल लोगों के द्वारा भी उसका निर्वचन नहीं किया जा सकता ॥ २६- ॥

अन्यथा = अभेद्य और निरंश काल का भाग क्षण (कहलाता) है ।' इत्यादि साक्षात् लक्षण के द्वारा । इस प्रकार उत्पाद के बाद निरोध होता है—ऐसा कहने पर उसके आदि और अन्त कहे जाने और उनके होने पर मध्य भी अवश्य होगा—इस प्रकार यह आदि मध्य और अन्त के कारण तीन अंश वाला होने लगेगा । फलतः निरंशत्व कहने की इच्छा थी और सांशत्व कहा जायगा । जैसा कि कहते हैं—

'जिस प्रकार क्षण का अन्त है उसी प्रकार (उसका) आदि और मध्य भी सोचना चाहिए । क्षण के इस प्रकार के होने से लोक की क्षण में स्थिति (उनको ज्ञात) ही नहीं होगी ।'

इस प्रकार—

'क्षण की भाँति आदि मध्य और अन्त्य भी चिन्त्य है ।'

इत्यादि उक्त युक्ति के द्वारा आदि मध्य और अन्तरूप उसके अंशो का इस प्रकार विचार किए जाने पर वही दोष आता है फलतः अनवस्था होने से कुछ सिद्ध नहीं होगा—इसलिए अत्यन्त निपुण लोगों के द्वारा भी उसका लक्षण नहीं किया जा सकता और कर भी दिया गया तो (उसका) विस्तार (प्रचार) नहीं होगा ॥ २५ ॥

प्रश्न—यदि ऐसा है तो ज्ञान की क्या सीमा होगी जिससे इसका निरूपण हो सकें?—यह शङ्का कर कहते हैं—

**ज्ञानं कियद्भवेत्तावत्तदभावो न भासते ॥ २६ ॥**

कियदिति, क्षणिकत्वेऽपि किंपरिमाणमित्यर्थः । 'तदभावः' इति ज्ञानाभावः, तेन यावत्तदभावो न वृत्तस्तावदेकमेव तज्ज्ञानं भवेदिति भावः । अभावश्च प्रत्यक्ष-ग्राह्यः कार्यश्चेति अन्यत्रोपपादितमिति तत एवावधार्यम् ॥ २६ ॥

ननु यद्येवं तत्तदभावोऽपि कदा जायते येन ज्ञानस्याप्यवधिः ?—इत्याशङ्क्याह—

**तदभावश्च नो तावद्यावत्तत्राक्षवर्त्मनि ।**
**अर्थे वात्मप्रदेशे वा न संयोगविभागिता ॥ २७ ॥**

ज्ञानस्य च तावदभावो न जायते यावदिन्द्रियाणामर्थस्य प्रमातुर्वा संयोग-विभागौ न स्यातां, तदविरतेन्द्रियव्यापारस्य प्रमातुर्नीलादिविषये ज्ञाने जायमाने यदा नीलादिना विभाग उत्पद्यते, पीतादिना वा संयोगस्तदा तदभाव इति । ननु प्रदीपादिवत् प्रतिक्षणं करणोपयोगात् ज्ञानस्य क्षणिकत्वे सर्वेषां तावदविवादोऽन्यथा विततकरणव्यापारस्यापि प्रमातुर्नीलादिज्ञानं न स्यात्, तत्किमेतदुक्तं यदिन्द्रियाणां यावन्न संयोगविभागोदयस्तावदेकमेव ज्ञानमिति; एवं हि धारावाहिनां विज्ञानानाम-

---

ज्ञान कितना होना चाहिए? (उत्तर है—कि) उतना जब तक कि उसका अभाव न प्रतीत हो ॥ -२६ ॥

कितना अर्थात् क्षणिक होने पर भी किस परिमाण वाला? उसका अभाव = ज्ञान का अभाव । इस प्रकार जब तक उसका अभाव न हो जाय तब तक वह ज्ञान एक ही होता है । अभाव का ज्ञान प्रत्यक्ष होता है और वह (= अभाव) कार्य है—यह बात अन्यत्र कही गई है इसलिए वहीं से जान लेना चाहिए ॥ २६॥

प्रश्न—यदि ऐसा है तो उसका अभाव भी कब उत्पन्न होता है जिससे ज्ञान की भी सीमा (निर्धारित) होती है?—यह शङ्का कर कहते है—

उसका अभाव तब तक नहीं (उत्पन्न) होता जब तक इन्द्रिय, विषय अथवा ज्ञाता में संयोग विभाग उत्पन्न नहीं होता ॥ २७ ॥

ज्ञान का तब तक अभाव नहीं उत्पन्न होता जब तक इन्द्रियों, अर्थ अथवा प्रमाता का संयोग-विभाग न हो जाय । तो निरन्तर इन्द्रियव्यापार वाले प्रमाता का नील आदि विषयक ज्ञान उत्पन्न होने पर जब नील आदि से विभाग उत्पन्न हो जाता है या पीत आदि के साथ संयोग (होता है) तब उसका अभाव होता है । प्रश्न—दीपक आदि के समान प्रतिक्षण इन्द्रियों का उपयोग होने के कारण ज्ञान को क्षणिक मानने में सबकी सहमति है अन्यथा इन्द्रियव्यापारयुक्त भी प्रमाता को नील आदि का ज्ञान नहीं होगा तो यह कैसे कहा गया कि जब तक इन्द्रियों का संयोग विभाग उत्पन्न न हो तब तक एक ही ज्ञान होता है, इस प्रकार से तो

भावोऽभिहितो भवेत् । सत्यं, किन्तु भवदभिरुचितं निरन्वयविनाशात्म क्षणिकत्वं ज्ञानस्य न स्यात्, इत्यभिदध्मः । अनन्तरं हि त्रिचतुरादिक्षणावस्थायि ज्ञानं भवेदिति समनन्तरं क्षणनिर्णयेनैवोपपादितम् । तस्मादेकरसेऽपि नीलादिविषये विज्ञानेऽन्तरा चक्षुरादीन्द्रियविभागादिना तदभावादि स्थितमेव किंतु न तथा सञ्चेत्यते; तेन धारावाहिनां विज्ञानानामप्यभावो न स्यादिति न कश्चिद्विरोधः ॥ २७ ॥

ननु संयोगविभागितापि किं सकारणिका भवेत् न वा ?—इत्याशङ्क्याह—

**सा चेदुदयते स्पन्दमयी तत्प्राणगा ध्रुवम् ।**
**भवेदेव ततः प्राणस्पन्दाभावे न सा भवेत् ॥ २८ ॥**

स्पन्दमयीति, स्पन्दः प्रकृतिर्मूलकारणं यस्याः सा स्पन्दाधीनैव इत्यर्थः । देशाद्देशान्तरं हि चलद्वस्तु वस्त्वन्तरेण संयुज्यते वियुज्यते वेत्यभिप्रायः । स्पन्दश्च प्राणाश्रयः, इति पारम्पर्येण संयोगविभागितापि प्राणगतैव निश्चितं भवेत्, इति प्राणस्पन्दाभावे सा न भवेत्; निमित्ताभावे नैमित्तिकस्याप्यभावः—इतिनीत्या तद्भावोऽपि कुतस्त्य इत्यर्थः ॥ २८ ॥

---

धारावाही विज्ञानों का भी अभाव कहा जाना चाहिए ? (आपका प्रश्न) सत्य है किन्तु आप (= बौद्ध) का अभिमत ज्ञान का निरन्वय विनाश वाला क्षणिकत्व नहीं होगा (हम) यह कह रहे हैं । बाद में तीन चार आदि क्षण तक स्थित रहने वाला ज्ञान होगा यह पूर्वोक्त क्षणनिर्णय से ही सिद्ध कर दिया गया है । इसलिए नील आदि विषयक विज्ञान के एक रस होने पर भी बीच में चक्षु आदि इन्द्रियविभाग आदि के द्वारा उस (= ज्ञान) का अभाव आदि होता तो है ही किन्तु (उसका) अनुभव नहीं होता । इसलिए धारावाही विज्ञानों का भी अभाव नहीं होगा—इस प्रकार कोई विरोध नहीं है ॥ २७ ॥

प्रश्न—संयोग विभाग भी क्या किसी कारण से होते हैं या नहीं?—यह शङ्का कर कहते हैं—

यदि स्पन्दकारणवाली वह (= संयोगविभागिता) उदित होती है तो (वह) निश्चित प्राणगता होती है । इस कारण प्राणस्पन्द के अभाव में वह नहीं होती ॥ २८ ॥

स्पन्दमयी = स्पन्द है प्रकृति अर्थात् मूल कारण जिसकी वह, अर्थात् स्पन्दाधीन । एक स्थान से दूसरे स्थान को चलने वाली वस्तु ही दूसरी वस्तु से संयुक्त होती है अथवा वियुक्त होती है—यह अभिप्राय है और स्पन्द प्राण के अधीन है । इस प्रकार परम्परा से संयोग विभाग भी प्राण के अधीन है-यह निश्चित है । इस प्रकार प्राणस्पन्द के अभाव में वह नहीं होगी । कारण के अभाव में कार्य भी नहीं होता—इस नीति के अनुसार उसका अस्तित्व भी कहाँ से होगा ?—यह

ननु भवतु नाम संयोगविभागिता मा वा भूत् किमनया नश्चिन्तया, यावता ह्यत्र प्राणग्रासक्रमेण कालग्रासे वृत्ते एकैव पूर्णा संवित्स्यादित्युपक्रान्तं तदेव कथं निर्वहेत् इत्युच्यताम् ?—इत्याशङ्क्याह—

**तदभावान्न विज्ञानाभावः सैवं तु सैव धीः ।**

तस्याः संयोगविभागिताया अभावाद्विज्ञानस्याप्यभावो न स्यात्, यद्धि यदन्वयव्यतिरेकानुविधायि तत्तत्कार्यं भवेदिति भावः । एवं हि सति सा प्राच्या या धीः संवित्सैवेयं नतु संविदन्तरमेकैव पूर्णा संवित्स्यादित्यर्थः ॥

नन्वेवमेकस्या एव संविदः किं पूर्वापरैकीकाराद्वैतत्येनावभासो भवेत् ?— इत्याशङ्क्याह—

**न चासौ वस्तुतो दीर्घा कालभेदव्यपोहनात् ॥ २९ ॥**

असाविति धीः, दीर्घेत्यर्थान्न सूक्ष्मापि, दैर्घ्यादि हि कालाधीनं, न चास्यास्तत्स्पर्श एवास्ति अकालकलितत्वात् ॥ २९ ॥

तदाह—

---

अर्थ है ॥ २८ ॥

प्रश्न—संयोग विभाग हों या न हों हमें इस चिन्ता से क्या लाभ ? यहाँ प्राणग्रास के क्रम से काल का ग्रास सम्पन्न होने पर एक ही पूर्ण संवित् उदित होती है—यह (वर्णन) प्रारब्ध हुआ था, वही कैसे होता है इसे बतलाइये ?—यह शङ्का कर कहते है—

उसके अभाव से विज्ञान का भी अभाव नहीं है । इस प्रकार वह वही बुद्धि है ॥ २९- ॥

उसके = संयोगविभागिता के अभाव के, कारण विज्ञान का भी अभाव नहीं होता । जो जिसके अन्वयव्यतिरेक का अनुगामी है वह उसका कार्य होता है—यह तात्पर्य है । ऐसा होने पर वह = पहले से वर्त्तमान, धी = संवित्, वही यह है न कि दूसरी (क्योंकि) संवित् एक और पूर्ण होती है ॥

प्रश्न—क्या इस प्रकार एक ही संवित् का पूर्वापर एकीकृत अद्वैत के रूप में अवभास होता है ?—यह शङ्का कर कहते है—

कालभेद के अपोहन के कारण यह (बुद्धि) वस्तुतः दीर्घ नहीं है ॥ -२९ ॥

यह = बुद्धि, दीर्घा—अर्थात् सूक्ष्म भी नहीं है । दीर्घता आदि काल के अधीन है और इस (= बुद्धि) का उस (= काल) से स्पर्श तक नहीं है क्योंकि वह काल से कलित (= सम्बद्ध, अधीन) नहीं है ॥ २९ ॥

**वस्तुतो ह्यत एवेयं कालं संविन्न संस्पृशेत्।**

एवं वस्तुतो नित्यत्वमप्यस्या न संभवेत्, तद्धि कालत्रयानुगामित्वमुच्यते नतु सदाभासमानत्वम्, एवं हि त्रिषु कालेषु भासमानत्वमुक्तं स्यात् । यदाहुः—

'न सदा न तदा न चैकदेत्यपि सा यत्र न कालधीर्भवेत् ।
तदिदं भवदीयदर्शनं न च नित्यं न च कथ्यतेऽन्यथा ॥'
(उ० स्तो० १२।५)

ननु यद्येवमकालकलिता वस्तुत एकैव संविदस्ति तत्कथमयं बहिर्भेदनिष्ठो व्यवहारः सिद्ध्येत् ?—इत्याशङ्क्याह—

**अत एकैव संवित्तिर्नानारूपे तथा तथा ॥ ३० ॥**
**विन्दाना निर्विकल्पापि विकल्पो भावगोचरे ।**

अतः कालसंस्पर्शाभावात् एकैव निर्विकल्पापि संवित्तिर्नानारूपेऽनेकाभास-संमूर्छनात्मनि भावविषये तथा तथा नीलानीलादिरूपतया विन्दाना विमृशन्ती विकल्प इत्युच्यते, इति न बाह्यस्यापि व्यवहारस्य विप्रलोपः ॥ ३० ॥

---

वही कहते हैं—

इसीलिए वस्तुतः यह संवित् काल का स्पर्श नहीं करती ॥ ३०- ॥

इस प्रकार वस्तुतः इस (= संवित्) की नित्यता भी सम्भव नहीं है । क्योंकि वह (= नित्यत्व) तीनो काल का अनुगामी माना जाता है न कि सदा आभासमान होने वाला । ऐसा होने पर तीनो कालों में भासमानता कही जानी चाहिए था । जैसा कि कहते हैं—

"न सदा, न किसी विशिष्ट काल में और न एक बार—ऐसी जिसके बारे में कालबुद्धि नहीं होती ऐसा है यह आपका दर्शन । यह न नित्य न दूसरी प्रकार का कहा जा सकता है ।" (उ० स्तो. १२।५)

प्रश्न—यदि इस प्रकार अकालकलित वस्तुतः एक ही संविद् है तो यह बाहरी भेदगत व्यवहार कैसे सिद्ध होगा?—यह शङ्का कर कहते है—

इसलिए एक ही संवित् निर्विकल्पक होते हुए भी अनेक रूप पदार्थों के विषय में भिन्न-भिन्न (रूपों) का विमर्श करती हुई विकल्प (कही जाती है) ॥ -३०-३१- ॥

इस कारण = कालसंस्पर्श के अभाव के कारण, एक ही निर्विकल्प भी संवित् नाना रूप वाले = अनेक आभास की संमूर्छना वाले, पदार्थों के विषय में उस-उस प्रकार = नील अनील आदि के रूप से, विन्दाना = विमर्श करती हुई, विकल्प कही जाती है । इस प्रकार बाह्य भी व्यवहार का लोप नहीं होता ॥ ३० ॥

ननु तथा तथा विमर्शेऽप्यस्याः कथमेकत्वमेव ?—इत्याशंक्याह—

**स्पन्दान्तरं न यावत्तदुदितं तावदेव सः ॥ ३१ ॥**
**तावानेको विकल्पः स्याद्विविधं वस्तु कल्पयन्।**

तत्तस्मात्पूर्वोक्तात्तत्तदर्थादिसंयोगविभागोत्पादलक्षणात् हेतोर्यावद्विकल्प्यवस्त्वन्तर-विषयं स्पन्दान्तरं नोदितं तावन्नानाप्रकारं वस्तु कल्पयन्नपि तावान्दीर्घदीर्घ एक एव विकल्पः स्यात् न पुनरनेक इत्यर्थः । यत्तदनेकाभाससंमूर्छनात्मतया विकल्प्य-मानेऽपि नीलादौ विकल्पस्यैक्यमेव तावत् एकस्यैवानुसंधानस्य भावात् अन्यथा पुनरस्य स्वरूपलाभ एव न भवेदिति भावः ॥ ३१ ॥

तदाह

**ये त्वित्थं च विदुस्तेषां विकल्पो नोपपद्यते ॥ ३२ ॥**
**स ह्येको न भवेत्कश्चित् त्रिजगत्यपि जातुचित् ।**

ये इति बौद्धाः । इत्थमिति स्पन्दान्तरोदय एव विकल्पान्तराणामुदयो नत्वेकस्मिन्नेव स्पन्दे इत्यर्थः । एक इति, येन स्मृत्यपलापाद्यनेकाश्रयनिबन्धनो बाह्यो व्यवहारः सिद्ध्येत् ।

---

प्रश्न—भिन्न-भिन्न विमर्श होने पर यह एक ही कैसे है ?—यह शङ्का कर कहते हैं—

इस कारण जब तक दूसरा स्पन्द उदित नहीं होता तब तक विविध वस्तुओं की कल्पना करता हुआ उतना बड़ा एक ही विकल्प रहता है ॥ -३१-३२- ॥

तत् = उस पूर्वोक्त भिन्न-भिन्न अर्थ आदि के संयोग विभाग की उत्पत्ति लक्षण वाले कारण से, जब तक किसी दूसरी विकल्प्य वस्तु से सम्बद्ध दूसरा स्पन्द उदित नहीं होता तब तक अनेक प्रकार की वस्तु की कल्पना करता हुआ भी उतना = बड़े से बड़ा एक ही विकल्प होता है न कि अनेक । जो कि अनेक आभासों की संमूर्च्छना के रूप में नील आदि के विकल्पित होने पर भी नील आदि के विषय में विकल्प एक ही होता है वह उतना बड़ा एक ही अनुसन्धान होने के कारण । अन्यथा पुनः इसका स्वरूपलाभ ही नहीं होगा ॥ ३१ ॥

वही कहते हैं—

जो ऐसा नहीं मानते उनके मत में विकल्प की सिद्धि नहीं होती । तीनों लोक में कभी भी कोई एक विकल्प नहीं होता ॥ -३२-३३- ॥

जो लोग = बौद्ध । इस प्रकार = दूसरे स्पन्द का उदय ही दूसरे विकल्पों का उदय होता है न कि एक ही स्पन्द में—यह अर्थ है । एक—जिससे स्मृति का अपलाप आदि अनेक आश्रय सम्बन्धी बाह्य व्यवहार सिद्ध होता है ॥ ३२ ॥

एतदेव दर्शयति—

**शब्दारूषणया ज्ञानं विकल्पः किल कथ्यते ॥ ३३ ॥**
**सा च स्यात्क्रमिकैवेत्थं किं कथं को विकल्पयेत् ।**
**घट इत्यपि नेयान्स्याद्विकल्पः का कथा स्थितौ ॥ ३४ ॥**
**न विकल्पश्च कोऽप्यस्ति यो मात्रामात्रनिष्ठितः ।**

कथ्यते इति भवद्भिः । यदुक्तं—'अभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः कल्पना' इति । सेति—शब्दारूषणा, क्रमिकेति—वाचः क्रमभावित्वात्, इत्थं क्रमिकत्वाद्विकल्पस्योदितानां तत्क्षणानां प्रध्वस्तत्वान्नवानां चानुदयात् को न कश्चित्कल्पितोऽपि विकल्पात्मा प्रमाता किमुत्पन्न प्रध्वस्तप्रकल्प्यं पूर्वापरानुसंधानादेरभावाच्च कथं विकल्पयेत् विकल्पस्य स्वरूपलाभ एव न भवेदित्यर्थः । अत एव घकारोच्चारकाले टकारस्याभावात्तदुच्चारकाले च तस्य प्रध्वस्तत्वात् यत्र 'घट' इत्येतावन्मात्रोऽपि विकल्पो न सिध्येत् तत्र व्यवहारादिचिन्ता दूर एवास्तां, तदवस्थानमात्रेऽपि का वार्तेत्यर्थः । नहि तन्मते कोऽप्येवंविधो विकल्पोऽस्ति यस्यांशमात्रेऽपि परिनिष्ठितत्वं, तथात्वे ह्येषां क्षणभङ्गव्रतविलोपो भवेदिति भावः ॥ ३३-३४ ॥

---

यही दिखलाते हैं—

शब्द से संसक्त होने के कारण ज्ञान को विकल्प कहा जाता है । और वह (= शब्दारूषणा अर्थात् शब्दसंसक्ति) क्रमिक ही होती है । इस प्रकार कौन किसकी किस प्रकार विकल्पना करेगा । 'घट' इतना सा भी विकल्प (उत्पन्न) नहीं हो सकता (उसके) ठहरने की क्या बात । कोई भी ऐसा विकल्प नहीं है जो एक मात्रा में रहता हो ॥ -३३-३५- ॥

कहा जाता है—आप (= बौद्ध) लोगों के द्वारा । जैसा कि कहा गया है—'कल्पना (वह) प्रतीति है (जो) कथन के सम्बन्ध के योग्य प्रतिभास वाली हो ।' वह = शब्दारूषणा । क्रमवाली—क्योंकि वाणी क्रम से उत्पन्न होती है । इस प्रकार = विकल्प के क्रमिक होने से, उसके उदित क्षणों के नष्ट होने से और नवीन (क्षणों) के उदित न होने से, कौन = कोई कल्पित भी विकल्प वाला प्रमाता, किसको = उत्पन्न और नष्ट के द्वारा कल्पनीय, पूर्वापर अनुसन्धान आदि के अभाव के कारण, कैसे विकल्पना करेगा ? विकल्प उत्पन्न ही नहीं होगा—यह तात्पर्य है । इसलिए घकार के उच्चारण के समय टकार की स्थिति के न होने से और टकार के उच्चारणकाल में घकार के नष्ट हो जाने से जहाँ 'घट' इतना भी विकल्प सिद्ध नहीं होता वहाँ व्यवहार आदि की चिन्ता तो दूर ही है । उसकी स्थितिमात्र के विषय में भी क्या बात हो सकती है । बौद्ध मत में कोई भी ऐसा विकल्प नहीं है जो अंशमात्र में भी पूर्ण हो क्योंकि ऐसा होने पर इनका क्षणभङ्गसिद्धान्त लुप्त हो जायेगा ॥ ३३-३४ ॥

नन्वेकमेव मालासूत्रवत्सर्वत्रानुयायि ज्ञानं किंचिन्नास्ति, इत्यस्माकं मतं नतु क्षणभङ्गुराण्यनेकानि ज्ञानानि न सन्तीति; तत्तान्येव समुदितानि बाह्यव्यवहारनैपुण्यभाञ्जि भविष्यन्ति, इति को दोषः ?—इत्याशङ्क्याह—

**न च ज्ञानसमूहोऽस्ति तेषामयुगपत्स्थितेः ॥ ३५ ॥**

अयुगपत्स्थितेरिति, उत्पादानन्तरं तन्निरोधस्याभिधानात् ॥ ३५ ॥

तस्माद्वैकल्पिकः सकल एवायं व्यवहारस्तन्मते न सिद्धयेत् ।

इत्याह—

**तेनास्तङ्गत एवैष व्यवहारो विकल्पजः ।**

तेनास्मत्पक्ष एव ज्यायानित्याह—

**तस्मात्स्पन्दान्तरं यावन्नोदियात्तावदेककम् ॥ ३६ ॥**
**विज्ञानं तद्विकल्पात्मधर्मकोटीरपि स्पृशेत् ।**

तद्यावद्विकल्पान्तरनिष्ठं स्पन्दान्तरं नोदेति तावद् गोत्वशुक्लत्वचलत्वाद्यात्मकं धर्मौघमपि विकल्पयेत् एकमेवैतद्वैकल्पिकं ज्ञानं स्यात् येनैकानुसंध्यनुप्राणितः

---

प्रश्न—माला में वर्त्तमान सूत्र के समान एक ही सर्वत्र अनुयायी ज्ञान (नामक की) कोई चीज नहीं है—यह हमारा मत है न कि क्षणभङ्गुर अनेक ज्ञान नहीं है—यह । तो वे ही समुदित होकर बाह्य व्यवहार में कुशल हो जाते है ? इस प्रकार क्या दोष हैं ?—यह शङ्का कर कहते है—

ज्ञानसमूह (का अस्तित्व) नहीं हो सकता क्योंकि वे (ज्ञान) एक साथ स्थित नहीं रहते ॥ -३५ ॥

अयुगपत् स्थिति के कारण—उत्पत्ति के बाद उसके निरोध का भी कथन होने से ॥ ३५ ॥

इस कारण यह समस्त वैकल्पिक व्यवहार उनके मत में सिद्ध नहीं होगा—यह कहते हैं—

इसलिए विकल्प से उत्पन्न होने वाला यह व्यवहार समाप्त ही हो गया ॥ ३६- ॥

इसलिए हमारा पक्ष ही अधिक उत्तम है—यह कहते हैं—

इसलिए जब तक दूसरा स्पन्द उदित नहीं होता तब तक एक ही विज्ञान करोड़ों विकल्प रूप धर्मो का स्पर्श कर सकता है ॥ -३६-३७- ॥

तो जब तक दूसरे विकल्पों में रहने वाला दूसरा स्पन्द उदित नहीं होता तब तक गोत्व, शुक्लत्व, चलत्व आदि रूप धर्मसमूह की भी कल्पना करता हुआ यह

समग्र एवायं व्यवहारः सिध्येत् ॥ ३६ ॥

न चैतदपूर्वतया स्वोपज्ञमेवोक्तमित्याह—

**एकाशीतिपदोदारशक्त्यामर्शात्मकस्ततः ॥ ३७ ॥**
**विकल्पः शिवतादायी पूर्वमेव निरूपितः ।**

तत उक्तानेकधर्मपरामर्शकत्वेऽप्येकत्वलक्षणाद्धेतोर्व्योमव्यापिरूपः शुद्धविद्यात्मा विकल्पस्तत्तदनेकहृदादिशक्त्यामर्शकत्वेऽप्येकत्वात् पार्यन्तिकफलरूपां शिवतामेव ददातीति पूर्वमेवास्माभिरुक्तम् ॥ ३७ ॥

नन्वेवमेकस्मिन्नेव प्राणचारे एकपिण्डात्मकाच्चक्रादारभ्य सचतुःशतद्व्यशीति-सहस्राधिकत्रयोदशलक्षात्मकचक्राद्यन्तं यावच्चक्राणां स्वारसिक एवोदयो वर्तते,—इति योगिनां प्रतिनियतचक्रविषयः कथमवगमो भवेत् ?—इत्याशङ्कां दृष्टान्तोप-दर्शनेनोपशमयति—

यथा—

**कर्णौ नर्तयामीत्येवं यत्नात्तथा भवेत् ॥ ३८ ॥**
**चक्रचारगताद्यत्नात्तद्वत्तच्चक्रगैव धीः ।**

---

वैकल्पिक ज्ञान एक ही होता है जिससे एक अनुसन्धान से अनुगत यह सम्पूर्ण व्यवहार सिद्ध होता है ॥ ३६ ॥

इसे अपूर्व रूप में अपनी बुद्धि से ही नहीं कहा गया—यह कहते हैं—

इस कारण इक्यासी पदों वाली उदार शक्ति के आमर्श वाला विकल्प शिवभाव को देने वाला होता है—यह पहले ही कह दिया गया है ॥ -३७-३८- ॥

इस कारण = उक्त अनेक धर्म का परामर्शक होने पर भी एकरूप होने के कारण; व्योमव्यापी रूप शुद्ध विद्या वाला विकल्प भिन्न-भिन्न अनेक हृदय आदि शक्ति का आमर्शक होने पर भी एक होने के कारण अन्तिम फलरूप शिवता को ही देता है—यह हमने पहले ही कह दिया है ॥ ३७ ॥

प्रश्न—इस प्रकार एक ही प्राणचार में एक पिण्डात्मक चक्र से आरम्भ करके १३८२४०० चक्र के अन्त तक चक्रों का स्वाभाविक ही उदय होता है तो योगियों को एक-एक चक्र का ज्ञान कैसे होता है ?—इस शङ्का को दृष्टान्त बताकर शान्त करते हैं—

**जैसे 'दोनों कानों को हिलाता हूँ' (ऐसी इच्छा के कारण) ऐसा यत्न करने पर वैसा होता है (दोनों कान हिलते हैं) उसी प्रकार चक्र के चार में होने वाले प्रयत्न से चक्रगामिनी ही बुद्धि होती है ॥ -३८-३९- ॥**

कर्णौ नर्तयामीत्येवमिच्छापूर्वकात्प्राणीयाद्यत्नात् यद्वद्योगिनस्तथा भवेत्, गोस्फुरितादिन्यायेन कर्णद्वयमेव नृत्यत्स्यात् तद्वदेकपिण्डादिचक्रप्रधानो यः प्राणीयश्चारस्तद्गतादपि यत्नात्तच्चक्रगैव धीः प्रारिप्सितोदयप्रतिनियतचक्रनिष्ठ एवावबोधो भवेदित्यर्थः । अयमत्र भावः—इह खलु योगिना यत्र क्वापि कर्मणि यस्य कस्यचिन्मन्त्रस्यावश्यं प्राणसाम्येनोच्चारः कार्यः अन्यथा हि न कार्यसिद्धिः स्यात् । तदुक्तम्—

'जपेत्तु प्राणसाम्येन ततः सिद्धिर्भवेद् ध्रुवम् ।
नान्यथा सिद्धिमाप्नोति हास्यमाप्नोति सुन्दरि ॥' इति ।

ततश्चैकपिण्डात्मनोऽन्यस्य वा चक्रस्योदये तुल्य एव विधिः प्राणसाम्यस्य सर्वत्राविशेषात् ॥ ३८ ॥

तदाह—

**जपहोमार्चनादीनां प्राणसाम्यमतो विधिः ॥ ३९ ॥**

होमेति, तत्रापि मन्त्रोच्चारस्य भावात् । अत इत्युक्ताच्चक्रोदयाद्धेतोः, संख्यायास्तु स्वारसिकप्राणचाराभिप्रायेण वर्णभूयस्त्वाभूयस्त्वनिबन्धनं तथात्वमिति न कश्चिद्विरोधः ॥ ३९ ॥

---

'कानों को हिलाता हूँ'—इस प्रकार इच्छापूर्वक प्राणीय यत्न से जैसे योगी को उस प्रकार का होने लगता है = गोस्फुरित आदि न्याय (= पशु अपनी इच्छा से पीठ आदि अङ्गों का चर्म हिलाते हैं) से कान ही हिलते हैं उसी प्रकार एक पिण्ड आदि मुख्य चक्र वाला जो प्राणीय चार उसमें होने वाले भी यत्न से, चक्रगामिनी ही बुद्धि = प्रारिप्सित उदय वाले चक्र से ही सम्बद्ध बोध, होता है। यहाँ यह तात्पर्य है—योगी जिस किसी कर्म में जिस किसी मन्त्र का आवश्यक रूप से प्राणसाम्य के साथ उच्चारण करे अन्यथा कार्यसिद्धि नहीं होती । वही कहा गया है—

"हे सुन्दरि प्राणसाम्य के साथ जप करना चाहिए । तब सिद्धि निश्चित होती है। अन्यथा (साधक) सिद्धि को प्राप्त नहीं होता हास्य को प्राप्त होता है ।"

इसलिए एक पिण्डात्मा या अन्य (पिण्डात्मक) चक्र के उदय के सम्बन्ध में समान ही विधि है क्योंकि प्राणसाम्य सब जगह एक ही है ॥ ३८ ॥

वही कहते हैं—

इस कारण जप होम अर्चन आदि के (विषय में) प्राणसाम्य का विधान है ॥ -३९ ॥

होम—वहाँ भी मन्त्रोच्चार के होने से । इस कारण = उक्त चक्रोदय के कारण। संख्या का वैसा होना स्वाभाविक प्राणचार के अभिप्राय से वर्ण की

किमत्र प्रमाणम् ?—इत्याशङ्क्याह—

**सिद्धामते कुण्डलिनीशक्तिः प्राणसमोन्मना।**
**उक्तं च योगिनीकौले तदेतत्परमेशिना ॥ ४० ॥**

तदेतत्परमेशिना श्रीसिद्धयोगीश्वरीमते श्रीयोगिनीकौले चोक्तमिति संबन्धः । तत्तदेकपिण्डाद्यात्मकमन्त्ररूपतया बहिरुल्लसन्ती वर्णकुण्डलिन्याख्या पारमेश्वरी शक्तिर्यदि नाम प्राणसमा प्राणसाम्येनोदयमियात् तदुन्मना शिवैकात्म्येन प्रस्फुरेदित्यर्थः । यदुक्तं तत्र—

'कुर्यात्प्राणसमं जप्यं होमं प्राणसमं कुरु ।
एवं प्राणसमा शक्तिः कुण्डलाख्या मनोन्मनी ॥' इति ॥ ४० ॥

श्रीयोगिनीकौलग्रन्थं पठति—

**पदमन्त्राक्षरे चक्रे विभागं शक्तितत्त्वगम् ।**
**पदेषु कृत्वा मन्त्रज्ञो जपादौ फलभाग्भवेत् ॥ ४१ ॥**

पदप्रधानानि मन्त्राक्षराणि यत्रैवंविधे चक्रे पदेषु शक्तितत्त्वगं विभागं कृत्वा एकैकं पदं प्रतिप्राणचारं प्रविभागेनोदयं कारयित्वा जपहोमादौ मन्त्रोदयं जानानो

---

अधिकता और न्यूनता के कारण है । इस प्रकार कोई विरोध नहीं है ॥ ३८ ॥

इसमें क्या प्रमाण है?—यह शङ्का कर कहते हैं—

सिद्धा (= मालिनीविजयोत्तर) तन्त्र एवं योगिनीकौल तन्त्र मे परमेश्वर ने इस बात को कहा है कि कुण्डलिनी शक्ति प्राणसमा और उन्मना है ॥ ४० ॥

इस बात को परमेश्वर ने सिद्धयोगीश्वरतन्त्र एवं योगिनीकौल तन्त्र में कहा है—यह अन्वय है । भिन्न-भिन्न एक पिण्डात्मक मन्त्र के रूप में बाह्य जगत् में उल्लसित होती हुई वर्णकुण्डलिनी नामक पारमेश्वरी शक्ति यदि प्राणसमा = प्राणसाम्य के साथ उदित होती है तो उन्मना शिव से अभिन्न होकर स्फुरित होती है । जैसा कि वहाँ कहा गया है—

"जप को प्राण के साथ करना चाहिए । होम को प्राण के साथ करना चाहिए । इस प्रकार कुण्डलिनी नामक प्राणसमा शक्ति मनोन्मना नाम वाली होती है" ॥ ३९ ॥

योगिनीकौल ग्रन्थ को पढ़ते हैं—

पद (प्रधान) मन्त्राक्षर वाले चक्र में पदों में शक्तितत्त्वगामी विभाग कर मन्त्रवेत्ता जप आदि में फल का भागी होता है ॥ ४१ ॥

जहाँ मन्त्राक्षर पदप्रधान है, इस प्रकार के चक्र में पदों में शक्तितत्त्वानुसारी

योगी फलभाग्भवेत्, यथोचितं फलमाप्नुयादित्यर्थः ॥ ४१ ॥

ननु कोऽसौ विभागः किं वा फलम् ?—इत्याशङ्क्याह—

**द्वित्रिसप्ताष्टसंख्यातं लोपयेच्छतिकोदयम् ।**

इह चक्राणां प्रागुक्तवदेकद्वित्रिसप्ताष्टादिपदपिण्डसंख्यातम्, अर्थात् शतिकोदयमनेकपदपिण्डात्मकचक्रपर्यन्तं विभागमाश्रित्य, अर्थात् प्राणचारं लोण्येत् प्राणग्रासं कुर्यादित्यर्थः । एतदेव हि मुख्यं फलं योगिनां यदकालकलितायां परस्यां संविद्यनुप्रवेश इति ।

एवं चात्रैवावधातव्यमित्याह—

**इति शक्तिस्थिता मन्त्रा विद्या वा चक्रनायकाः ॥ ४२ ॥**
**पदपिण्डस्वरूपेण ज्ञात्वा योज्याः सदा प्रिये ।**
**नित्योदये महातत्त्वे उदयस्थे सदाशिवे ॥ ४३ ॥**
**अयुक्ताः शक्तिमार्गे तु न जप्ताश्चोदयेन ये ।**
**ते न सिद्ध्यन्ति यत्नेन जप्ताः कोटिशतैरपि ॥ ४४ ॥**

इति प्रागुक्तं सर्वं ज्ञात्वा चक्रप्रधाना मन्त्रा विद्या वा पदपिण्डस्वरूपेण

---

विभाग कर अर्थात् एक-एक पद का एक-एक प्राणचार के अनुसार अलग-अलग उदय कराकर जप होम आदि के विषय में मन्त्रोदय को जानने वाला योगी फल का भागी होता है अर्थात् फल को प्राप्त करता है ॥ ४१ ॥

प्रश्न—यह विभाग क्या है ? फल क्या हैं ?—यह शङ्का कर कहते हैं—

दो तीन सात आठ (आदि) संख्या वाले (अर्थात्) एक सौ उदय तक (प्राणचार का) लोप करना चाहिए ॥ ४२- ॥

चक्रों का पहले कथित (रीति) के समान एक दो तीन सात आठ आदि पद पिण्डसंख्या वाले अर्थात् एक सौ (चक्रों के) उदय तक अनेक पद पिण्डात्मक चक्रपर्यन्त विभाग कर प्राणचार का लोप करना चाहिए = प्राणग्रास करना चाहिए । (इसका) यही मुख्य फल है कि योगियों को अकालकलित परसंविद् में प्रवेश हो जाता है ॥

ऐसा यहीं पर समझना चाहिए—यह कहते हैं—

इस प्रकार चक्रप्रधान मन्त्रों अथवा विद्याओं को पदपिण्ड के रूप में शक्तिस्थित जानकर सदा (जप आदि में) जोड़ना चाहिए । प्रिय, नित्योदित, महातत्त्व, उदयस्थ, निरन्तर कल्याणकारी शक्तिमार्ग में न जोड़े गए जो मन्त्र आदि उदय के साथ नहीं जपे गए होते वे करोड़ों यत्न के द्वारा जपे जाने पर भी सिद्ध नहीं होते ॥ -४२-४४ ॥

समनन्तरोक्तपदपिण्डादिगत्या 'शक्तिस्थिताः' प्राणसाम्येनोदिताः सर्वकालं जपादौ योज्या येन यथोचिता योगिनां सिद्धिः स्यात् । अन्यथा हि नित्योदयेऽत एव परमुपेयत्वान्महातत्त्वे, सृष्टिप्राधान्यादुदयस्थेऽत एव तत्सिद्धिप्रदायित्वात् सदैव श्रेयोरूपे शक्तिरूपे मध्यधाम्न्ययोजिताः, तथा प्राणस्योदयेन निर्गमने अर्थात्प्रवेशेनापि ये मन्त्रादयो न जप्तास्ते कोटिशतैर्यत्नेनापि जप्ता न सिद्ध्यन्ति, तां पूर्णां दातुं न शक्ता इत्यर्थः । यदुक्तम्—

'न विन्दति यदा मन्त्री सृष्टिसंहारवर्त्मनी।
उदयास्तमरूपेण मन्त्रा अल्पफलप्रदाः ॥
भोगं मोक्षं न यच्छन्ति जप्ता ध्यातास्तु पूजिताः ।
ईषत्फलं प्रयच्छन्ति शिवाज्ञासंप्रचोदिताः ॥' इति ।

मन्त्रा विद्या वेत्यनेनानुजोद्देशोद्दिष्टो मन्त्रविद्याभेदोऽप्यासूत्रितः ॥ ४४ ॥

ननु सर्वेषां मन्त्रादीनामविशेषेणैव किमियं व्यवस्था किमन्यथा वा ?— इत्याशङ्क्याह—

**मालामन्त्रेषु सर्वेषु मानसो जप उच्यते ।**
**उपांशुर्वा शक्त्युदयं तेषां न परिकल्पयेत् ॥ ४५ ॥**

---

इति = पूर्वोक्त सब कुछ जानकर, चक्रप्रधान मन्त्रसमूह या विद्यायें, पदपिण्ड रूप में = पूर्वोक्त पद पिण्ड आदि रीति से, शक्तिस्थित = प्राणसाम्य के साथ उदित, सब समय में जप आदि में ज़ोड़ना चाहिए ज़िससे योगियों को यथोचित सिद्धि मिल सके । अन्यथा नित्योदित, इसलिए परम उपेय होने से महातत्त्व, सृष्टिप्रधान होने के कारण उदयस्थ इसलिए उस सिद्धि का प्रदाता होने के कारण सदा श्रेयोरूप शक्तिरूप मध्य धाम में संयुक्त न किए गये, तथा प्राण के उदय = निर्गम अर्थात् प्रवेश के द्वारा भी जो मन्त्र आदि नहीं जपे जाते वे (अन्य) करोडों यत्न से भी जपे जाने पर भी सिद्ध नहीं होते = सिद्धि को पूर्ण रूप से देने में समर्थ नहीं होते । जैसा कि कहा गया है—

"जब मन्त्र का जप करने वाला सृष्टि संहार रास्तों को उदय और अस्त के रूप में नहीं जानता तो मन्त्र (उसको) अल्प फल देने वाले होते हैं । जप ध्यान अथवा पूजा किए गए (वे मन्त्र) भोग और मोक्ष नहीं देते हाँ शिव की आज्ञा से प्रेरित होकर थोड़ा फल देते है ।"

मन्त्र अथवा विद्या इस (कथन) से अनुजोद्देश में कहा गया । मन्त्र अथवा विद्या का भेद भी बतला दिया गया ॥ ४२-४४ ॥

प्रश्न—सभी मन्त्र आदि के विषय में क्या सामान्यरूप से यही व्यवस्था है या दूसरे प्रकार की भी ?—यह शङ्का कर कहते हैं—

सभी माला मन्त्रों में मानस या उपांशु जप (का विधान) कहा

सर्वेष्विति विद्यास्वपि, मानस इति ।

तदुक्तम्—

'आत्मा न शृणुते यं स मानसो जप उच्यते ।
आत्मना शृणुते यस्तु तमुपांशुं विजानते ॥
परे शृण्वन्ति यं देवि सशब्दः स उदाहृतः ।'

(स्व०तं० २।१४७)

इति । वेति विकल्पे । सशब्दस्यार्थसिद्धो निषेधः ॥

ननु समनन्तरमेवोक्तं यच्छक्तिवर्त्मन्ययोजिता मन्त्रा न सिद्ध्यन्तीति तत्कथमिदमुच्यते—'शक्त्युदयं तेषां न परिकल्पयेत्' ?—इत्याशङ्क्याह—

**पदमन्त्रेषु सर्वेषु यावत्तत्पदशक्तिगम् ।**
**शक्यते सततं युक्तैस्तावज्जप्यं तु साधकैः ॥ ४६ ॥**
**तावती तेषु वै संख्या पदेषु पदसंज्ञिता ।**
**तावन्तमुदयं कृत्वा त्रिपदोक्त्यादितः क्रमात् ॥ ४७ ॥**
**द्वादशाख्ये द्वादशिते चक्रे सार्धं शतं भवेत् ।**
**उदयस्तद्धि सचतुश्चत्वारिंशच्छतं भवेत् ॥ ४८ ॥**

---

गया है। उनके विषय में शक्ति के उदय की कल्पना नहीं करनी चाहिए ॥ ४५ ॥

सभी में—विद्याओं में भी मानस, वही कहा गया है—

"जिसको (जापक) स्वयं न सुनता हो वह मानस जप कहा जाता है । जिसे अपने द्वारा सुना जाता है उसे उपांशु मानते हैं । हे देवि ! जिसको दूसरे लोग भी सुनते हैं वह सशब्द कहा गया है" ॥ (स्व. तं. २।१४७)

वा (शब्द) विकल्प (अर्थ) में है । शब्दोच्चारणसहित जप का निषेध अर्थात् सिद्ध है ॥ ४५ ॥

प्रश्न—अभी-अभी कहा गया कि शक्तिमार्ग में संयुक्त न किए गए मन्त्र सिद्ध नहीं होते तो यह कैसे कहा जा रहा है कि—'उनके शक्त्युदय की कल्पना नहीं करनी चाहिए ।'—यह शङ्का कर कहते है—

सभी पदप्रधान मन्त्रों में जितना उसे पदशक्तिगामी किया जा सकता है युक्त साधकों के द्वारा उतना जप सदा किया जाना चाहिए । (जिससे) त्रिपदोक्ति आदि के क्रम से उन पदों में उतना (प्राण का) उदय कर उतनी पद संज्ञा हो जाय बारह पद किए गए (अतः बारह पद वाले) द्वादश मन्त्र को १२ से गुण करने पर द्वादश नामक चक्र में जो (प्राण का) उदय

**षोडशाख्ये द्वादशिते द्वानवत्यधिके शते ।**
**चारार्धेन समं प्रोक्तं शतं द्वादशकाधिकम् ॥ ४९ ॥**
**षोडशाख्ये षोडशिते भवेच्चतुरशीतिगः ।**
**उदयो द्विशतं तद्धि षट्पञ्चाशत्समुत्तरम् ॥ ५० ॥**
**चाराष्टभागांस्त्रीनत्र कथयन्त्यधिकान्बुधाः ।**
**अष्टाष्टके द्वादशिते पादार्धं विंशतिं वसून् ॥ ५१ ॥**
**उदयः सप्तशतिका साष्टा षष्टिर्यतो हि सः ।**

पदप्रधानेषु सर्वेषु विद्यादिरूपेषु मन्त्रेषु पदानां प्राणाशक्तेश्च साम्यं गतं तज्जपादि अभियुक्तैः साधकैर्यावत्कर्तुं शक्यते तावदेव सर्वकालं जपनीयं, येन तेषु पदेषु त्रिपदोक्त्यादिकं क्रममवलम्ब्य 'त्रिषु बहुत्वं परिसमाप्यते' इत्यादिनीत्या क्रमेणैकैकं पदं बहुपदतया विभज्य समस्तस्य परस्य प्राणचारसाम्येन सकृदुच्चारयितुमशक्यत्वात् तावन्तं पदांशपरीमाणं प्राणशक्तावुदयं कृत्वा तावती

---

होता है वह १४४ होता है । उसमे ६ चक्रों को जोड़ने पर चक्रों की संख्या १५० होती है । १५० को १४४ से गुणा करने पर २१६०० गुणन फल होता है २४ घण्टे मे एक स्वस्थ आदमी का इतना ही प्राणचार होता है । षोडश नामक चक्र को १२ से गुणा करने पर (उस चक्र में) १९२ (प्राणचारों का) उदय होता है । चार के आधे के साथ ११२ कहा गया है। षोडश नामक अर्थात् सोलह पदों वाले (चक्र) को फिर सोलह से गुणा करने पर ८४ (प्राणचार का) उदय होता है और उसमें २५६ (चक्र) होते हैं ॥

विद्वान् लोग यहाँ तीन आठ भाग ३।८ चार अधिक कहते हैं । अष्टाष्टक (= ६४) को बारह से गुणा करने पर एक-एक द्वादशक में, एक पादार्ध में २८ (प्राणचारों का) उदय होता है । क्योंकि वह संख्या ७६८ है (२१६०० प्राणचार मे ७६८ से भाग देने पर २८ लब्धि और ९८ शेष बचता है यह शेष ७६८ का आठवां भाग है । इसी प्रकार १६ पदों के चक्र को १६ से गुणा करने पर २५६ होता है और इससे २१६०० मे भाग देने पर भी ९६ शेष बचता है ॥ ४६-५२- ॥

पदप्रधान (= पदों के समूहरूप) सभी विद्यादिमन्त्रों में पदों और प्राणशक्ति के साम्य को प्राप्त वह जप आदि, अभियुक्त साधकों के द्वारा, जितना करना सम्भव है उतना ही सब समय जप करना चाहिए, जिससे उन पदों में त्रिपदोक्ति आदि के क्रम का अवलम्बन कर = 'तीन में बहुत्व समाप्त हो जाता है' इत्यादि नीति के द्वारा क्रमशः एक-एक पद को अनेक पदों के रूप में विभक्त कर, समस्त पद का प्राणचारसाम्य के साथ एक बार उच्चारण कर सकना सम्भव न होने के कारण,

पदांशपरिमाणैव पदसंज्ञिता जपस्य संख्या स्यादिति । अयमत्र भावः—न केवलमनेकपदस्य मन्त्रस्य प्राणशक्तौ सकृदुच्चारियतुमशक्यत्वं यावद् बह्वर्णतया तत्पदस्यापीति तस्याप्यंशांशिकया विभागः कार्यो येन शनैः शनैरेकमेकं तदंशे प्राणसाम्येनोच्चारयतां योगिनां लक्षजपादि सिद्ध्येदिति । तदुक्तं तत्र—

'पदमन्त्राक्षरे चक्रे विभागं शक्तितत्त्वगम् ।
पदेषु कृत्वा मन्त्रज्ञो जपं नित्यं तु कारयेत् ॥
द्वित्रिसप्ताष्टसंख्यातं लोपयेच्छतिकोदयम् ।
इति शक्तिस्थिता मन्त्रा विद्या वा चक्रनायकाः॥
पदपिण्डस्वरूपेण ज्ञात्वा योज्याः सदा प्रिये ।
नित्योदये महातत्त्वे उदयस्थे सदाशिवे ॥
अयुक्तः शक्तिमार्गे तु अजप्ताश्चोदयेन तु ।
नैव सिद्ध्यन्ति यत्नेन.......................... ॥'

इति । तथा—

'मालामन्त्रेषु सर्वेषु मानसो जप उच्यते ।
शक्त्योदयं तु वै तेषु न कदाचित्प्रकल्पयेत् ॥
यतस्तेषां वरारोहे मानसस्तु जपः स्मृतः ।
क्वचिच्चैव उपांशुः स्याज्जपः शास्त्रेषु कीर्तितः ॥

---

उतने पदांशपरिमाण का प्राणशक्ति में उदय कर उतने पदांश परिमाण वाली ही पद नाम वाली जप की संख्या होती है । यहाँ यह तात्पर्य है—न केवल अनेक पद वाले मन्त्र का प्राणशक्ति में एक बार उच्चारण असम्भव है बल्कि अनेक वर्ण वाला होने के कारण उस पद का भी । इसलिए उस (= पद) का भी कई अंश में विभाग करना चाहिए जिससे धीरे-धीरे उसके एक-एक अंश को प्राणसाम्य के साथ उच्चारण करने वाले योगियों को लाख जप आदि की सिद्धि हो जाय । वही वहाँ कहा गया है—

"पद (प्रधान) मन्त्रों के अक्षर वाले चक्र मे पदों में शक्तितत्त्व के अनुसार विभाग करके मन्त्रवेत्ता नित्य जप करे ॥ दो तीन सात आठ से लेकर एक सौ तक शतिकोदय का लोप करना चाहिए । इस प्रकार चक्रप्रधान मन्त्र या विद्याएं जब प्राणसाम्य के साथ उदित होती है तो हे प्रिये ! (उनको) पदपिण्ड के रूप में जान कर जोड़ देना चाहिए ॥ नित्योदित महातत्त्व उदयस्थ एवं सदा कल्याणकारी शक्तिमार्ग में न जोड़े गए और उदय के साथ न जपे गए (वे मन्त्र) सिद्ध नहीं होते ।" तथा

"सभी मालामन्त्रों में मानस जप (का अनुष्ठान) कहा जाता है । उनके विषय में कभी भी शक्ति के उदय की कल्पना नहीं करनी चाहिए । क्योंकि हे वरारोहे ! उनका जप मानस कहा गया है । कहीं-कहीं शास्त्रों में उपांशु जप कहा गया है ।

महामन्त्रेषु सर्वेषु यावत्तत्पदशक्तिगम् ।
शक्यते सततं युक्तैः प्रजप्तुं साधकोत्तमैः ॥
तावती तेषु वै संख्या पदेषु पदसंज्ञिता ।
तावन्तमुदयं कृत्वा त्रिपदोक्त्यादितः क्रमात् ॥' इति ।

अतश्च सामस्त्येन मालामन्त्रादीनां प्राणशक्तावुदयं कर्तुं न शक्यते— इत्युक्तमेषां शक्त्युदयं न परिकल्पयेदिति । न तु सर्वसर्विकया, तथात्वे हि जपस्याल्पफलप्रदत्वादधमत्वं स्यात् । यदुक्तम्—

'अधमस्तु जपः प्रोक्तः प्राणसंख्याविवर्जितः ।' इति ।

पदविभागमेव दर्शयति द्वादशेत्यादिना । 'द्वादशाख्ये' द्वादशपदात्मके मालामन्त्राद्यात्मनि चक्रे 'द्वादशिते' सञ्जातद्वादशसंख्याके प्रत्येकं पदद्वादशकस्य द्वादशधा विभागे कृते सति द्वादशानां चतुश्चत्वारिंशदधिकं शतं भवेत् येन तस्यापि प्रत्येकं सार्धं शतं प्राणचाराणामुदयः,—इति सषट्शता सहस्रैकविंशतिः प्राणचारणां स्यात् । तथा षोडशपदात्मके चक्रे द्वादशधा कृते तदंशानां द्वानवत्यधिकं शतं षण्णवतेरवशिष्टत्वादयं चोदयः । तथा षोडशाख्ये एव चक्रे षोडशधा कृते षोडशांशानां षट्पञ्चाशदधिकं शतद्वयं भवेदिति भावः । तस्य प्रत्येकं प्राणचाराणां चतुरशीतिः षण्णवतेरेवावशिष्टत्वात् चाराष्टभागैरयमुदयो भवेत् । तथाष्टाष्टके चतुष्षष्टिपदात्मके चक्रे द्वादशधा कृते प्रतिपदं द्वादशकं

---

सभी महामन्त्रों में जितना वह पद शक्तिगामी होता है उतना युक्त उत्तम साधकों के द्वारा जप किया जा सकता है । त्रिपदोक्ति आदि के क्रम से उतना उदय कर उन पदों में उतनी पद वाली संख्या होती है ॥'

इसलिए प्राणशक्ति में सम्पूर्ण मालामन्त्र आदि का (सम्पूर्ण रूप) से उदय करना सम्भव नहीं है । इसलिए कहा गया—इनके शक्त्युदय की कल्पना नहीं करनी चाहिए । न कि सभी मन्त्रों में, क्योंकि वैसा होने पर अल्पफलदायी होने के कारण जप अधम हो जायगा । जैसा कि कहा गया है—

'प्राणसंख्या से रहित जप अधम कहा गया है ।'

द्वादश इत्यादि के द्वारा पद विभाग को ही दिखाते हैं—द्वादशाख्य = द्वादशपद वाले मालामन्त्र आदि चक्र को द्वादशित करने पर = बारह संख्या वाला होने पर १२ पदों में से प्रत्येक को १२ भाग करने पर (१२×१२) बारहों का १४४ (रूप) हो जाता है । जिससे उसमें से एक-एक का १५० प्राणचारों का उदय होता है । इस प्रकार (१४४×१५०) = २१६०० प्राणचार हो जाते हैं । इसी प्रकार सोलह पद वाले चक्र को १२ से गुणा करने पर ९६ अवशिष्ट होने से १९२ द्वादशांश का उदय होता है । उसी प्रकार षोडश चक्र को १६ से गुणा करने पर २५६ षोडशांश होता है । उसमें ९६ के ही अवशिष्ट होने से चार

प्राणचाराणां विंशतिवसूनष्टाविंशतिं तथा षण्णवतेरर्धावशिष्टत्वात् पादार्धमष्टभाग-मुदयो यतश्चतुःषष्ट्यात्मनश्चक्रस्य द्वादशभिर्गुणनात् अष्टषष्ट्यधिकशतसप्तकलक्षणा सा संख्या भवेदित्येवमत्र सर्वत्र प्राणचाराणां सषट्शता सहस्रैकविंशतिरेव भवेत् ॥

एतदेवोपसंहरति—

**एष चक्रोदयः प्रोक्तः साधकानां हितावहः ॥ ५२ ॥**

ननु प्राणचारोदयानुसारं चक्राणामुदय इति स एव कीदृक् येन सोऽपि स्यात् ?—इत्याशङ्क्याह—

**निरुध्य मानसीर्वृत्तीश्चक्रे विश्रान्तिमागतः ।**
**व्युत्थाय यावद्विश्राम्येत्तावच्चारोदयो ह्ययम् ॥ ५३ ॥**

इह खलु योगी सङ्कल्पात्मिका मानसीर्वृत्तीः 'निरुध्य' अन्तर्मुखीकृत्य 'चक्रस्य' एकपिण्डाद्यात्मनो मन्त्रस्य 'विश्रान्तिं' मध्यधामैकात्म्यमागतः सन् यावदुत्थाय हृद आरम्भ्य द्वादशान्तपर्यन्तं निर्गम्य पुनरन्तः प्रविश्य हृद्येव विश्राम्येत् तावदयं प्राणस्योदयो भवेदित्यर्थः ॥ ५३ ॥

---

अष्टभागों के अनुसार ८४ प्राणचारों का उदय होता है । उसी प्रकार अष्टाष्टक = ६४ पद वाले चक्र, को १२ से गुणा करने पर एक-एक १२ पद में बीस + वसु = २८ तथा ९६ के आधे के बच जाने से अष्ट भाग पादार्ध उदय होता है जिससे ६४ चक्रों की १२ से गुणा करने पर ७६८ संख्या होती है । इस प्रकार यहाँ सर्वत्र २१६०० ही प्राणचार होते हैं ॥ ४६-५१ ॥

इसी का उपसंहार करते हैं—

यह साधकों के लिए हितकारी चक्रोदय कहा गया ॥ -५२ ॥

प्रश्न—प्राणचारों के उदय के अनुसार शक्ति चक्रों का उदय होता है । वही (= प्राणचारोदय) कैसा है जिससे वह (चक्रोदय) भी होता है ?—यह शङ्का कर कहते हैं—

(साधक) मानसी वृत्तियों को रोक कर चक्र में विश्रान्ति को प्राप्त कर पुनः व्युत्थान कर जब फिर विश्राम करता है तब तक यह एक प्राणचार का उदय होता है ॥ ५३ ॥

**योगी सङ्कल्पात्मक मानसिक वृत्तियों को, रोककर = अन्तर्मुख कर, चक्र की = एक पिण्डस्वरूप मन्त्र की, विश्रान्ति = सुषुम्ना के साथ एकात्मता, को प्राप्त कर जब तक व्युत्थान को प्राप्त होकर = हृदय से लेकर द्वादशान्त तक बाहर निकलकर, पुनः अन्दर की ओर प्रवेश कर हृदय में ही विश्राम करता है तब तक यह प्राण का (एक) उदय होता है ॥ ५३ ॥**

अत्रैव त्रैरूप्यं निरूपयन् सिद्ध्यादिविभागमप्याह—

**पूर्णे समुदये त्वत्र प्रवेशैकात्मनिर्गमाः ।**
**त्रय इत्यत एवोक्तः सिद्धौ मध्योदयो वरः ॥ ५४ ॥**

अत्र पुनः सम्यक् मध्यधामैकात्म्येन प्रवेशपर्यन्तं प्राणस्योदये निर्गमे 'पूर्णे' यथोक्तगत्या परिपूर्तिं प्राप्ते प्रवेशैकात्म्यनिर्गमलक्षणास्त्रयः प्रकाराः सन्तीत्यतः प्रकारत्रयमध्यात्सिद्धिनिमित्तमैकात्म्यलक्षणो मध्योदय एव प्रवेशादपि 'वरः' श्रेष्ठ उक्त इत्यर्थः ॥ ५४ ॥

नन्वेवंवचने किं प्रमाणम् ?—इत्याशङ्क्याह—

**आद्यन्तोदयनिर्मुक्ता　　मध्यमोदयसंयुताः ।**
**मन्त्रविद्याचक्रगणाः सिद्धिभाजो भवन्ति हि ॥ ५५ ॥**
**मन्त्रचक्रोदयज्ञस्तु　　विद्याचक्रोदयार्थवित् ।**
**क्षिप्रं सिद्ध्येदिति प्रोक्तं श्रीमद्विंशतिके त्रिके ॥ ५६ ॥**

'आद्यन्तोदयौ' निर्गमप्रवेशौ, 'मध्यमोदयो' मध्यधामैकात्म्यम् । हिर्हेतौ । तेनैवं मन्त्रविद्याचक्रोदयं जानानो योगी निर्विलम्बमेव सिद्धिभाग्भवेदित्यर्थः ॥ ५६ ॥

---

यहीं पर तीन रूपों का निरूपण करते हुए सिद्धि आदि विभागों को भी कहते हैं—

यहाँ समुदय के पूर्ण होने पर प्रवेश ऐकात्म्य और निर्गम तीन (प्रकार) है । इनमें से सिद्धि के विषय में मध्यउदय ही श्रेष्ठ कहा गया है ॥ ५४ ॥

यहाँ सम्यक् = मध्यधाम की एकात्मता के द्वारा प्रवेशपर्यन्त प्राण का उदय = निर्गम, पूर्ण होने पर = उक्त रीति से पूर्णता को प्राप्त होने पर प्रवेश, ऐकात्म्य, निर्गम लक्षण वाले तीन प्रकार होते हैं । इनमें से = तीनों प्रकारो में से, सिद्धि का कारणभूत ऐकात्म्यलक्षण मध्योदय ही प्रवेश की अपेक्षा वर = श्रेष्ठ, कहा गया है ॥ ५४ ॥

इस प्रकार के कथन में क्या प्रमाण है ?—यह शङ्का कर कहते हैं—

आदि और अन्त के उदय से रहित (अत एव) मध्यम उदय से संयुक्त मन्त्रविद्याचक्रों के ज्ञाता योगी सिद्धि के भागी होते हैं ॥ मन्त्रचक्र के उदय को जानने वाला तथा विद्याचक्र के अर्थ का वेत्ता जल्दी ही सिद्धि को प्राप्त होता है यह विंशतिकत्रिक शास्त्र में कहा गया है ॥ ५५-५६ ॥

आद्यन्त उदय = निर्गम और प्रवेश । मध्यम उदय = मध्यधाम के साथ तादात्म्य । 'हि' हेतु अर्थ मे है । तो इस प्रकार मन्त्रचक्र और विद्याचक्र के उदय को जानने वाला योगी बिना विलम्ब के सिद्धि का भागी होता है ॥ ५६ ॥

ननु जितप्राणस्यारूढस्य योगिनः किं नामासाध्यं यत्र प्राणगं कुर्यात्, प्राणं जयतः पुनरारुरुक्षोः कथमेतत्सिध्येत् ?—इत्याशङ्क्याह—

**द्विस्त्रिश्चतुर्वा मात्राभिर्विद्यां वा चक्रमेव वा।**
**तत्त्वोदययुतं नित्यं पृथग्भूतं जपेत्सदा॥ ५७ ॥**
**पिण्डाक्षरपदैर्मन्त्रमेकैकं शक्तितत्त्वगम् ।**
**बह्वक्षरस्तु यो मन्त्रो विद्या वा चक्रमेव वा॥ ५८ ॥**
**शक्तिस्थं नैव तं तत्र विभागस्त्वोंनमोन्तगः ।**

आरुरुक्षुः पुनर्योगी नित्यं द्विःत्रिश्चतुर्वाभ्यासतारतम्यानुसारमेकद्व्यादिक्रमेण

'त्रिर्जानुवेष्टनान्मात्रा त्रिगुणच्छोटिकात्रयात् ।' (मा० वि० १७।१२)

इति लक्षिताभिर्मात्राभिरनेकाक्षरां विद्यामनेकपिण्डं वा चक्रमनेकपदं वा मन्त्रमेकैकं पिण्डाक्षरपदैः पृथग्भूतमेकमेव पिण्डमक्षरं पदं वा पूर्वोक्तयुक्त्या प्राणशक्तितत्त्वगतं कृत्वा तत्त्वोदययुतं मध्यधामैकात्म्येन सदा जपेत्, लक्षजपादि कुर्यादित्यर्थः । अत एव पदादिविभागशून्यो बह्वक्षर एव यः पुनर्मन्त्रादिस्तमारुरुक्षुर्योगी तावतः प्राणनिरोधस्याशक्यत्वात् शक्तिस्थं नैव कुर्यात्

---

प्रश्न—प्राणजयी आरूढ योगी के लिए क्या असाध्य है जिसको (वह) प्राणाधीन नहीं कर सकता ? और प्राण को जीतने वाले आरुरुक्षु को यह कैसे सिद्ध होता है?—यह शङ्का कर कहते हैं—

(योगी) नित्य दो तीन अथवा चार मात्राओं से विद्या अथवा चक्र को अलग-अलग पिण्डाक्षरपदों से पृथक्भूत को शक्तितत्त्वगामी बनाकर तत्त्वोदय से युक्त कर सर्वदा जप करे ।

जो अनेक अक्षरों वाला मन्त्र या विद्या या चक्र है उसे शक्तिगामी न बनाए । उसमें विभाग ॐ नमः अन्त वाला होता है ॥ ५७-५९- ॥

(साधनापथ पर) आरूढ होने की इच्छा वाला योगी प्रति दिन दो तीन या चार बार के अभ्यास के क्रम के अनुसार एक दो आदि के क्रम से

"तीन बार जानु के वेष्टन या तीन छोटिका (= चुटकी) के तिगुने से एक मात्रा होती है ।" (मा. वि. १७।१२)

इस प्रकार लक्षण बनाई गई मात्राओं से अनेक अक्षर वाली विद्या अथवा अनेक पिण्ड वाले चक्र अथवा अनेक पद वाले मन्त्र में से एक-एक को पिण्ड अक्षर और पद के द्वारा अलग हुए एक पिण्ड अक्षर या पद को पूर्वोक्त युक्ति के द्वारा प्राणशक्तितत्त्वगामी बनाकर, तत्त्वोदय से युक्त कर = मध्यधाम की एकात्मता के साथ सदा जप करना चाहिए = एक लाख जप आदि करना चाहिए । इसलिए पद आदि के विभाग से शून्य अनेक अक्षर वाला जो मन्त्र आदि उस पर आरोह की इच्छा वाला योगी, उतना प्राणनिरोध असम्भव होने से, शक्तिस्थ न करे =

शक्त्युदयमेषां न परिकल्पयेदित्यर्थः । ननु यद्येषां बह्वक्षरतया सामस्त्येन प्राणशक्तावुदयं कर्तुं न शक्यते तत्समनन्तरोक्तक्रमेण व्यस्ततयैतदस्तु—इत्याशङ्क्योक्तं—तत्रेत्यादि । ओंनमोन्तग इति, नतु मन्त्रान्तरवत् पदपिण्डादिक्रमेणैषां विभागोऽस्ति येनांशांशिकयापि शक्तावुदयः सिद्ध्येत्; अतश्चारुरुक्षुभिरेवंविधानां मन्त्राणां जप एव न कार्यः—इत्युक्तं स्यात् ॥ ५९ ॥

आरूढस्य पुनर्योगिनो न केवलं पूर्ण एव समुदये प्रवेशादित्रैविध्यं यावत्तदंशेष्वपीत्याह—

**अस्मिंस्तत्त्वोदये तस्मादहोरात्रस्त्रिशस्त्रिशः ॥ ५९ ॥**
**विभज्यते विभागश्च पुनरेव त्रिशस्त्रिशः ।**

तस्मात्पूर्वोक्ताद्धेतोः, अस्मिन् प्रक्रान्ते 'तत्त्वोदये' कार्यकारणयोरभेदोपचारात् चक्रोदये प्राणापानत्माहोरात्रस्त्रिशस्त्रिशो विभज्यते, केवल एव प्राणोऽपानो वा प्रवेशैकात्म्यनिर्गमात्मना प्रकारत्रयेण विभागमापद्यते इत्यर्थः । तेन षट्त्रिंशदात्मनोरुभयोरपि प्राणापानवाहयोः प्रत्येकं प्रवेशादित्रैविध्यमिति प्रवेशादेः प्रत्यङ्गुलद्वादशकमुदयः । एवमात्मा विभागोऽपि पुनस्त्रिशस्त्रिश एव, प्रवेशाद्यपि प्रवेश-

---

इनके शक्ति उदय की कल्पना न करे । प्रश्न—यदि अनेक अक्षर वाला होने के कारण इनका सम्पूर्णतया प्राणशक्ति में उदय नहीं किया जा सकता तो पीछे कहे गए क्रम से अलग-अलग कर इसे किया जाय ?—यह शङ्का कर कहा गया है—'तत्र' इत्यादि । ॐ नमः अन्त में होता है—न कि दूसरे मन्त्रों के समान पद पिण्ड आदि के क्रम से इनका विभाग है जिससे अंश-अंश करके भी शक्ति में उदय सिद्ध हो सके । इसलिए आरोह की इच्छा वाले योगी इस प्रकार के मन्त्रों का जप न करें—यह कहना चाहिए ॥ ५७-५८ ॥

आरूढ़ योगी की केवल पूर्णसमुदय में ही प्रवेश आदि तीन प्रकार की क्रियाये नहीं है बल्कि उसके (= समुदय के) अंशों में भी है—यह कहते हैं—

इस कारण इस तत्त्वोदय में अहोरात्र का तीन-तीन करके विभाग होता है और फिर (एक-एक) विभाग तीन-तीन बार (विभक्त होता है) ॥ -५९-६०- ॥

इस कारण = पूर्वोक्त कारण से, इस = प्रकरणप्राप्त, तत्त्वोदय में = कार्य-कारण का अभेद मान लेने से चक्रोदय मे, प्राण अपान रूप अहोरात्र का तीन-तीन विभाग होता है । अर्थात् केवल प्राण या अपान प्रवेश ऐकात्म्य और निर्गम रूप तीन प्रकार से विभक्त होता है । इससे छत्तीस संख्या वाले दोनों प्राणवाह और अपानवाह के प्रवेश आदि तीन प्रकार होने से प्रवेश आदि में प्रत्येक का बारह-बारह अंगुल उदय होता है । ऐसा विभाग भी फिर तीन-तीन ही होता है अर्थात् प्रवेश आदि भी प्रवेश ऐकात्म्य और निर्गम रूप से तीन-तीन प्रकार का

निर्गमैकात्म्यलक्षणप्रकारत्रयभाग्भवेदित्यर्थः, । तेन प्रत्यङ्गुलचतुष्टयमपि प्रवेशादीनामुदयः,—इति सिद्धम्; तदारूढस्य योगिनः परिमिते प्राणचारीयेऽप्यंशेऽप्येवं चक्रोदयः सिद्ध्येदित्यभिप्रायः ॥

एवमेतत्प्रसङ्गादभिधाय प्रकृतमेवानुसरति—

**पूर्वोदये तु विश्रम्य द्वितीयेनोल्लसेद्यदा ॥ ६० ॥**
**विशेच्चार्धार्धिकायोगात्तदोक्तार्धोदयो भवेत् ।**
**यदा पूर्णोदयात्मा तु समः कालस्त्रिके स्फुरेत् ॥ ६१ ॥**
**प्रवेशविश्रान्त्युल्लासे स्यात्स्वत्र्यंशोदयस्तदा ।**

तस्मात् 'पूर्वस्मिन्' प्रधाने मध्यधामात्मनि 'उदये विश्रम्य' तदैकात्म्येन स्थित्वा 'यदा द्वितीयेन' निर्गमात्मना प्रकारेण 'उल्लसेत्' प्राणक्रमेणोर्ध्वं गच्छेत्, अर्थात्तृतीयेनापि प्रवेशात्मना प्रकारेण 'विशेत्' अपानक्रमेण हृदन्तं प्रवेशं कुर्यात् तदा प्राणापानयोः प्रत्येकमर्धार्धिकया संबन्धात् सषट्शतसहस्रैकविंशत्यात्मन उक्तस्य कालस्यार्धेन प्राणचाराणां साष्टशतं सहस्रदशकमुदयो भवेत् । यदा पुनः 'पूर्णः' सषट्छतसहस्रैकविंशतिरूपो योऽसावुदयस्तदात्मा कालः प्रवेशविश्रान्त्युल्लासाख्ये त्रिके साम्येन स्फुरेत् तदा प्रवेशादीनां प्रत्येकं 'स्वः' आत्मीयो यः

---

होता है । इस प्रकार प्रवेश आदि का चार-चार अंगुल भी उदय होता है—यह सिद्ध हो गया । तात्पर्य यह है कि उसमें आरूढ़ योगी का परिमित प्राणचारीय अंश में भी इस प्रकार का चक्रोदय सिद्ध होता है ॥ ५९ ॥

इस प्रकार प्रसङ्गात् इसका कथन कर प्रस्तुत का अनुसरण करते हैं—

योगी जब मध्यउदय में विश्राम करके दूसरे (= निर्गम) से उल्लासित होता है और (प्राण अपान के) आधे-आधे के योग से प्रवेश करता है तब उक्त (२१६००) के आधे (= १०८०० प्राणचारों) का उदय होता है । और जब पूर्ण उदय वाला यह काल प्रवेश विश्रान्ति उल्लास नामक तीन में समान रूप से स्फुरित होता है तब अपने त्र्यंश का उदय होता है ॥ -६०-६२- ॥

इस कारण पूर्व = प्रधान = सुषुम्ना वाले, उदय में विश्राम कर = उसके साथ एकात्मरूप में स्थित होकर, जब द्वितीय = निर्गम प्रकार से (योगी) उल्लासित होता है = प्राणक्रम से ऊपर जाता है अर्थात् तीसरे भी प्रवेश नामक प्रकार से प्रवेश करता है = अपान के क्रम से हृदय तक प्रवेश करता है, तब प्राण और अपान मे से प्रत्येक के आधा-आधा से सम्बन्ध होने से २१६०० वाले उक्त काल के आधे से १०८०० प्राणचारों का उदय होता है । और जब पूर्ण = २१६०० उदय वाला कालप्रवेश विश्रान्ति और उल्लास तीनो में समान रूप से स्फुरित होता है तब प्रवेश आदि में से प्रत्येक स्व = आत्मीय जो ७२०० =

सशतद्वयसहस्रसप्तकात्मा 'त्र्यंशः' तस्योदयो भवेदित्यर्थः ॥

ननु प्राक्—

'अन्तः संविदि सर्वोऽयमध्वा विश्रम्य तिष्ठति ।' (तं० ६।२८)

इति प्रतिज्ञातं तत्कथमिह कालाध्वनः प्राण एवैवं प्रतिष्ठितत्वमुच्यते ?—इत्याशङ्क्याह—

**इत्येष कालविभवः प्राण एव प्रतिष्ठितः ॥ ६२ ॥**
**स स्पन्दे खे स तच्चित्यां तेनास्यां विश्वनिष्ठितिः ।**

'प्राण' इति प्राधान्यात् तेनापानादावपि । स इति प्राणः । 'स्पन्दे' इति सामान्यात्मिकायामाद्यप्रसररूपायां प्राणनावृत्तौ । 'खे' इति शून्यप्रमातरि । स इति मेयौत्सुक्येन बहिःसमुच्छलन्प्राणस्पन्दादिशब्दव्यपदेश्यो भवेदिति भावः । तदिति खं, चित एव स्वातन्त्र्याच्छून्यरूपत्वेन परिस्फुरणात् । तेनेत्युक्तेन पारम्पर्येण हेतुना, विश्वेति षड्विधस्याध्वनः । यद्वक्ष्यति—

'अध्वा समस्त एवायं चिन्मात्रे संप्रतिष्ठितः ।
यत्तत्र न हि विश्रान्तं तन्नभःकुसुमायते ॥

---

त्र्यंश है, उसका उदय होता है ॥ ६०-६१ ॥

प्रश्न—पहले

"यह समस्त अध्वा संवित् के भीतर विश्राम करके स्थित रहता है ।"

यह प्रतिज्ञा की गई तो कैसे यहाँ कालाध्वा की प्राण में ही इस प्रकार प्रतिष्ठा कही जा रही है ?—यह शङ्का कर कहते हैं—

यह काल का विस्तार प्राण में ही प्रतिष्ठित है । वह (= प्राण) स्पन्द में, वह (= स्पन्द) शून्य में और वह (= शून्य) चित् तत्त्व में, इस प्रकार इस (= चित्) में समस्त (अध्वाओं की) प्रतिष्ठा है ॥ -६२-६३- ॥

प्राण में—ऐसा प्रधान होने के कारण (कहा गया) इससे (यह समझना चाहिए कि) अपान आदि में भी (उसकी प्रतिष्ठा)। वह = प्राण । स्पन्द में = सामान्य आद्यप्रसररूपा प्राणनावृत्ति में । ख में = शून्यप्रमाता में । वह—मेय के औत्सुक्य के कारण बाहर उच्छलित होता हुआ प्राण स्पन्द आदि शब्द से व्यवहृत होता है । वह = आकाश; शून्यरूपा चिति शक्ति ही (अपने) स्वातन्त्र्य के कारण शून्यरूप से परिस्फुरित होती है उस कारण । इसलिए = उक्त परम्परारूप हेतु से । विश्व = छ प्रकार के अध्वा का । जैसा कि कहेंगे—

"यह समस्त अध्वा चिन्मात्र में प्रतिष्ठित है । जो उसमें विश्राम नहीं कर रहा है वह आकाशकुसुम के समान (तुच्छ) है इसलिये संविद् के द्वारा सृष्ट शून्य,

संविद्द्वारेण तत्सृष्टे शून्ये धियि मरुत्सु च।
नाडीचक्रानुचक्रेषु बहिर्देहेऽध्वसंस्थितिः ।'(तं० ८।४) इति ॥

एवं संविदधीनावेव विश्वस्य सृष्टिसंहारावित्याह—

**अतः संवित्प्रतिष्ठानौ यतो विश्वलयोदयौ ॥ ६३ ॥**
**शक्त्यन्तेऽध्वनि तत्स्पन्दासंख्याता वास्तवी ततः ।**

अतः कालस्य पारम्पर्येण संविद्येव निष्ठितत्वात् संवित्कर्तृकावेव यतो विश्वस्य सृष्टिसंहारौ, ततः शक्त्यन्तेऽध्वनि तेषां प्रागुक्तानां सृष्टिसंहाराद्यात्मनां स्पन्दानां

'तत्सृष्टौ सृष्टिसंहारा निःसंख्या जगतां यतः।
अन्तर्भूता ततः शाक्ती महासृष्टिरुदाहृता॥'

इत्याद्युक्तयुक्त्यावान्तराणां स्पन्दानामन्तर्भावात् असंख्यातापि वास्तवी सन्मात्रैकरूपत्वात् पारमार्थिकीत्यर्थः । या हि नाम बहिः कश्चन परिस्पन्दः स संवित्सतत्त्व एव—इत्यभिप्रायः ॥

न चैतदस्मदुपज्ञमेव, यावदागमेऽपि एवमित्याह—

**उक्तं श्रीमालिनीतन्त्रे गात्रे यत्रैव कुत्रचित् ॥ ६४ ॥**

---

बुद्धि, नाडी चक्रानुचक्रवर्त्ती प्राण एवं बाह्य शरीर में अध्वा की स्थिति है ।'' (तं. आ. ८।४) ॥ ६२ ॥

इस प्रकार विश्व के सृष्टि और संहार संविद् के ही अधीन है—यह कहते हैं—

इसलिए चूँकि संसार के सृष्टि और प्रलय संवित् में प्रतिष्ठा वाले हैं इस कारण शक्त्यन्त अध्वा में उन स्पन्दों की संख्या की अनुक्ति भी वास्तवी है ॥ -६३-६४- ॥

अतः = काल के परम्परया संविद् में ही प्रतिष्ठित होने से, चूँकि विश्व के सृष्टि और संहार की कर्त्री संवित् है इसलिए शक्ति पर्यन्त अध्वा में उन पहले कहे गए सृष्टिसंहाराद्यात्मक स्पन्दों का—

''चूँकि विश्व की सृष्टि में संसार के असंख्य सृष्टिसंहार अन्तर्भूत है अतः शाक्ती (सृष्टि) महासृष्टि कही गयी है ।''

इत्यादि कही गई युक्ति से अवान्तर स्पन्दों का (मुख्य स्पन्द में) अन्तर्भाव होने से अनुक्त भी संख्या वास्तवी अर्थात् सन्मात्र एक रूप होने के कारण पारमार्थिकी है । अभिप्राय यह है कि जो कोई बाह्य परिस्पन्द है वह भी संवित् तत्त्व ही है ॥ ६३ ॥

यह हमारी बुद्धि की उपज नहीं है, आगम में भी ऐसा है—यह कहते हैं—

मालिनीविजयोत्तर तन्त्र में कहा गया है कि शरीर में जहाँ कहीं भी

**विकार उपजायेत तत्तत्त्वं तत्त्वमुत्तमम् ।**

इह खलु परसंविदावेशशालिनो योगिनो यत्रैव कुत्रचिच्चक्षुरादौ गात्रे 'सर्वो ममायं विभवः' इत्यादिसङ्कल्पपूर्वक उपजायमानो यो विकारः स्पन्दस्तस्य यत्तत्त्वं सर्वभावानां स्वाविभागेनावभासनं तदुत्तमं तत्त्वं, संविदनतिरेकात्परः परमार्थ इत्यर्थः । तदुक्तं तत्र—

'यत्रैव कुत्रचिद् गात्रे विकार उपजायते ।
सङ्कल्पपूर्वको देवि तत्तत्त्वं तत्त्वमुत्तमम् ॥' इति ।
(मा०वि० १८।४२)

ननु भवतु नामैतत् तत्राप्यस्य प्राणस्य देहनिष्ठत्वेन कस्माद्रूपमुच्यते ?— इत्याशङ्क्याह—

**प्राणे प्रतिष्ठितः कालस्तदाविष्टा च यत्तनुः॥ ६५ ॥**
**देहे प्रतिष्ठितस्यास्य ततो रूपं निरूप्यते।**

तदाविष्टेति, तच्छब्देन प्राणपरामर्शः । तत इति, प्राणस्य तनावाविष्टत्वात् ॥

ननु कथं नाम देहस्य तदावेशः ?—इत्याशङ्क्याह—

**चित्स्पन्दप्राणवृत्तीनामन्त्या या स्थूलता सुषिः ॥ ६६ ॥**

---

विकार उत्पन्न हो वही तत्त्व उत्तम तत्त्व है ॥ -६४-६५- ॥

पर संविद् के आवेश वाले योगी के जिस किसी चक्षु आदि शरीरावयव में 'यह सब मेरा विभव है' इत्यादि सङ्कल्प के साथ उत्पन्न होने वाला जो विकार (= पीड़ा फूली आदि) स्पन्द, उसका जो तत्त्व = सब भावों का अपने से अविभक्त रूप में अवभासित होना, वही उत्तम तत्त्व है अर्थात् संविद् से अतिरक्ति न होने से (यह) परम परमार्थ है । वही वहाँ कहा गया है—

"हे देवि ! शरीर में जहाँ कहीं भी सङ्कल्पपूर्वक विकार उत्पन्न होता है वह तत्त्व उत्तम तत्त्व है" ॥ ६४ ॥ (मा. वि. १८।४२)

प्रश्न—ऐसा है तो हो फिर भी इस प्राण का रूप देह में कैसे कहा जाता है?—यह शङ्का कर कहते हैं—

चूँकि काल प्राण में प्रतिष्ठित है और शरीर उस (= प्राण) में आविष्ट है इसलिए इसका रूप देह में प्रतिष्ठित माना जाता है ॥ -६५-६६- ॥

तदाविष्ट—यहाँ तत् शब्द से प्राण को समझना चाहिये । इस कारण = प्राण के शरीर में आविष्ट होने के कारण ॥ ६५ ॥

प्रश्न—शरीर का उस (= प्राण) से आवेश कैसे है ?—यह शङ्का कर कहते हैं—

**सा नाडीरूपतामेत्य देहं संतानयेदिमम् ।**

प्राङ्निरूपितस्वरूपाणां चिदादीनां कार्यजननौन्मुख्यादन्त्या, अत एव चिदादेरन्तःकरणात् सुषिशब्दव्यपदेश्या या स्थूलता बहीरूपतया श्यानीभावः सा—

'पादाङ्गुष्ठाग्रतो व्यक्ता नाभितो हृदयं गता ।
सुषुम्ना नाम सा ज्ञेया ब्रह्मरन्ध्राब्जनिर्गता ।
प्राणिनां प्राणसञ्चारे निर्मिता परमेष्ठिना ॥'

इत्याद्युक्त्या प्रथमं मध्यस्थूणान्यायेन मध्यनाडीरूपतामाश्रित्य वक्ष्यमाण-प्रमाणमिमं देहं संतानयेत् सर्वतो भेदोपभेदरूपतया नाड्यन्तरोपजननात् जालवत् संतानवन्तं कुर्यादित्यर्थः ॥

अतश्चागमोऽप्येवमित्याह—

**श्रीस्वच्छन्देऽत एवोक्तं यथा पर्णं स्वतन्तुभिः ॥ ६७ ॥**
**व्याप्तं तद्वत्तनुर्द्वारिद्वारिभावेन नाडिभिः ।**

---

चित्, स्पन्द और प्राण की वृत्तियों में से जो अन्तिम सुषि (नामक) स्थूलता है वह नाड़ीरूपता को प्राप्त कर इस शरीर का विस्तार करती है ॥ -६६-६७- ॥

पहले जिनका स्वरूप बतलाया जा चुका हैं ऐसे चित् आदि के कार्य उत्पन्न करने की उन्मुखता के कारण अन्तिम, अत एव चित् आदि के आन्तर होने से सुषि शब्द से व्यवहार्य जो स्थूलता = बाह्य रूप गें सङ्कोच, वह

"पैर के अंगुष्ठ के अग्र भाग से व्यक्त होकर नाभि से होते हुए हृदय को जाने वाली (नाड़ी) को सुषुम्ना जानना चाहिए । जो कि (आगे चलकर) ब्रह्मरन्ध्र रूपी कमल से निकलती है । (यह) परमेष्ठी के द्वारा प्राणियों के प्राणसञ्चार के लिए बनाई गई है ।"

इत्यादि उक्ति के द्वारा (चित् की स्थूलता) पहले मध्यस्थूणा न्याय (= झोपड़ी खड़ी करने के लिए के लिए पहले बीच में स्तम्भ, थून्हीं, लगाते हैं) से मध्य नाडी के रूप में वक्ष्यमाण प्रमाण वाले इस शरीर को विस्तृत करती है अर्थात् चारो ओर से भेद-उपभेद रूप में दूसरी नाडियों को उत्पन्न कर जाल के समान सन्तानवान् बनाती है ॥ ६६ ॥

इसलिए आगम भी ऐसा है—यह कहते हैं—

इसीलिए स्वच्छन्दतन्त्र में कहा गया है कि जैसे पत्ता अपने तन्तुओं से व्याप्त होता है उसी प्रकार शरीर मुख्य गौण सम्बन्ध से नाडियों के द्वारा व्याप्त है ॥ -६७-६८- ॥

यथा पलाशपत्रं मध्यतन्त्ववलम्बिभिरात्मीयैस्तन्त्वन्तरैः सर्वत्र व्याप्तं तथा शरीरमपि भेदोपभेदरूपत्वेन द्वारद्वारिकया मध्यनाडिसंलग्नाभिर्गुणप्रधानभावेनावस्थिताभिर्नाडीभिरिति वाक्यार्थः । यदुक्तं तत्र—

'नाभ्यधो मेढ्रकन्दे च स्थिता वै नाभिमध्यतः ।
तस्माद्विनिर्गता नाड्यस्तिर्यगूर्ध्वमधः प्रिये ॥
चक्रवत्संस्थितास्तत्र प्रधाना दश नाडयः ।
द्वासप्ततिसहस्राणि नाड्यस्ताभ्यो विनिर्गताः ॥
पुनर्विनिर्गताश्चान्याः आभ्योऽप्यन्याः पुनः पुनः।
यावत्यो रोमकोट्यस्तु तावत्यो नाडयः स्मृताः।
यथा पर्णं पलाशस्य व्याप्तं सर्वत्र तन्तुभिः ।'
(स्व०तं० ७।११) इति ।

ननु 'मारुतापूरिताः सर्वाः' इत्याद्युक्त्या सर्वा एव तावन्नाडयः प्राणवहाः, ताभिश्च निखिलमेव शरीरं व्याप्तमिति नास्त्यत्र विमतिः, तत्कथं हृदयाद् द्वादशान्तं मत्तगन्धस्थानं वा यावत्षट्त्रिंशदङ्गुल एव प्राणचार उक्तः ?—इत्याशङ्क्याह—

**पादाङ्गुष्ठादिकोर्ध्वस्थब्रह्मकुण्डलिकान्तगः ॥ ६८ ॥**
**कालः समस्तश्चतुरशीतावेवाङ्गुलेष्वितः ।**

---

जैसे पलाश का पत्ता मध्यतन्तु के अधीन रहने वाले अपने तन्त्वन्तरों से सर्वत्र व्याप्त होता है उसी प्रकार शरीर भी भेदोपभेद रूप में गौण मुख्य भाव से मध्यनाडी से संलग्न तथा गौण मुख्यभाव से स्थित नाडियों के द्वारा (व्याप्त है)—यह वाक्यार्थ है । जैसा कि वहाँ कहा गया है—

"हे प्रिये ! नाभि के नीचे मेढ्रकन्द में स्थित और उस नाभि के बीच से नाड़ियाँ तिर्यग् ऊपर और नीचे की ओर निकली हुई है । उनमें प्रधान दश नाड़ियाँ चक्र की भाँति स्थित है । उनसे फिर ७२००० नाडियाँ निकली हुई है । इनसे फिर दूसरी और उनसे फिर अन्य (निकली हुई हैं) । जिस प्रकार पलाश का पत्ता सर्वत्र तन्तुओं से व्याप्त है उसी प्रकार जितने रोम कूप है उतनी नाड़ियाँ (शरीर में व्याप्त) मानी गई है ।" (स्व. तं. ६।११)

प्रश्न—"सब (नाड़ियाँ) वायु से आपूरित हैं" इत्यादि उक्ति के द्वारा सभी नाडियाँ प्राणवाहिनी है और उन नाडियों से पूरा शरीर व्याप्त है इस विषय मे किसी को मतभेद नहीं है तो हृदय से लेकर द्वादशान्त तक या गुदप्रदेश तक ३६ अंगुल का ही प्राणचार कैसे कहा गया ?—यह शङ्का कर कहते हैं—

पैर के अंगूठे से लेकर ऊपर ब्रह्मबिल के अन्त तक वर्त्तमान समस्त काल चौरासी अंगुल में ही हैं । (पादांगुष्ठ के) नीचे द्वादशान्त तक ९६

**द्वादशान्तावधिं किंचित्सूक्ष्मकालस्थितिं विदुः ॥ ६९ ॥**
**षण्णवत्यामधः षड्द्विक्रमाच्चाष्टोत्तरं शतम् ।**

उर्ध्वस्था ब्रह्मकुण्डलिका ब्रह्मबिलं, समस्तः प्रागुक्तः कालश्चतुरशीतावङ्गुलेष्विति सार्धत्रिहस्तात्मकत्वात् देहस्य । इत इति, गतः स्थित इत्यर्थः । षण्णवत्यामङ्गुलेष्विति पूर्वतो योज्यम् । तथात्वे च द्वादशानामङ्गुलानामाधिक्येनोपादानात् सूक्ष्मशब्दसन्निधेः पूर्वापरयोर्मानयोः स्थूलत्वं परत्वं चार्थसिद्धम् । अध इति पादाङ्गुष्ठात् । षड्द्विक्रमादिति, षण्णां द्वियोंऽसौ द्वादशाङ्गुलात्मा क्रमस्तस्माद्यदूर्ध्व इवाधोऽपि द्वादशान्तः संभवेदिति भावः ॥

नन्वेवं देहस्य मानवैचित्र्ये प्राणादेरपि कश्चिदतिशयो न वा ?—इत्याशङ्क्याह—

**अत्र मध्यमसञ्चारिप्राणोदयलयान्तरे ॥ ७० ॥**
**विश्वे सृष्टिलयास्ते तु चित्रा वाय्वन्तरक्रमात् ।**

अत्र त्रिप्रकारप्रमाणावच्छिन्ने देहे प्राधान्यान्मध्यवाहिनः प्राणस्य ये उदयलया निर्गमप्रवेशास्तदन्तराले विश्वे प्रागुक्तकलना एव सर्वे सृष्टिसंहारा भवन्ति, किंत्वेषामपानवाय्वन्तरक्रमादेव प्राग्वद्वैचित्र्यं नतु देहवैचित्र्यादित्यर्थः ॥

---

अंगुलो में १२ से लेकर १०८ तक क्रमशः कुछ सूक्ष्म काल तक (प्राण की) स्थिति मानते हैं ॥-६८-७०- ॥

ऊपर स्थित ब्रह्मकुण्डली = ब्रह्मबिल, समस्त पहले कहा गया काल चौरासी अंगुलो में रहता है क्योंकि शरीर ३।१।२ हाथ का होता है । इतः = गया है = स्थित है । ९६—(यहाँ) अंगुलों में (इतना) पहले से जोड़ लेना चाहिए । वैसा होने पर १२ अंगुल अधिक ग्रहण करने से 'सूक्ष्म शब्द का कथन होने के कारण पूर्व और पर मान की (क्रमशः) स्थूलता और परता अर्थात् सिद्ध होती है । नीचे—पैर के अंगूठे के । षड्द्विक्रमात्—छ का दो गुना जो यह १२ अंगुलरूप क्रम, उससे जो ऊपर की भांति नीचे भी द्वादशान्त संभव है ॥ ६८-६९ ॥

प्रश्न—इस प्रकार शरीर का विचित्र परिमाण होने पर प्राण आदि का भी कोई अतिशय होता है या नहीं ?—यह शङ्का कर कहते हैं—

इस (= शरीर) में मध्यसञ्चारी प्राण के उदय और लय के बीच समस्त सृष्टि और प्रलय होते हैं । और वे वायु के अन्तर के क्रम से विचित्र होते हैं ॥ -७०-७१- ॥

यहाँ = तीन प्रकार के परिमाण से परिमित देह में, प्रधान रूप से मध्यवाही प्राण के जो उदय लय = निर्गम और प्रवेश है उनके बीच में सभी = जिनकी गणना पहले की गई है वे सब, सृष्टि संहार होते हैं । किन्तु अपान वायु के

इदानीमाह्निकार्थमेव श्लोकस्य प्रथमार्धेनोपसंहरति—

**इत्येष सूक्ष्मपरिमर्शनशीलनीय-**
**श्चक्रोदयोऽनुभवशास्त्रदृशा मयोक्तः ॥ ७१ ॥**

सूक्ष्मपरिमर्शनेत्यनेन अत्यन्तमस्यावधानगम्यत्वमुक्तमिति शिवम् ॥

प्रतिनियतमन्त्रसमुदयचारभिदनुभवनिभालनोद्युक्तः ।
सप्तममाह्निकमेतद्व्याकृतावाञ्जयरथाभिख्यः ॥

**॥ इति श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तविरचिते श्रीतन्त्रालोके श्रीजयरथविरचितविवेकाभिख्यव्याख्योपेते चक्रोदय-प्रकाशनं नाम सप्तममाह्निकं समाप्तम् ॥ ७ ॥**

*

---

अन्तरक्रम के कारण ही इनका पहले की भाँति वैचित्र्य होता है न कि देहवैचित्र्य के कारण ॥ ७० ॥

अब इस आह्निक के विषय का आधे श्लोक से उपसंहार करते हैं—

इस प्रकार यह सूक्ष्म परामर्श से जानने योग्य चक्रोदय अनुभवशास्त्र (शैवागम) की दृष्टि से मेरे द्वारा कहा गया ॥ -७१ ॥

**॥ इस प्रकार श्रीमदाचार्यअभिनवगुप्तपादविरचितश्रीतन्त्रालोक के सप्तम आह्निक की डॉ० राधेश्याम चतुर्वेदी कृत 'ज्ञानवती' हिन्दी टीका सम्पूर्ण हुई ॥ ७ ॥**

सूक्ष्म परिमर्शन—इस (कथन) के द्वारा यह शैवागम अत्यन्त ध्यान के द्वारा जानने योग्य है—यह कहा गया ॥

**॥ इस प्रकार आचार्यश्रीजयरथकृत श्रीतन्त्रालोक के सप्तम आह्निक की 'विवेक' नामक व्याख्या की डॉ० राधेश्यामचतुर्वेदीकृत 'ज्ञानवती' हिन्दी टीका सम्पूर्ण हुई ॥ ७ ॥**

*